पत्यपदमैन्द्र्योपतिष्ठत इति एतेनैकवाक्यता गच्छति । यस्तु द्वितीया न्तगार्हपत्यशब्दश्रवणाद्देवार्थं प्रतीयते गार्हपत्यप्राधान्य । लिङ्गेन विरुध्यते अतो न केवलं वाक्यं न केवला श्रुतिर्लिङ्गेन विरुध्यते वाक्यसहिता तु श्रुतिर्विरुध्यते कथं पुनरेवमुभयविरोधे सत्यपि श्रुतिविरोध एव व्यव- ह्रियते? न वाक्यविरोधः श्रुतेः प्राधान्यात् विनियोगो हि प्रमेयं स च साध्यसाधनरूप —

श्रुत्यैवोक्त, वाक्यं तु प्रतियोगिविशेषसमर्पणेन श्रुतिमनुगृह्णद्गुणभूत, प्रधानेन च विरोधो लक्ष्यते न गुणेन अथ वापरो विशेषो येन श्रुतेरेवात्र लिङ्गेन विरोधो न वाक्यस्य, यत्र हि लिङ्गे बलीयसि बाधस्तल्लिङ्गेन विरु ध्यते न वाक्यं लिङ्गे बलीयसि वाक्यं शक्यते बाधितुं, तद्बाधे हि पृथग्भूते गार्हपत्यैन्द्रीपदे न कञ्चिदर्थं प्रतिपादयतः पदमात्रस्याप्रामाण्यात् तत्र श्रुतेरप्यत्यन्तबाधो वाक्यस्य च, यत्र तु पृथग्भूतस्याप्यर्थप्रतिपादकत्वं न विहन्यते यथा स्योनादिषु तत्रैव वाक्यबाधो नैवत्रासीयकेषु, ततश्चासंभ- वति वाक्यस्य बाधे श्रुतिरेव बाध्येतेति श्रुतिलिङ्गयोरेवैष विरोध इति युक्तो विचारः किं बलीय इति, तदर्थं च किं श्रुतिवल्लिङ्गाद्यपि स्वतः प्रमाण? उत श्रुतिकल्पनेनेति? तत्र स्वतः प्रमाणत्वं लिङ्गादेः श्रुतिवन्मतम् । सामर्थ्यालोचनादेव साध्यं हि प्रतीयते ॥ १ ॥ गार्हपत्यार्थता श्रुत्यैन्द्र्य योस्तुल्यकालता । तत्र द्वयोरुपस्थानं विकल्पेन भविष्यति ॥ २ ॥ समुच्चयेन वा मन्त्रः प्रयुज्येत द्वयोरपि । प्रतिप्रधानमावृत्तिर्गुणानां न विरुध्यते ॥ ३ ॥ यद्यपि स्याद्बलीयस्त्वं श्रुतेर्लिङ्गात्तथापि तु । अविरोधादबाधः स्यात् सम्भवो हि समुच्चयः ॥ ४ ॥ यद्वा सामर्थ्यरूपत्वाल्लिङ्गं स्यात्प्रबलं श्रुतेः । वस्तुश त्त्यनुसारो हि सर्वो शब्दः प्रवर्तते ॥ ५ ॥ अत्राभिधीयते, सत्यं प्रपत्य न्तमशक्यता । गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते ॥ १ ॥ गुणाद्वा ऽप्यभिधानं स्यादित्यत्रैतद्धि साधितम् । तत्र तावद्बलीयस्त्वं लिङ्गस्य न च तुल्यता ॥ २ ॥ विनियोगः श्रुतेः पश्चाल्लिङ्गस्यातादसौ स्थितः । यावदेव हि मन्त्रार्थोमन्त्रेण प्रतिपाद्यते ॥ ३ ॥ तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थता

१ मुख्यकल्पनेति पा ।

नयेत् । मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छाब्दं निरूप्य च ॥ ४ ॥ मन्त्राकाङ्क्षावशेनेन्द्रशेषत्वे श्रुतिकल्पना । श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते ॥ ५ ॥ निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना । तेन शीघ्रप्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम् ॥ ६ ॥ प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् । शीघ्रमन्थरवृत्तित्वात्तथेह श्रुतिलिङ्गयोः ॥ ७ ॥ अविरोधादबाधो यो दर्शितः स न युज्यते । लिङ्गस्य हि प्रमाणत्वं मन्त्राकाङ्क्षानिबन्धनम् ॥ ८ ॥ तां च श्रुतिनिंह्नन्ती नाविरोधेन गच्छति । विरोधे च श्रुतिर्लिङ्गं बलीयस्त्वेन बाधते ॥ ९ ॥" लिङ्गवाक्यविरोधे स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधसुमनस्यमान" इति, तत्र संशयः किं सकलोऽयं सदनकरणे पुरोडाशप्रतिष्ठापने च विकल्पेन समुच्चयेन वा प्रयोक्तव्य ? उत सकलो ? वा विभज्य वा ? यथवा विभज्यैव स्योनादिः कल्पयाम्यन्तः सदनकरणे ? तस्मिन् सीदेति प्रतिष्ठापने ? इति तत्र यदि वाक्यं बलीयस्ततः सकलमेवोभयत्र, तुल्यबलत्वे सकलं वा विभज्य वा, लिङ्गबलीयस्त्वे तु विभज्यैवेति तत्र, "यावन्ति हि प्रयुज्यन्ते पदानि सति संभवे । तेषां स्यादेकवाक्यत्वं वाक्यभेदो न युज्यते ॥ १ ॥ तस्मिन्सीदेति पूर्वोक्तसापेक्षत्वाच्च गम्यते । वाक्यैकत्वमतः सर्वमुभयत्र प्रयुज्यते ॥ २ ॥ यद्वा तुल्यबलत्वं स्यादुभयोर्लिङ्गवाक्ययोः । श्रुत्या प्रत्यक्षया लिङ्गं कल्प्यश्रुतिनिराकृतम् ॥ ३ ॥ कल्प्यश्रुतित्वमिह तु समानमुभयोरपि । तेन तुल्यबलत्वं स्यादिति प्राप्तेऽभिधीयते ॥ ४ ॥ सत्यं कल्प्या श्रुतिः किं तु लिङ्गाद्द्राक् कल्प्यते । वाक्येन प्रथमं लिङ्गं कल्पयित्वा ततः श्रुतिः ॥ ५ ॥ कल्पनीयेत्यतो वाक्याच्छ्रुत्यर्थो विप्रकृष्यते । संनिकृष्टस्तु लिङ्गस्य तेनैतस्य प्रबलत्वमतः ॥ ६ ॥ स्योनं ते सदनं कृणोमीत्यस्य हि सदनकरणसामर्थ्यमनन्यापेक्षं स्वरूपत एव प्रत्यक्षमवगम्यते, ततश्च तत्र श्रुतिमनुमाय शीघ्रं विनियुज्यते, पुरोडाशप्रतिष्ठापने त्वस्य न स्वरूपतः सामर्थ्यं गम्यते, तस्मिन् सीदेत्यनेन प्रतिष्ठापनमुच्यते तदेकवाक्यतापेक्षया पूर्वांशस्यापि स्वार्थविशिष्टपुरोडाशप्रतिष्ठापनसामर्थ्यं तावदिकं कल्पयित्वा ततः श्रुतिकल्पनमिति विप्रकर्षाच तत्र विनियुज्यते एवं तस्मिन्सीदेत्यस्यापि स्वार्थसामर्थ्यं कृतं

मिति तत्रैव विनियोगो न सदनकाले कल्प्यसामर्थ्यत्वात् सामर्थ्यभेदेन नानावाक्यत्वोपगमाद्वैकवाक्यतासम्भव , तस्माद्विभज्य विनियोगो वाक्य प्रकरणयोर्विरोधे विनिते दर्शपौर्णमासयो सूक्तवाकनिगद तथाग्नीषोमा विद हविरजुषेतामवीवृधेता महोज्यायोऽक्राताम् इन्द्राग्नी इद हविरजुषेता मवीवृधेता महोज्यायोऽक्रातामित्यादि श्रुत तथाग्नीषोमादिदेवतापद लिङ्गात्पौर्णमास्यामपि निष्कृष्य प्रयोक्तव्यमिति स्थित तदेकवाक्यभूतानीद हविरजुषेतामित्यादीनि यानि तानि नतोऽविच्छिद्यान्यत्रापि किं प्रकरणा द्विनिपात्य प्रयुज्येरन्? उत देवतापदैरेकवाक्यतया तद्वदेव व्यवस्थितानी? ति । नन्वारादुपकारकाणामेव प्रकरणं विनियोजक न सन्निपातिनाम् "असंयुक्त प्रकरणा दिन्युक्त सन्निपातिनश्च सर्वे श्रुत्यादीनामन्यतमेन संयुक्ता भवन्ति, सन्निपाती च सूक्तवाक श्रुत्या प्रहरणसाधनत्वाल्लिङ्गेन च देवतासंस्मा रकत्वात् तदन्तर्गतस्यैव हविरजुषेतामित्यादेः संयुक्तत्वात् न प्रकरण तेषा विनियोजक, सम्भवति च विनियोजकत्वे विरोधो नास्ति, तस्मा दत्र वाक्यप्रकरणयोर्विरोध इत्यनुदाहरणमेत्स्यादेतदेव यदि सन्निपातिना प्रकरण न विनियोजक स्यात् न तु तथा अवघातादीनामपि प्रकरणा देव क्रतुभावनैकदेशत्वानुकूलानां क्रत्वर्थत्वम् । असंयुक्तमिति तु न प्रक रणाद्यस्य विशेषण किं तु पूर्वपक्षवादी श्रुत्यादीनामेव विनियोज कस्य तदसंयुक्तस्य नास्ति विनियोग इति मन्यते त प्रत्युच्यते श्रुत्य- असंयुक्तमपि प्रकरणेन विनियुज्यत इति । यद्वा प्रकरणविरोधार्थतया नाभिप्रायमसंयुक्तपदस्य तत्र्यैतदधिकरणसिद्धबलाबलाङ्गीकारेणोक्तम् एतो युक्तमुदाहरणम् । ये त्वारादुपकारकेष्वेव प्रकरणस्य व्यापार सन्निपातिना तु वाक्यपदव्यापेन प्रमाणेन तादर्थ्यमन्यस्याशिनिर्दिक्तेनापूर्वार्थत्व, द्वारे दमर्थ्य तु श्रुत्यादिभिरौपादानिक कल्पार्थत्व, प्रकरणस्य तु न कश्चिद् व्यापार इति मन्यन्ते तेषामेवाय सूक्तवाकपदाना श्रुत्या प्रहरणविनियु क्ताना प्रकरणाविषयत्वादिद वाक्यप्रकरणविरोधोदाहरण युक्तमित्युपाल म्भोऽतास्माक, तत्र द्वयोरपि वाक्यप्रकरणयो प्रमाणत्वात् श्रुतिकल्पना धीनत्वसाम्यादन्यस्य च विप्रकर्षकारणस्याप्यकथितत्वात्तुल्यबलत

मन्यन्ते । यद्वा प्रधानाकाङ्क्षा प्रकरणं, प्रधानार्थं च सर्वमिति तन्निबन्धन एव विनियोगो बलीयानिति प्राप्तेऽभिधीयते "यत्रैकवाक्यता तत्र सामर्थ्यं गम्यते मनाक् । सामर्थ्याच्च श्रुतिः श्रुत्या विनियोगोऽयमत्र तु ॥ पूर्वयोरेक वाक्यस्य कल्प्य स्यात्प्रक्रियावशात् । ततो लिङ्गं श्रुतिः पश्चाद्विनियोगस्ततः परः ॥ अग्नीषोमाविदं हविरजुषेतामित्यग्नीषोमपदस्येदं हविरित्यादेरेक वाक्यत्वं क्लृप्तम् एकवाक्यतयाऽग्नीषोमप्रकाशनसामर्थ्यमिदं हविरित्यादेः शीघ्रं कल्प्यते, ततश्च श्रुतिस्तया विनियोग इति सविकर्षः, इन्द्राग्नीपदेन त्वत्र-त्यस्येदं हविरित्यादेरेकवाक्यत्वं न प्रत्यक्षतोऽवगम्यते, किन्तु प्रकरणात्तु दर्शपूर्णमासाभ्यामिदं हविरित्यादेरेकवाक्यता कल्प्यते अनेन दर्शपूर्ण मासयोरुपकुर्यादिति, तत्र कोऽस्योपकारः? इति तदीयदेवतापदैकवाक्यतया तत्प्रकाशनसामर्थ्यं चिरेण कल्पयित्वा ततः श्रुतिकल्पनेन विनियोग इति विप्रकर्षाद्दुर्बलं वाक्यात्प्रकरणम् । अथ स्थानप्रकरणयोर्विरोधे चिन्त्यते राज-सूये बहवः पश्विष्टिसोमयागाः सर्वे फलवन्तः समप्रधानास्तत्राभिषेचनीयो नाम सोमयागस्तस्य विधौ विदेवनादयः समाम्नातास्ते किं सर्वं राजसूयाङ्ग-मुताभिषेचनीयस्यैवे ? ति यदि सन्निधेरभिषेचनीयाङ्गम् । अथ प्रकरणि-त्वाद्राजसूयस्यैवेति, तत्र सन्निधिविशेषादभिषेचनीयाङ्गत्वे प्राप्ते उच्यते प्रक रणाविशेषात्सर्वार्थता, नन्वभिषेचनीयस्यापि फलवत्त्वादस्त्येव प्रकरणं यद्य प्यस्ति तथाऽप्यन्येषामप्यस्तीति तादर्थ्यमपि युक्तं यद्वि परमविशेषतः सर्वे षामाकाङ्क्षायामपि पाठसन्निधिविशेषादभिषेचनीयस्य विशेषतः आकाङ्क्षां कल्पयित्वा तादर्थ्यं स्यात् ततश्च विप्रकर्षः, सर्वार्थता तु क्लृप्ताकाङ्क्षातः सुखं गम्यते अभिषेचनीयाङ्गत्वं स्वाकाङ्क्षाकल्पनयेति । एतेनाग्नेयादीनां धर्म-साधारण्यं व्याख्यातम् । अपि च नास्त्यभिषेचनीयस्य प्रकरणं प्राकृतेनेत्थं-भावेन कथंभावाकाङ्क्षापूरणात् । नन्वन्येषामपीष्टिपशुप्रधानां विकृतित्वादा-स्त्येव प्रकरणं सत्यं, प्रातिस्विकेन रूपेण नास्ति राजसूयात्मना त्वस्त्येव कथं श्रुत्यादिविहिताङ्गसम्बन्धात् तद्रूपेण न हि निवृत्ताऽप्याकाङ्क्षा पुनरुत्प स्यते पवित्रवाद्यारम्भ वचनस्य विहृति यावदङ्गविधिषु प्रायेण राजसूयस्य श्रेता उत्पुनाति राजसूयेनेजानः सर्वमायुरेतीति राजसूयपरामर्शसामान्त दर्शम

कलयस्य प्रकृतित्वेनापेक्षमाणा न सहते तेन श्रुत्यविरोधाज्ज्योतिष्टोमस्य तुल्ये प्राप्ते ब्रूमः "साद्गुण्यादर्थान्तरं तावदहीन इति गम्यते। रूढिश्चैव द्विरात्रादौ सा ॥ योगाद्गुणोपेते ॥ तत्रापि यौगिकत्वं चेत्तत्र सत्रेष्वप्रयोगतः मध्योदात्तः पदं चेदमतः स्वरान्यथात्वता ॥ साह्नशब्देन ज्योतिष्टोममभिधाय पुनरहीन इत्युच्यमानं संज्ञाभेदादेव तावदर्थान्तरं गम्यते रूढा च द्विरात्रादिविषयत्वात् योगेन ज्योतिष्टोमे वर्तितुमर्हति। ननु द्विरात्रादावपि यदुक्तं समूह इत्येव योगेनैव वृत्तिः न सत्रेष्वप्रयोगात् किं च नञ्समासत्वेऽव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं स्यात् मध्योदात्तस्त्वयं पदम् अतः स्वरान्यथात्वं तथा सत्यावनादिपूर्वपदविशिष्टत्वेन स्वरसिद्धावप्यस्मिन्नभीनादिशब्दस्यैवोपदेशित्वात्तत्स्वरान्यथात्वेऽन्यकारे स्वरः सिद्धो भवति, तस्मादहीनशब्दस्य रूढत्वात्तद्विषयमेव द्वादशोपसत्त्वं षष्ठीश्रुत्या गम्यते ननु पृथग्विधीयते, वाक्यान्तरप्राप्तं वा उपसत्त्वस्तुत्यर्थमनूद्यते सर्वथा तावद् द्वादशाहीनस्यैवेत्यहर्गणविषयमिति सिद्धम् ॥

कुलाये द्वौ प्रतिप द्वैयजमान्याधिकरणम्। सू० द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य ॥ ८ ॥

ज्योतिष्टोमे श्रूयते "एष ह वा स्वर्पती" इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात् एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य इति तत्र सन्देहः किमिमे प्रतिपदौ ज्योतिष्टोमे? उत द्विबहुयजमानकेषु कुलायाहीनादिषूत्कृष्येते? इति, तदर्थं च किं ज्योतिष्टोमे द्वौ बहवश्च यजमानाः सम्भवन्त्युत नेति तत्र श्रौतात्सम्भवापि नित्यस्य प्रयोगो येन कल्प्येत तेन तस्य विहाय द्वौ बहवो वा प्रयुञ्जते यद्यपि नित्यशब्दोऽपि वसन्ते वसन्ते ज्योतिषा यजेतेत्याद्यास्तेनावगुणभूतेऽपि ह्येककर्तृत्वमेकत्वं विवक्षितं तथाऽपि नित्योऽशक्तिकृतानां तथा नाभ्युपगमः यज्ञेऽसौ न भाक् यासद्ब्राह्मणानामेकत्वं विहाय द्वौ बहवो वा यजेरन् तदा प्रयोगेन प्रतिपदुपधानं प्रकृतावेवोपपन्नमिति नोत्कर्षः नैतदेवमशक्याद्गुणपादेयं हि श्रूयते ह्यनुपादेयमेकत्वं यजमानस्य कालवत् 'सोमेन यजेत' "वसन्ते वसन्ते ज्योतिषा यजेत' इत्युत्पत्तिप्रयोगचोदनयोः श्रुतमेकत्वमपरित्यज्याहीनान्तरस्यैव

त्यागो युक्तः । किञ्च यत्खलूपादेयमङ्गं यजमानस्य चोद्यते तद्विषय एव यथाशक्त्युपबन्धः, यत्त्वनुपादेयं कालवत् तत्रैवमुपबन्धः तदपेक्षस्तु विधिस्तद्वन्तमधिकृत्य प्रवर्तते अनुपादेयं च यजमानस्यात्मीयमेकत्वम् अत एको यथा शक्त्यादित्युपबन्धादङ्गान्तरं दक्षिणापरिमाणादि परित्यज्यैक एव प्रवर्तत इति प्रकृतौ द्वित्वबहुत्वयोरभावात् षष्ठीशून्या तत्संयुक्तयोः प्रतिपदोस्तद्वत्सु कुलायादिषूत्कर्षः, न च यत्यभिप्राय द्वित्वबहुत्वं युक्तं यजमानशब्देनापदेषु स एव सर्वदाभिधानात् पत्न्यास्तु पत्नीशब्देनैवाभिधानात्, बहुष्व इति विरूपैकशेषस्य प्रमाणमन्तरेण दुरुपपादत्वात् अपि च यजमानयोरिति यजमानशब्दस्य कर्तृवचनत्वात्कर्तृद्वित्वं प्रतीयते, न च पत्न्यभिप्रायेण कर्तृद्वित्वं सम्भवति दम्पत्योर्हि व्यासक्तं कर्तृत्वमग्नीषोमयोरिव देवतात्वम् अतस्तत्रैकवचनमेव स्यात्, यथा फलवाक्ये स्वर्गकामो यजेतेति अधिष्ठानाभिप्रायत्वे लक्षणा स्यात् । तस्मादुत्कर्षः ॥

जाघन्या अनुत्कर्षाधिकरणम् ।

सू० जाघनी चैकदेशत्वात् ॥ १० ॥

दर्शपूर्णमासयोः पत्नीसंयाजानधिकृत्य श्रूयते "जाघन्या पत्नीः संयाजयन्ती"ति तत्र चिन्ता किमिदं विधानं पशावुत्कृष्यते? उत ने?ति यदि जाघनीं कृतार्थामुद्दिश्य पत्नीसंयाजाः संस्कारा विधीयन्ते ततो वाक्यवशेनोत्कर्षः । अथ पत्नीसंयाजानां जाघनीद्रव्यं विधीयते ततोऽनुत्कर्षः तत्रारादुपकारकात्मामप्राधिकस्य गरीयस्त्वाज्जाघनीशब्दस्य चोत्तरार्द्धादिशब्दवदेकदेशवचनत्वादेकदेशद्रव्याणां च विद्यमानैकदेशसंयोगात्पत्र परप्रयुक्तपश्वनुनिष्पन्ना जाघनी विद्यते तत्र तस्याः संस्कारत्वेन पत्नीसंयाजसन्निधानमिति प्राप्तेऽभिधीयते जाघनी हि गुणत्वेन तृतीयोक्त्याऽवगम्यते पत्नीसंयाजयागाश्च द्रव्यापेक्षाच्छ्रुताः तेनैतेषां गुणत्वेन जाघन्यत्र विधीयते' न च सापेक्षत्वमित्युत्तरार्द्धादिशब्दवत् उत्तरार्द्धादिशब्दा हि परापेक्षयैव स्वार्थं बोधयन्तो युक्तं यत्परप्रयुक्तमेकदेशिनमपेक्षन्ते, जाघनीशब्दस्त्ववयवविशेषवचनो न किञ्चिदपेक्षते अतो निर्मूला स्यादस्योत्कर्षकल्पनेति दर्शपूर्णमासयोरेव निवेशः ॥

प्रकृते तदस्तीत्युत्कर्षः, अन्यः पक्षः दीर्घसोम इति षष्ठीसमासोऽयं दीर्घस्य यजमानस्य सोमः, स च प्रकृतावपि संभवतीत्यनुत्कर्षः. नैवं समानाधिकरणसमासस्य बलीयस्त्वात् धृत्या इत्यर्थवादानुपपत्तेश्च, न हि यजमानदैर्घ्याद्वारणे कश्चिद्विशेषो भवति तस्मात्कर्मापेक्षमेव दीर्घत्वमित्युत्कर्षः स च द्विरात्रादिष्वेव न संस्थासु, तत्रापि चोदकप्राप्तस्य दशमुष्टिसोमस्य तावत एवाभिषवात् धृत्या इति च वाक्यशेषानुपपत्तेः । ननु तत्रापि प्रदानविशेषाऽयोग्यद्रव्यविरोधा भवितव्यं नाचोदकप्राप्तत्वात्सोमपरिमाणस्य, प्रदेयविशुद्धिस्तु सोमादिना संपादनीया, तस्माद् द्विरात्रादिष्वेवोत्कर्ष इति प्राप्तेऽभिधीयते गृह्णीम एतदुत्कर्ष इति न तु द्विरात्रादिष्वेव किन्तु अग्निष्टोमाधिकमात्रे दीर्घशब्दोपपत्तेः अविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्षः. संस्थासु चाहत्यवेलप्रदेयविशुद्धिः, न च चोदकप्राप्तपरिमाणविरोधः दीर्घपर्वसोमग्रहणेन दशमुष्टित्रिपर्वपरिमाणयोरविरोधात्, अपि च न दशमुष्टित्रिपर्वपरिमित एव प्रकृतौ सोमः प्रतिशिष्टानामंशूनामुपसमूहनवचनात्तत्र परिमाणाभावः, श्रूयते हि "यावत्तावानेव सोमः स्यात्तावन्तं मिमीते यजमानस्यैव स्यात्तावपि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूहति सदस्यानेवान्वाभजती"ति तस्मादस्ति प्रदेयवृद्धिः अग्निष्टोमसंस्थासु सत्यां च धृत्या इति वाक्यशेषोपपत्तिः, अतोऽविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्षः न तु संस्थास्वेवेति ध्येयम् । अविशेषादेव, न च प्रकरणाद्विशेषः संस्थानां प्रकरणाभावात् अतो वाक्येनैव सम्बन्धः तच्चाविशिष्टमिति सर्वगामिता ॥

पशुसंनिषेधस्य प्रथमयोगविषयताधिकरणम् ।

## सू० संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ १२ ॥

ज्योतिष्टोमेऽस्ति पश्वर्थः "पुरस्तादुपसदां पशवे प्रकृत्या"ति तं प्रकृत्य श्रूयते "न प्रथमयज्ञे पशुश्लेया" इति, तत्र संशयः किं ज्योतिष्टोमाङ्गमयं प्रतिषेधः? अथ प्रथमप्रयोगाङ्ग? मिति, यदि प्रथमयज्ञशब्दो ज्योतिष्टोमनाम ततो वाक्यप्रकरणाभ्यां ज्योतिष्टोमाङ्गम् । अथ प्रयोगवचनस्ततो वाक्येन प्रकरणं बाधित्वा प्रयोगाङ्गतेति तत्र यज्ञ–शब्दस्य यागवचनत्वात्प्रथमशब्दस्य

न तद्विशेषणस्याग्रयणनामता तत्रापि प्रकरणाज्ज्योतिष्टोमनामता, विस्पष्ट च वाक्यान्तरे सामानाधिकरण्यम् 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम' इति प्रवृत्तिनिमित्तस्य विद्यमानत्वात्, स हि प्रथमं प्रयुज्यते "य एतेनानिष्ट्वे'ति वचनात् तस्मात् वाक्यात्प्रकरणाच्चाय क्रत्वङ्गं तदुच्यते वाक्यादेव प्रयोगाङ्गं प्रयोग प्रथमो यज्ञ । प्रथमशब्देन हि यज्ञप्रवृत्तपूर्वस्य क्रतोराद्य प्रवर्तन तदुच्यते न तु क्रतु कश्चित् स [illegible] प्रयोगविषयत्वात्तत्र यथा गम्यते । नन्वितरत्रापि यज्ञशब्देन लक्षणया प्रयोगो वर्तितव्य स्यात् नाय दोष, जघन्यो हि यज्ञशब्दो लक्षणयाऽपि नीयमानो न दुष्यति मुख्यस्तु प्रथमशब्द श्रुतिश्रुतो ग्रहीतव्य "एष वाव प्रथम" इति "य एतेनानिष्ट्वे"त्यस्यार्थवादत्वात्प्राकृतफलकल्पनया नामधेयस्यप्रवगमयितुमल त स्मात् प्रयोगाङ्ग, प्रथमयज्ञे प्रयोगे न प्रसज्यतादिति यत्त्वग्निष्टोमे प्रथमतीति वाक्यान्तर तदनन्यार्थत्वात्प्रथमप्रयोगविषयमेव प्रतिपत्तुमर्हति प्रयोगार्थे तेनाग्निष्टोमप्रथमप्रयोगे विकल्प स च व्यवस्थित वचनान्तरात् तथा हि श्रूयते 'कामं तु योऽनूचान स्यात्तस्य पशुऽस्यादि' ति तेनाग्निष्टोमप्रथमप्रयोगेऽनूचानस्य नित्य प्रयोग अन्येषा नित्यमप्रयोग, अतिरात्रप्रमाहारे तु सर्वेषामेवाप्रयोग प्रतिप्रसवाभावात् ।

पौष्णपेषणस्य विकृतौ विनियोगाधिकरणम् ।

सू० पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥ १६ ॥

दर्शपूर्णमासयोः "पूषा प्रपिष्टभाग" इति पेषणं प्रकरणे पूषाभावादत्र पूषा तत्र वाक्यादुत्कृष्यते इति प्राप्तिसूत्रमेतत् ।

पौष्णपेषणस्य चरावेव नियमाधिकरणम् ।

सू० तत्सर्वार्थमविशेषात् ॥ १७ ॥

तत्पेषणं किं चरौ पशौ पुरोडाशे च विधीयते? उत चरावेवे? ति संशय, अविशेषात् सर्वत्र स्यादिति प्राप्त उच्यते 'पुरोडाशेऽन्यत सिद्धं प्रयासाकृतिनाशनम् । पेषणं तेन न तयोर्विधातव्यं चरौ पुन ॥ अविघात क्रमप्राप्तमिति तत्र विधीयते ॥ पुरोडाशे हि चोदकादेव सिद्धं पेषणमिति

१ मत इति पा

न विधातव्यम् । नन्वन्यदिदं पेषणं अवघातोत्तरकालं वचनबलाद्विज्ञायते न श्रवणात्, न हि पाकोत्तरकालमिदमन्यत्पेषणमिति वचनमस्ति पेषणमात्रं श्रुतं तच्च प्राप्तं न विधातव्यम् । ननु विधिबलादेवान्यत्स्यात्, न तस्याप्राप्तपेषणे चर्वर्थत्वात् द्वैरूप्यं च कल्पनायामसामर्थ्यात् गौरवं चात्यन्ताप्राप्तपेषणान्तरविधौ स्यात्, एवं पशावपि भावाय्यविकारित्येऽन्ताप्राप्तम् । "हृदयस्याग्रेऽवद्यतीति विहितहृदयाद्याकृतिविनाशनं च चरौ त्वविघातक पिष्टकचरावपि पाकविशेषेण चरुशब्दप्रयोगात् चोदकप्राप्तं च तत्प्रयोजनाभावाच्चिवर्तमानं प्रतिप्रसूयत इति लाघवात्तदेव पेषणम् ।

पौष्णपेषणस्यैकदेवत्ये नियमाधिकरणम् । **सू० एकस्मिन्नेकसंयोगात् ॥ १५ ॥**

चरावेव पेषणमिति स्थितं तत्र संशयः, किं यत्रान्यसहितः पूषा देवता तत्राप्यनेनैतत्पेषणं उत यत्रैव केवल इति, तदर्थं च किं देवताप्रयुक्तमिदं पेषणम्? उत तद्वत्यागापूर्वप्रयुक्त? मिति तत्र "यज्ञप्रकरणाभावाद्वाक्ये चाश्रवणादिदम् । पेषणं देवताधर्मो नापूर्वस्याज्यधर्मवत्," अन्ये हि धर्माः श्रुत्यादिभिः प्रकरणाद्वा यज्ञापूर्वप्रयोगिनो गम्यमाना युक्तं यत्तस्यैव फलवतोऽङ्गं भवन्ति न निष्फलाया देवतायाः, पेषणं त्विदं न यज्ञाङ्ग प्रकरणाभावात्, वाक्ये च पूषमात्रश्रवणात् अतस्तत्स्वरूपप्रयुक्तं, स च द्विदेवत्येऽपि विद्यत इति तत्रापि पेषणं स्यादिति प्राप्तेऽभिधीयते "देवता निष्फला नैव पेषणस्य प्रयोजिका । उपादानं च यागस्य भागशब्देन विद्यते । मुख्यार्थासंभवाद्यागलिङ्गविपर्ययाच्च हि । श्रूयते भागशब्दोऽस्य नानुपादानमस्त्यतः ॥ स च यागो द्विदेवत्ये द्वयव्यासक्तत्वादेकेन पूष्णा वा शक्यते व्यपदेष्टुम्, ऐन्द्राग्नादिव यत्पुरोडाशो आग्नेयेन्द्रपीतशब्दाभ्यां, यद्यपि चात्र तद्धितसमासान्तर्गतत्वात्पूष्णो न वृत्त्यसामर्थ्यं तथापि भागशब्दार्थस्यैव द्विदेवत्ये पूषविशिष्टस्याभावाच्च तत्र पेषणम्, एकदेवत्ये तु तदिति सिद्धम् ॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

## अथ तृतीयेऽध्याये चतुर्थः पाद आरभ्यते ॥

---

निवीतस्यार्थवादताधिकरणम् ।

**सू० निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥**

दर्शपूर्णमासयोः श्रूयते "निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते" इति, निवीतं मनुष्याणामिति किमयं विधिः? उतार्थवादोऽयमुपवीतविधेरिति, अर्थवादत्वमौदुम्बराधिकरणन्यायेन सिद्धं, यदा विधिस्तदा विचार्यते इत्याचिन्त्येदं तच पदत्रीश्रुत्या शुद्धमनुष्यधर्म इत्येकः पूर्वः पक्षः, श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मो लोहितोष्णीषादिवदित्यपरः, प्रकरणात्क्रतुधर्मः प्रयाजादिवत् मनुष्यपदार्थं तु कर्तुं सम्बन्धानुवाद इत्यन्यः, अनुवादस्यानर्थक्यात्प्राचीनावीतोपवीतवदेवम्यात्प्रकरणाविरोधाय प्रकरणे यन्मनुष्यप्रधानं कर्मान्वाहार्यदानादि तस्य धर्म इत्यपरः, प्राचीनावीतोपवीतयोः स्वतन्त्रपितृदेवताप्रधानकर्मविषयत्वादस्येवम्यान्निवीतमपि स्वतन्त्रं यन्मनुष्यप्रधानमातिथ्यादि कर्म तद्धर्म इत्यपरः, सर्वेषामेतेषामशोभमानत्वात्पुरुषार्थत्वे च फलकल्पनाद्विधेश्वावाक्यत्वात्प्रकरणाविरोधाच्चार्थवादत्वमेव पूर्वोक्तन्यायेन इति इत्याचिन्त्योदाहरणम् ॥

**सू० उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ २ ॥**

दर्शपूर्णमासयोरुपवीतं श्रुतमुपव्ययत इति, तत्र संशयः किमिदं सर्वेदैवकर्माङ्गं? उत दर्शपूर्णमासाङ्गं? मिति तत्र "कृताग्निहोत्रे प्राचीनावीती होतृदेहं यज्ञोपवीती हि देवेभ्यो होतृपतीति सिद्धवद्देवाग्निहोत्रे यज्ञोपवीतानुवादलिङ्गेन प्रकरणं बाधित्वा सर्वार्थत्वमवगम्यते, न च दर्शपूर्णमासस्यास्यैवायमनुवादः विप्रकृष्टत्वाद्देवेभ्य इति च बहुवचनानुपपत्तेः, वैकल्पिकैन्द्रैकदेवत्यत्वात्सान्नाय्यस्य, अग्निहोत्रे त्वग्निसूर्यप्रजापत्यभिप्रायमुपपन्नं बहुवचनमिति तद्गतस्यैवायमनुवादः, स च दर्शपूर्णमासप्रकरणोल्लङ्घनेन सर्वार्थत्वे घटत इति प्राप्ते ब्रूमः प्रकरणाद्दर्शपूर्णमासाङ्गम् । अग्निहोत्रगतं तु लिङ्गं यथाप्राप्ति सर्वार्थत्वमिति सन्निकृष्टाभावाद्विप्रकृष्टमपेक्ष्य

प्रवर्तते बहुवचनं तु प्रकृतिविकृतिदेवताऽभिप्रायमित्यविरुद्धं, सोऽयं लिङ्ग-प्रकरणविरोधाविरोधविचारः ॥

### सू० विधिर्वा स्यादपूर्वत्वात् ॥ ३ ॥

"उपव्ययते" इत्येतदुदाहरणं किमसौ विधिः? उतानुवादः? इति "नित्योदकी नित्ययज्ञोपवीती"ति, स्मृतिप्राप्तत्वादनुवाद इति प्राप्ते विधि-रपूर्वत्वादित्याह पुरुषार्थतया हि स्मृतितः प्राप्तिः, अयं तु क्रत्वर्थतया विधिः अप्राप्तत्वात् । यद्वैवमधिकरणम् । उपव्ययत इति स्मृतिप्राप्ता-नुवादः स्मृतिश्चाविशेषेण स्थितेति सर्वकर्मार्थतया प्राप्तमनूद्यत इति पूर्वः पक्षः संयोगभेदाद्विधिः अतश्च प्रकरणाद्दर्शपूर्णमासाङ्गमिति सिद्धा-न्तः । एवं चामृताग्निहोत्रे श्रूयते "यज्ञोपवीती देवेभ्यो दोहयतीति, किमयं वैधाग्निहोत्राद्भूतया यज्ञोपवीतस्य विधिः? उत दर्शपूर्णमासादि-षु प्राप्तस्य प्राचीनावीतस्तुत्यर्थोऽनुवादः? इति तत्र प्राचीनावीती दोहय-तीति अग्निहोत्रस्य मृतावस्थायां वचनाद्यज्ञोपवीती हि देवेभ्यो दोह-यतीति तस्यैव जीवदवस्थायामुपवीतं गम्यते, तच्चाप्राप्तमित्यनुवादसरूप-स्यापि हि शब्दपरित्यागेन विधित्वं गम्यते स्थितं तावदपर्यवसितम् ॥

### सू० उदक्त्वं चापूर्वत्वात् ॥ ४ ॥

तत्रैव श्रूयते "ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीया"दिति ये पुरोदञ्च इति किं विधिः? उतानुवादः? इति प्राप्त्यभावादुदञ्चोपव-त्तस्यापि व्यवहितकल्पनया वाक्यभेदेन च विधित्वं गम्यते ये पुरा जीव-दवस्थायां दर्भास्ते उदञ्चः कार्या इत्येकं वाक्यं, तान् दक्षिणाग्रानिति च मृतावस्थायां वाक्यान्तरमिति प्राप्ते ब्रूमः यच्छब्दोपबन्धाद्विध्यभावाद्वि-ध्यन्तरैकवाक्यत्वाच्चानुवादत्वम्, अस्ति च प्राप्तिः "अग्रमन्त्युदगग्राणी"ति स्मृतेः, न चेदमेव स्मृतेर्मूलम् । अस्याग्निहोत्रविषयत्वात्स्मृतेश्च अविशेषेण सर्वविषयत्वादवश्यं मूलान्तरं कल्पनीयं तस्मिंश्च कल्पिते तत एवाग्नि-होत्रेऽपि प्राप्तेरयमनुवाद इति स्थितादुत्तरं "यज्ञोपवीतीति हि देवेभ्यो-दोहयती"ति हि शब्दोपबन्धात्प्राचीनावीतविधिशेषत्वादनुवादत्वं तावद्

परुषि दितादीनाम नुवादताऽधिकरणम् ।

सू० परुषि दितपूर्णघृतविदग्धं च तद्वत् ॥ ६ ॥

"यत्परुषि दितं तद्देवानां यदन्तरा तन्मनुष्याणा"मिति तथा "य त्पूर्णं तन्मनुष्याणामिति घृतं देवानामस्तु पितॄणां निष्पक्वं मनुष्याणा"मित्यत्र मनुष्यसंयुक्ता उदाहरणं तथा "यो विदग्धः स नैर्ऋतः योऽशृतः स रौद्र" इति अत्रापि विध्यर्थवादादिपक्षा निवीतवदेव सर्वे योज्या, विशेषाशङ्का त्वेषा विधित्वेऽपि न फलकल्पनं लौकिकाना मेव स्तम्भफलानां लवनमानाभ्यञ्जनक्रियाणामन्तरा पूर्णनिष्पक्वमिति विशेषनियममात्रविधानाच्चियमादृष्टमात्रं न निवीतवदत्यन्ताप्राप्तविधानेना दृष्टक्रियाफलकल्पनेति यो विदग्ध इत्यपि प्रसिद्धयोरेव नैर्ऋतरौद्रयोर्विदग्धत्वाशृतत्वगुणमात्रविधानाल्लाघवमतो विधिरित्येतां शङ्कां निवर्तयितुमतिदेशः ।

अनृतवदननिषेधस्य क्रतुधर्मताऽधिकरणम् ।

सू अकर्मक्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ ७ ॥

क्रतौ पुरुषे चार्थतः प्रसक्त पदार्थे प्रतिषेधतः क्रतुप्रकरणगताः प्रतिषेधा इहोदाहरणं दर्शपूर्णमासयोर्हि "नानृतं वदेदि"ति हि श्रूयते तत्र संशयः किमयं पुरुषधर्मो विधिः ? उत क्रतुयुक्तपुरुषधर्मोऽनुवादः ? किं वा शुद्धक्रतुधर्मोऽनुवादः ? अथवा शुद्धक्रतुधर्मो विधि ? रिति, तदर्थं च प्रतिषिध्यमाना या क्रिया विचारयितव्या किमर्था सती प्रतिषिध्यते किं क्रत्वर्था ? किं वा पुरुषार्थेयमिति, ततोऽपि पुनर्विचारयितव्यं किमाख्यातं कर्तारमभिधत्ते न वेति, तत्र "प्रतीतेः स्मरणात्कर्तृविशेषैरपृथक्श्रुते कर्तृवाचित्वमाख्यातप्रत्ययस्यावसीयते, वदेदित्याख्यातात्कर्ताऽवगम्यते यश्च यतोऽवगम्यते स तस्यार्थः

---

व्याख्यायिषत, केचित्तु "न चा प्रकरणात्तस्य दर्शनम्" "सतो वाल्लिङ्गदर्शनम्" इति सूत्रद्वय मधिकमास्थिताः पूर्वोक्त चतुःसूत्रीं निरुक्तसूत्रद्वयसंवलितां षट्सूत्रीमावहते अधिकरणसूत्राणां संदर्भाऽप्याकुलः अकर्मक्रतुसंयुक्त संयोगान्नित्यानुवादः स्यादित्यनृतवदननिषेधाधिकरणं परुषि दितादीनामनुवादाधिकरणानन्तरं व्याख्यातं भाष्ये इह पुनर्विपरीत्येनेति पाठधारस्याकुलतया वृत्तिवार्तिकग्रन्थालोचनया पाठतत्त्वविवेकः करणीय इति मन्महे ।

तथा 'कर्तरि कृदित्यधिकृत्य 'ल कर्मणि चे'ति चकारेण कर्तृवाचित्वं स्मृतं पचति देवदत्त इति च कर्तृविशेषवचनैर्देवदत्तादिपदैः सामानाधिकरण्या त्कर्तृवाचिता, स च प्रत्ययार्थत्वात्प्रकृत्यर्थं वदनं प्रति प्रधानभूत इति वदनं तावत्पुरुषार्थं यदर्थं च वदनं तदर्थं प्रतिषेधोऽपि न्याय्यः । कुत एतत् प्रतिषेधस्यानिष्टबोधकत्वात् इष्टविपरीतं चानिष्टं तद्यदा यस्येष्टं तद्वि परीतं तदा तस्यानिष्टं भवति तस्माद्धि प्रतिषेध्यभूतां वदनक्रियामनुव- न्वदेदिति शब्दः पुरुषार्थतया पुरुषेष्टसाधनतया तामुपस्थापयेत्ततः प्रति षेधोऽपीष्टविपरीतसाधनतां बोधयन्ननुवादात्तस्याप्रतिपन्नस्यैवेष्टस्य विपर्ययं फलत्वेनावलम्बते नेष्टान्तरस्याप्रतिपन्नत्वात् तदयमर्थः —यत्पुरुषोपकारि तया प्रसक्तं वदनं तच्च तथा किं त्वपकारमेवास्य साधयतीति तेन श्रुत्या प्रक रणं बाधित्वा पुरुषार्थे प्रतिषेधः । यस्तु स्मार्तः प्रतिषेधस्तस्याप्येतदेव मूलं भविष्यतीत्येकः पक्षः श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मोऽयं तज्जप्य मानमन्त्रवचनवत्कर्म कुर्वाणस्यानृतं वर्जयितव्यमिति सोऽयं स्मृतिप्राप्तानु वादः स्मृत्यैव हि पुरुषस्योपनयनप्रभृत्यामरणान्निषिद्धमनृतं समाध्याव र्तिनोऽस्य दर्शपूर्णमासयोस्तत एव वर्जनं प्राप्तमित्यनुवादः । न चास्मिन्पक्षे मूलमूलत्वं श्रुतेः क्रतुविषयत्वात् स्मृतेश्च पुंविशेषावस्थानादिति द्वितीयः पक्षः प्रयाजादिवत्क्रत्वर्थ एवारादुपकारकः प्रतिषेधः, सोऽपि त्वनुवाद एव पुरुषो ह्ययं स्वार्थमेवानृतं वर्जयतीति प्राप्तमेव क्रतावपि वर्जनं, न हि पुरुषं विहाय क्रतावनृतं सम्भवति पुरुषे च निषिद्धमिति कुतः क्रतौ प्राप्तिः तस्मादनुवाद इति तृतीयः पक्षः । अत्राभिधीयते '[1]क्रत्वर्थत्वेऽपि न तावदनु वादत्वमीरितम् तत्र संयोगभेदेन विधिरेव हि गम्यते' अनृतवदनस्य पुरुषा र्थेन हि स्मार्तेन प्रतिषेधेनैतदवगममनृतं वदतः पुरुषस्य प्रत्यवायो भवति वर्ज नात् स न भवतीति न क्रतौ किञ्चित्तद्भावाभावयोर्वैगुण्यमवैगुण्यं वा तेन य प्रत्यवायमभ्युपेत्य क्रतुमविगुणं चिकीर्षति तस्य नानृतं वर्जनीयं स्यात् क्रत्वर्थेन तु प्रतिषेधेन क्रतुगत एव प्रत्यवायोऽनृताद्भवतीति बोध्यते इत्यर्थभेदान्नानुवादः । तथाऽतिक्रमेऽपि पुरुषार्थातिक्रमनिमित्तं प्राय

१ तद्विषमार्थे दृष्टार्थमिति पा ।

नोपपन्नः । प्रकृतेनैव सम्बन्ध इति क्रत्वर्थता स्थिता" एकदेशिना तु नात्र क्रत्वर्थता सिध्येत् निमित्तं हि लूम्पिका, निमित्तं चाधिकारिविशेषणम् अतो लूम्पिकानिमित्तयुक्तस्य पुरुषस्याधिकारिणोऽत्र वाक्ये श्रुतस्य लाभात्का-र्यस्य च फलानपेक्षत्वात्तदनपेक्षं सपूर्णं वाक्यं न प्रकृतसम्बन्धमुपेयात्स्वत-न्त्रमेव पुरुषार्थं स्यादित्यास्तां तावत् ॥

अवगोरणादीनां पुरुषार्थाधिकरणम् । **सू॰ अर्थौ सर्वपरिदानात् ॥ ९ ॥**

दर्शपूर्णमासयोः श्रूयते "यो ब्राह्मणायावगुरेत् शतेन यातयात्तस्मा-द्ब्राह्मणाय नावगुरेते'ति, तत्र संशयः किमयं प्रतिषेधः क्रत्वर्थः? उत पुरुषार्थः? इति संशये, तत्र 'फलाभावात् क्रतोश्चापि प्रकृतत्वात्क्रत्वर्थता । क्रत्वस्तु फलस्याय पुरुषार्थो न तु क्रतोः" यातयादिति हि साध्यतया यातना गम्यते न पूर्वाधिकरणवत् प्राणापानधारणं वर्तमानतया निर्दिश्यते साध्यत्वाभि-धानादेव यातनायाः साध्यत्वं न स्वर्गादिवत्कामोपजन्यापेक्षम् । न हि प्रत्य-वायः केनचित्काम्यते तस्मात्फलवत्त्वात्पुरुषार्थमवगुरणं न क्रत्वर्थम्, एकदे-शिना तु अवगुरणस्य यातनाफलत्वं न सिध्येत् नञर्थपर्यवसायित्वात्प्रतिषेध-विधेः, नञर्थविषयो हि कार्यात्मा विध्यर्थो वाक्यार्थः, कार्यं च न फल-मपेक्षते अपेक्षमाणमपि न यातनया सम्बध्यते कर्तव्यस्य यातनाफल-त्वायोगात् न च तत्साध्यतयाऽत्र यातना गम्यते किं त्ववगुरणसाध्यतया तस्माच्च नियोगफलत्वं यातनायाः, अत एव न नियोज्यविशेषणतयाऽपि स्वर्गादिवत्सम्बन्धः, नियोगफलं हि साध्यतया नियोज्यविशेषणं भवति नान्यत्, अत एव न विषयीभूतनञर्थफलं विधेयस्य यातनाफलत्वायोगात् नावगुरणस्य फलं तदनुष्ठानस्य लौकिकत्वेन विधिसम्पर्काभावात्, उक्तं हि "लौकिके चानुष्ठाने यदि लौकिकात्प्रमाणात्प्रत्यवायो नावगम्यते कुतोऽ-न्यत शक्यतेऽवगन्तु'मिति, अतो न नञर्थविधिपरेण वाक्येन यातनायाः फलत्वं शक्यमवबोधयितुम् अनुपपत्त्यभावात्, वाक्यान्तरेण तत्प्रतिपादने वाक्यभेदः स्यात्, अवगुरणाभावेनापूर्वं कुर्यादवगुरणं च प्रत्यवायफलमिति तस्माच्च फलत्वम् । ननु गम्यते अवगुरणसाध्यता यातनायाः, सत्यं, गम्यते

र्निर्मूला त्विषमवगतिरिति प्रमाणमस्या मृग्यमाणा न लभामहे प्रत्यक्षादीनां दविष्ठत्वात्, शब्दस्य चान्यपरत्वेन तत्र प्रामाण्यायोगात्, निर्मूलावगतिहत्यवापि प्रतिभाषैव समीचीना भवति । अथापि वाक्याभेदमङ्गीकृत्य शब्दस्यात्र प्रामाण्यमुच्यते तथाऽप्ययुक्तम्, कार्यपरत्वेन हि शब्दानां व्युत्पत्तिः, अवगूरणं च यातनाफलसाधनमिति सिद्धरूपो विनियोगकथमिव शब्देन प्रतिपाद्येत व्युत्पत्तिविरहात् कथं चावगूरणं क्षणिकं कालान्तरभाविनीं यातनां साधयेत्, अपूर्वद्वारेणेति चेत् न अन्यद्वारेणान्यस्य साधनायोगात्, योगे वा यागादेरपि तथात्वोपपत्तेरपूर्वाभिधानमुत्सीदेत् तदिहापि यागादिविषयमिवावगूरणविषयं कार्यात्मकमपूर्वमभिधेयमापद्येत, न चैवमिष्टं तस्मादर्थवादमात्रं न तु फलं स्यादित्यास्तां तावत् ॥

मलवद्वासः संवादनिषेधस्य पुरुषधर्मताऽधिकरणम् । सू० प्रागपरोधान्मलवद्वाससः ॥ १० ॥

दर्शपूर्णमासयोः श्रूयते "मलवद्वाससा न संवदेत" इति, किमयं प्रतिषेधः क्रत्वर्थः ? उत पुरुषार्थः ? इति प्रकरणात्क्रत्वर्थत्वे प्राप्तेऽभिधीयते तामपह[1]ध्य यजेतेति वचनात्सर्वस्मादेव क्रतुव्यापाराद्विरता रजस्वला तेन नानया संवादस्य क्रतौ प्रसक्तिः प्रसक्त्यभावाच्च प्रतिषेधानुपपत्तिः, पुरुषस्य हि स्वातन्त्र्येण प्रवर्तमानस्य रजस्वलया प्रसज्यते संवादः तेन यत्र प्रसक्तिस्तत्र प्रतिषेध इति पुरुषार्थता ॥

सुवर्णधारणादीनां पुरुषधर्मताऽधिकरणम् । सू० अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ ११ ॥

अनारभ्य श्रूयते "तस्मात्सुवर्णं हिरण्यं भार्यम्" इति, अत्र संशयः किं हिरण्यधारणमिदं क्रत्वङ्गतया विधीयते? उत क्रतुगतहिरण्यानुवादेन धारणसंस्कारो विधीयते? । अथवा हिरण्यं हस्तेन भवतीति विहितधारणानुवादेन सुवर्णता शोभनरूपता विधीयते ? तद्धिरण्यं भार्यं तत्सुवर्णमिति, आहो स्विद्धिरण्यधारणं पुरुषार्थतया विधीयत? इति, तत्र "पुरुषार्थत्ववचने हि

[1] तामपरुध्येति पा ।

फलं कल्प्यमतः क्रतोः "अङ्गं स्याद्वैदिकत्वेन क्रियात्वेन च साध्यतः" ॥ यद्यपि नायं हिरण्यविशिष्टधारणविधिस्तथाऽपि तस्य फलापेक्षायां वैदिकत्वक्रियात्वसामान्याद्वैदिकमेव कर्मोपतिष्ठत इति तादर्थ्यमेवारादुपक्रियात्वपेक्षायां युक्तं, नात्यन्तानुपस्थितफलकल्पना । अथवा धारणस्य स्वभावत एव धार्यगतसंस्कारत्वात्तत्त्वश्रुत्या च हिरण्यस्य प्राधान्यावगमाद्विनियोजनस्य च लौकिकस्य संस्कारायोगात् क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानम् यथा लाघवाद्धारणमप्यनूद्य सुवर्णताविधि चेथाऽपि तावत् क्रत्वर्थमिति यास्केऽधीयते, "न क्रतुस्तद्धिरण्यं वा धारणं वाऽत्र गम्यते । तस्माच्च क्रतुशेषस्य विधेस्तु पुरुषार्थता ॥ स्वर्गाद्युत्पत्तेरपि क्रियात्वादन्यत्र च वैदिकत्वादुभयमपि तुल्यं पर्युपस्थापकमिति नैकान्ततः क्रतोरुपस्थानं येन विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात्, न च क्रतुगतहिरण्यप्रतीतिर्येन तदनुवादेन संस्कारविधिः स्यात्, लोकेऽपि हिरण्यसद्भावात्, न हि क्रत्वर्थं द्रव्यार्जनं येन तद्धि क्रतुद्रव्यमेव स्यात् न पुरुषार्थं हि तदिति चतुर्थे वक्ष्यामः । ननु क्रतुगतहिरण्यप्रतीतिः संस्कार्यत्वादिति चेत् न इतरेतराश्रयात् क्रतुगतहिरण्यानुवादनिश्चये संस्कार्यत्वं, तन्निश्चये च निश्चयोऽत्रास्य तद्योगात्क्रतुगतहिरण्यप्रतीतिरितीतरेतराश्रयत्वं न हि स्वभावतः संस्कार्यता अदृष्टार्थत्वेऽपि धारणाविरोधात् क्त्वाप्रत्ययस्य कर्मत्वसाध्यतामात्रमाह न शेषित्वम्, अत एव न धारणानुवादेनापि गुणविधिः क्रतुगतधारणप्रतीतेरन्यत्रापि धारणसम्भवात् अतो न क्रत्वर्थत्वं विधिवशाच्चावश्यं भवितव्यं फलेन तत्रार्थवादाभावे स स्वर्गः स्यादिति, सद्भावे तु तद्गतमेव फलं यथेह भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनत्वमतः तस्मात्पुरुषार्थत्वम् ।

जयादीनां वैदिककर्माङ्गताधिकरणम् ।

**सू० शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ १२ ॥**

क्रत्वर्थपुरुषार्थत्वविचारप्रसङ्गात्पूर्वाधिकरणेऽनारभ्यवादः प्रस्तुतः तत्प्रस्तावादेवाऽनारभ्याधीतानां जयादीनां वाक्येनैव कर्माङ्गत्वे सिद्धे तद्विशेषो विचार्यते "येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्"[1] इति किं सर्वेषां लौकि-

---

[1] येन कर्मणेर्त्सेदिति तु युक्तः पाठः ।

कवैदिककर्मणामङ्गं जपादयः? उत वैदिकानामेव येषामाहवनीयोऽस्ती? ति- विचारः, तत्राविशेषतः सर्वकर्मार्थत्वं प्रतीयते। तस्मात्कृ[1] ष्यादिनापीर्त्संत- त्राग्नौ जुहुयात् जपान्” यद्यपि कृष्यादीनामाहवनीयो नास्ति जपादयश्चा- हवनीये होतव्यास्तथाऽपि ते स्वयमेव होमत्वादाहवनीयप्रयोजका इति तद- र्थमेवाहवनीयं प्रणीय तेषु हूयमाना न दुष्यन्ति ‘तस्मात्तत्राप्यवैगुण्या- त्सर्वार्थाः स्युर्जपादयः। नैव प्रधानवैदेश्याद्वैगुण्यं जायते यतः। यद्यप्या- हवनीयाभावकृतं नास्ति वैगुण्यं तथाऽपि प्रधानदेशत्वमेव गानामधगतं तदलाभात्कृष्यादिषु क्रियमाणा विगुणा भवेयुः क्षेत्रे कृषिराहवनीये च होम इति वैदेश्यं, वैदिकेषु त्वाहवनीयादिमत्सु प्रधानसादेश्यं लभ्यत इत्यवैगु- ण्यात्सर्वे जपादयः॥

वैदिकाश्वप्रतिग्रहे इष्टिक- र्तव्यताऽधिकरणम्।

**सू० दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात्॥ १३॥**

तत्राप्यनारभ्यवादस्यैव क्रत्वर्थपुरुषार्थत्वविचारः, तैत्तिरीयाका हि काम्येष्टिकाण्डे “यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपाला- न्निर्वपे”दिति समामनन्ति, सेयं दातुरिष्टिर्न प्रतिग्रहीतुरिति वक्ष्यते सा विचार्यते किं लौकिकेऽश्वदाने मित्रदायादेभ्यः स्नेहाद्विना विधिमनपेक्ष्य क्रियमाणे निमित्ते पुरुषार्थो विधीयते? उत वैदिके कर्माङ्गभूते ज्योतिष्टोम- पौण्डरीकादिविषये क्रत्वर्थतया? उतोभयत्रे? ति, तदर्थे च किं दोषनिर्घा- तार्थम्? उत ने? ति तत्राविशेषादुभयत्रेति प्राप्तेऽभिधीयते,‘ दोषनिर्घा- तकार्येयं यत्रासौ तत्र गम्यते। लौकिके स यतो दोषोऽस्ति वैदिके न विधानतः’’ यद्यपि निमित्तावस्थायां दोषवान् योऽश्वप्रतिग्रह इत्यशक्यं विवेक्तुं, विशि- ष्टानुवादे वाक्यभेदात्तथाऽपि कर्मणः फलापेक्षायां “स एवैनं वरुणपाशान्मु- ञ्चती”ति वाक्यशेषाद्दोषनिर्घात एव फलमवसीयते, तेन यत्र दोषस्तत्रेष्टिः लौकिके चाश्वदाने ‘न केसरिणो ददाती’’ति निषेधात् दोषोऽस्ति वैदिके तु कर्माङ्गदाने विशेषविधानात्तत्प्रतिषेधाप्रवृत्तेर्नास्ति दोषः,“तस्मात्कार्यप्रथा-

---

१ कृष्यादिनाप्यौर्त्सटिति तु युक्तः पाठः।

संकीर्तितो वरुणः प्रतिग्रहीता स स्वां देवतामार्च्छदिति स इति समानवि-
भक्तिनिर्दिष्टः प्रजापतिः स्वां देवतां पूर्ववाक्ये सम्प्रदाननिर्देशाद्वरुणं तेन
प्रजापतिरश्वं दत्त्वा वरुणग्रहं प्राप्त इत्यर्थः । "स पर्यदीर्यत स एतं
वारुणं चतुष्कपालमपश्यत्तन्निरवपत्ततो वै स वरुणपाशादमुच्यते"ति
सर्वत्र प्रजापतिरेव दाताऽनुपश्यते, तेन परकृ[1]तिमत्येऽर्थवादे दातुरिष्टिर्वि-
धीतेत्यस्याऽपि दत्त्वैव कुर्यादिति दातुरिष्टिरवगम्यते तदेवं विरोधे किं
बलीय? इति तत्र विध्युद्देशस्य प्रधानत्वात्तदनुरोधेनार्थवादो व्याख्येयः,
दातुरपि नावश्यं स्यात्किं पुनः प्रतिग्रहीतुरिति, तस्मात्प्रतिग्रहीतुरिति
प्राप्तेऽभिधीयते "असञ्जातविरोधित्वादर्थवादो यथा श्रुतः । व्याख्येयस्तद्वि-
रुद्धत्वाद्विध्युद्देशस्य लक्षणा" प्रतिगृह्णीयादिति हेतुकर्तोच्यते, अस्ति हि
तस्यापि हेतुकर्तृत्वं "तत्प्रयोजको हेतुश्चे"ति चकारात्, तस्मादुपक्रमवचनाद्दा-
तुरिष्टिरिति, यदप्युक्तं चैतद्बलीयस्त्वं "श्रुतेर्जाताधिकारः स्या"दित्यत्र,
किमर्थं तर्हीदमधिकरणम्? उच्यते अश्वादिशब्दा वेदेऽपि बहुलं दृष्टप्रयोगाः
ग्रहातिस्तु दातृव्यापारे न क्वचिद्दृष्टस्तेन नासौ तत्परत्वेन व्याख्यातुं शक्यत
इति विशेषाद्दानिश्चयार्थमधिकरणम्। अथवा भाष्यकारान्तरैः सा लिङ्गाद्दा-
त्रिज्ये स्यादिति सूत्रानुसारात्प्रतिग्रहीतुरिष्टिराश्रिता तन्निरस्त्यर्थमनेनैव
सूत्रेण दातुरिष्टिं प्रतिपादयितुं भाष्यकारोऽधिकरणान्तरं चकार, सूत्रद्वयं तु
पूर्वाधिकरणशेषत्वेन व्याख्येयं, यत्तेऽप्यचोदितमिदं कर्मभेदे सति निर्णया-
शक्तः यत उभयत्र स्यादिति चोद्यं तस्योत्तरं मालिङ्गाद्वैदिकत्वसामान्याद्दा-
त्रिज्ये ऋत्विक्सम्बन्धिनि वैदिके दाने स्यादित्यर्थः ॥

वैदिकपानव्यापत्तौ सौमेन्द्रच-
रुविधानाधिकरणम् ।

सू० पानव्यापच्च तद्वत् ॥ १५ ॥

अनारभ्य श्रूयते "सौमेन्द्रं चरुं निर्वपेद्यः सोमं वमती"ति तत्रापि
तथैव संशयः किं लौकिके सोमे रसायनार्थं पीते वान्ते पुरुषार्थतयेयमि-
ष्टि? उत वैदिके क्रत्वर्थतया? अथवोभयत्रे?ति, तत्राविशेषादुभयोर्दोषाद्वा
लौकिके भवेत्। दोषो ह्यत्रास्ति वमनाद्रुद्रैरिन्द्रियवीर्ययोः"। भवति हि वम

१ परकृतिरूपेऽर्थवादे इति पाठः ।

नादिन्द्रियवीर्यवृद्धि न यक्ष्मवद्ध्वदत्यन्ताविद्यमानता तेन तत्संयोगाल्लौकिके स्यात्, वैदिके तु पानमात्रस्य शास्त्रार्थत्वाद्वमनेऽपि न कश्चिद्दोष इति, नात्र प्रायश्चित्तविधिरर्थवाद एव प्राप्ते ब्रूमः 'लोके हि वमनायैव पानाद्दोषो न विद्यते। सम्यग्जरणपर्यन्तं वेदे पानं विधीयते' न तावल्लोके दोषोऽस्ति वमनार्थमेव पानात् अतो न सद्योऽत्र लौकिक एवेति शक्यं वक्तुं, वेदे तु सम्यग्जरणस्यापेक्षितत्वात्सम्यग्जरणपर्यन्तमेव पानं शास्त्रार्थं, तच्च वमनान्निष्पद्यत इति अस्ति दोषः तेन दोषवशादेव वैदिके स्यात् यद्यपि दोषश्रवणमर्थवादस्तथाऽपि लोके दोषाभावात्प्रतीकारापेक्षा नास्तीत्यनपेक्षितं प्रायश्चित्तं, वेदे तु क्रतुवैगुण्यात्तत्समाधिस्तेनापेक्ष्यते। अपेक्षितार्थता तत्र प्रायश्चित्तविधिर्भवेत् ॥ अपेक्षितविधिश्चैवमनपेक्षितचोदनात्। तेन क्रत्वङ्गमेवेष्टिः फलं चैव न कल्प्यते" अवदानं तु वैदिकमेव योग्यमुपस्थितमिति असत्यामपि प्रतिकारापेक्षायां तत्रैव वारुणेष्टिः, लौकिके तु प्रतिषिद्धत्वात्प्रतीकारापेक्षे सत्यप्यनुपास्यत्वात्सेष्टिः प्रह्राणीति विशेषः ॥

सौमेन्द्रचर्वार्थवमनमात्रस्य
यद्विषयताऽधिकरणम्।

सू० तत्सर्वत्राविशेषात् ॥ १६ ॥

येयं वैदिके सोमवमने क्रत्वङ्गमिष्टिरवधारिता सा किं यजमानवमन एवोतर्त्विग्वमनेऽपीति विचारः, तत्राविशेषात् सर्ववमने स्यादित्युच्यते "सौमेन्द्रं चरुं कुर्याद्यः सोमं वमतीति हि। यजमानवदृत्विग्वमने गम्यते तुल्यकर्तृके। इष्टौ च क्रतुशेषत्वात्स्वाम्येव हि नियुज्यते। कर्तृत्वेनेति वमनमपि तत्कर्तृकं तत्र निमित्तमृत्विग्वमनं न निमित्तमिति स्थितम् ॥

आग्नेयाष्टाकपालचरो
र्हविःप्रदानमात्रस्य ग्रासत्व
ताऽधिकरणम्।

सू० सर्वप्रदानं हविषस्तदर्थत्वात् ॥ १७ ॥

वमनस्य हविःशेषविषयत्वात्तत्प्रसङ्गाद्धविःशेषो वक्ष्यमाणत इत्यत प्रभृत्यापञ्चमपादपरिसमाप्तेर्हविःशेषविषया कथा प्रवर्तिष्यते, प्रथमं तावद् प्रक्षेपसद्भाव एव प्रतिपाद्यते, दर्शपूर्णमासयोः श्रूयते "आग्नेयोऽष्टाकपालो भवतीति तथोपस्तृणाति अभिघारयति द्विर्हविषोऽवद्यति अनुद्रुत्य जुहो

नात्र प्रमाणमस्ति येन व्रीहिपशुसोमवत्पुरोडाशेमाश्रयाम चतुरवत्तं जुहोतीति वाक्यं प्रमाणमिति चेत्, नैतत्प्रमाणं यदि होमानुवादेन चतुरवत्तं साधनं विधीयेत । न त्वेवम्, उत्पत्तिवाक्ये होमस्याप्राप्तत्वात्त्यागमात्रेण होमाभावेऽपि पर्यग्निकृतानारण्यानुत्सृजन्तीतिवद्दैवतासम्बन्धोपपत्तेः, अतो नैव यदवत्तं क्रियेत्तज्जुहोतीति तच्चतुरवत्तमिति किंतु यच्चतुरवत्तमित्यपरकारणादिवाक्यप्राप्तं यच्चतुरवत्तं द्वितीयया संस्कार्यत्वेनोद्दिश्य तत्संस्कारो होमो विधीयते, होमश्च त्यागपूर्वः प्रक्षेपः तत्र त्यागस्योत्पत्तिवाक्यप्राप्तत्वादप्राप्तः प्रक्षेपाख्यः संस्कारो विधीयते अतो नाग्नेयोत्पत्तिवाक्यविहितस्य कर्मणः साधनविधानं येन पुरोडाशस्य तत्प्रकृतित्वं स्यात् कर्मान्तरमिदम् यथावाहितसंस्काररूपं विधीयते, यागस्य तु साधनान्तराभावात्पुरोडाश एव साक्षात्साधनमिति सर्वेषामनम । तन्त्वाचारादेव होमः प्राप्त न, आचारस्य स्वतः प्रामाण्याभावात् श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिसद्भावेऽनुपपत्तेः, यदि चाचारप्रमाणको होमः स्यात् ततस्तस्य प्रकृतिविकृतिसाधारणत्वाद्विकृतिष्वप्यसावतिदेशिक एव होम इति प्रत्यक्षद्वारत्वाद्वाहवनीयादय एव मानेष्ट्यादिषूपदेशादेव प्राप्यरन्नपरस्य स्वकालस्वाधिकारित्वाद्व्यापारस्तत्र नानार्गिन प्रकृतिरसत्वाद्विति मुखकारव्यवहारो नावकल्पते, तस्माच्चतुरवत्तं जुहोतीति होमविधिः, यागस्तु सकलपुरोडाशद्रव्यक इति समस्तमम अधिकरणं तु होमविषयं व्याख्येयं प्रायेण हविषां होमदर्शनादग्निमुखा वै देवाः इति चार्थवादात्सकलस्य होमं मन्यते चतुरवत्तं जुहोतीति एव मात्रावत् ॥ न होमः सकलस्य तु देवतासम्बन्धस्त्यागमात्राद्देवोपपद्य । एव ञ्च शेषात्स्विष्टकृत इत्यादि प्रसङ्गः भवति । तस्मात्त्यागादप्यस्य इत्य कथमिव पुनः स्विष्टकृते दीयते त्यक्तस्य हि पुनः स्वीकारे शिष्टाचारविरोधः स्यात् प्रत्यक्षश्रुत्याऽऽचारं बाधित्वा तावन्मात्रं पुनः स्वीक्रियत इत्यदोषः ॥

सर्वशेषे स्विष्टकृदनुष्ठानाधिकरणम् ।

सू० अप्रयोजकत्वादेकस्मात्क्रियेरन् शेषस्य गुणभूतत्वात् ॥ १८ ॥

सति शेषे शेषकार्याणि स्विष्टकृदादीनि किमेकस्मादुत सर्वेभ्यः कार्याण्युत सर्वेभ्य? इति विचारे, तत्रैकस्मादेव शेषात्स्विष्टकृत इति शास्त्रार्थस्य

कृतत्वादेकस्मादेव कार्याणि न सर्वेभ्य इति प्राप्ते उच्यते यदि शेषगुणकानि प्रधानकर्मण्येतानि ततः स्यादेवं शेषस्य च प्रकीर्णकस्यापि इतप्रतिपत्तेः प्रतिपत्तिनियमोऽयं विधीयते स यस्यैव न क्रियते तस्यैव प्रतिपत्तिनियमलोपा द्वैगुण्यं स्यात्तस्मात्सर्वेभ्यः, प्रतिपत्तित्वं चैषां चतुर्थे वक्ष्यते उत्पत्तौ येन प्रयुक्तं तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यादिति तेनैव च गतार्थत्वाच्चेदमधिकरणान्तरं प्रयोजनसूत्राणि त्वेतानि पूर्वाधिकरणस्य यदा शेषकार्यं वशात्पूर्वपक्षेऽप्यसर्वप्रदानं किं तदा चिन्तायाः प्रयोजनं तत्राह पूर्वपक्षेऽपि सर्वप्रदाने प्राप्ते स्विष्टकृदादिवशेन शेषः स्थाप्यते प्रधानकर्म च तदा स्विष्टकृदादि भवति तत्त्वेकस्मादेव सिध्यतीत्येकस्मादेव कर्तव्य सिद्धान्ते त्वपेक्षितप्रतिपत्तेः स्थितस्य शेषस्य प्रतिपत्तिरियमिति सर्वेभ्यः स्यादिति प्रयोजनम् ॥

पार्वणिकशेषात स्विष्टकृदाद्यनुष्ठानाधिकरणम् । सू० एकस्माच्चेद्यथाकाम्यमविशेषात् ॥१९॥

कृत्वा चिन्तेयं यदा शेषकार्यवशादेव शेषं स्थापयित्वा एकस्मात्कार्याणि तदा किमनियमो यत. कुतश्चित्? उत मुख्यादिति विशेषाभावादनियम इति प्राप्ते ब्रूमः मुख्यस्य प्राप्तनिमित्तत्वाच्छेषः स्थाप्यते तस्मिंश्च स्थापिते तत एव शेषकार्याणामुपपत्तेर्निमित्तविघातादेवेतरेभ्यः शेषस्य स्थापनं, तस्मान्मुख्यादेव कार्याणि ॥

पुरोडाशविभागस्य भक्षार्थताधिकरणम् । सू० भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ २० ॥

आग्नेयं चतुर्धा कृत्वा इदं ब्रह्मण इत्यादिभिर्व्यादेशैर्ऋत्विग्भ्यः समर्प्यते तत्र संशयः किमिह समर्पणमृत्विजां यथेष्टं विनियोगार्थं परिक्रयाय? उत द्रव्यप्रतिपत्त्यर्थं भक्षणाये ति तत्र ' भक्षस्याश्रवणात्तावत्तादर्थ्यं नावगम्यते क्रियत्यपानसिस्ताद्ब्रवीति तदर्थता न प्राप्नुते भक्षे तादर्थ्यमध्यवसातुं शक्यं कर्मकरेभ्यश्च दीयते दीयमानं च क्रीयतामपि तावद्दानति करोतीति सोमवत्प्रसर्पत्परिक्रयार्थता मैवं स्वामी हि द्रव्यदानेन परिक्रीणीत न त्विह स्वामित्वं कस्यचिद्युक्त देवतायै हविर्यतः सकलस्य हविषो देवतायै

चात्र प्रमाणमस्ति येन व्रीहिपशुसोमवत्पुरोडाशमाश्रयाम: चतुरवत्तं जुहो-
तीति वाक्यं प्रमाणमिति चेत्, भवेत्तत्प्रमाणं यदि होमानुवादेन चतुरवत्तं
साधनं विधीयेत । न त्वेवम्, उत्पत्तिवाक्ये होमस्याप्राप्तत्वात्त्यागमात्रेण
होमाभावेऽपि यागनिष्पत्तावनन्वयानुत्पत्तेर्नीतिवद्धेश्च सर्वथाऽनुपपत्तेः, अतो
नैव वचनव्यक्तिर्यच्चतुर्होतीति सत्यनुवत्तमिति, किन्तु यच्चतुरवत्तमित्युपन्यासो-
द्दिश्याप्राप्तं यच्चतुरवत्तं द्वितीयया संस्कार्यत्वेनोद्दिश्य तत्संस्कारो होमो
विधीयते, होमश्च त्यागपूर्वः प्रक्षेप. तत्र त्यागस्योत्पत्तिवाक्यप्राप्तत्वा-
दप्राप्तः प्रक्षेपांश: संस्कारो विधीयते, यतो नाग्नेयोत्पत्तिवाक्यविहितस्य
कर्मणः साधनविधानं येन पुरोडाशस्य तत्प्रकृतित्वं स्यात्, कर्मान्तरमिदम्
यथाज्यादिवत्संस्काररूपं विधीयते, यागस्य तु साधनान्तराभावात्पुरोडाश
एव साक्षात्साधनमिति सर्वप्रदानम् । तत्त्वाचारादेव होम: प्राप्त न, आचा-
रस्य स्वतःप्रामाण्याभावात् श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिसद्भावेऽनुपपत्ते:,
यदि चाचारप्रमाणको होम स्यात् ततस्तस्य प्रकृतिविकृतिसाधारण्यात्प्रि-
कृतिष्वप्यसावौपदेशिक एव होम इति प्रत्यक्षश्रुत्याचारादबलीयादय: एव
मानेष्वाद्दिपूर्वदेशादेव प्राप्यवानयश्च स्वकालत्वादिति न्यायात् तत्र साक्षा-
मग्नि. प्रकृतिः, यथाऽप्रवदिति सूत्रकारव्यवहारो नोपपद्यते, तस्माच्चतुर-
वत्तं जुहोतीति होमविधिः, यागस्तु सकलपुरोडाशद्रव्यक इति समञ्जसम् ।
अधिकरणे तु होमविषय आग्नेय प्रार्थेण हविषा होमदर्शनादग्निमुखा
वै देवा" इति चार्थवादात्सकलस्य होम प्राप्यते चतुरवत्तं जुहोतीति वच
नात्तावत एव होम सकलस्य तु देवतासम्बन्धस्त्यागमात्रादवशेषोपपत्तः । एवं
च शेषात्स्विष्टकृत इत्यादि समञ्जस भवति । तत्त्वान्यादृशा दृश्य कथ-
मिव पुनः स्विष्टकृते दीयते त्यक्तस्य हि पुन. स्वीकारे शिष्टाचारविरोध.
स्यात् प्रत्यक्षश्रुत्याऽऽचार बाधित्वा तावन्मात्र पुन. स्व क्रियत इत्यदोष ॥

सर्वशेषे स्विष्टकृदुपादानाधिकरणम् ।

सू० अप्रयोजकत्वादेकस्मात्क्रियेरन् शेषस्य गुणभूतत्वात् ॥ १८ ॥

सति शेषे शेषकार्याणि स्विष्टकृदादीनि किमेकस्मादुत्पत्य कार्या-
ण्युत सर्वेभ्य? इति विचारः, तत्रैकस्मादेव शेषात्स्विष्टकृत इति शास्त्रार्थस्य

कृतत्वादेकस्मादेव कार्याणि न सर्वेभ्य इति प्राप्त उच्यते यदि शेषगुणकानि प्रधानकर्माण्येतानि ततः स्यादेवं शेषस्य च चकोर्थकरस्यार्थे ततप्रतिपत्तिः प्रतिपत्तिनियमोऽयं विधीयते स यस्यैव न क्रियते तस्यैव प्रतिपत्तिनियमलोपा द्गुणय स्यात्तस्मात्सर्वेभ्यः, प्रतिपत्तित्व चैषां चतुर्थे वक्ष्यते, उत्पत्तौ येन प्रयुक्तं तदर्थं श्रुतिहेतुत्वात्तस्यार्थोन्तरगमने शेषस्याप्रतिपत्तिः स्यादिति तेनैव च गतार्थत्वाच्चेदमधिकरणान्तरं प्रयोजनसूत्राणि त्वेतानि पूर्वाधिकरणस्य यदा शेषकार्यं शास्त्रोपपत्तेऽप्यपवर्ज्यदानं किं तदा चिन्तायाः प्रयोजनं तत्राह पूर्वपक्षेऽपि सर्वप्रदाने प्राप्ते स्विष्टकृदादिवशेन शेषः स्थाप्यते प्रधानकर्म च तदा स्विष्टकृदादि भवति तच्चैकस्मादेव 'सिध्यतीत्येकस्मादेव कर्तव्य सिद्धान्ते त्वपेक्षितप्रतिपत्ते स्थितस्य शेषस्य प्रतिपत्तिरियमिति सर्वेभ्यः स्यादिति प्रयोजनम् ॥

प्रायमिकशेषात् स्विष्टकृदाद्यनुष्ठानाधिकरणम् । सू० एकस्माच्चेद्याथाकाम्यमविशेषात् ॥१९॥

कृत्वा चिन्तेय यदा शेषकार्यवशादेव शेषं स्थापयित्वा एकस्मात्कार्याणि तदा क्रमनियमो यतः कुतश्चित्? उत मुख्यादेरिति विशेषाभावादनियम इति प्राप्ते ब्रूमः मुख्यस्य प्राप्तनिमित्तत्वाच्छेषः स्थाप्यते तस्मिंश्च 'स्थापिते तत एव शेषकार्याणामुपपत्तेर्निमित्तविघातादितरेभ्यः शेषस्य स्थापनं, तस्मान्मुख्यादेव कार्याणि ॥

पुरोडाशविभागस्य भक्षार्थताधिकरणम् । सू० भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ २० ॥

ध्रुवानेव चतुर्धा कृत्वा इदं ब्रह्मण इत्यादिभिर्व्यादेशैर्दक्षिणायः समर्प्यते तत्र संशयः किमिदं समर्पणमृत्विजां यथेष्टं विनियोगार्थं परिक्रयाय? उत द्रव्यप्रतिपत्त्यर्थं भक्षणाये ति तत्र 'भक्षस्याश्रवणात्तादर्थ्यं नावगम्यते क्रियत्यस्मानस्तावद्ब्रवीति तदर्थता न श्रूयते भक्षे तादर्थ्यमध्यवसातुं शक्यं कर्मकरेभ्यश्च दीयते दीयमानं च क्रीततामपि तावदानतिं करोतीति सोमवमसवत्परिक्रयार्थता नैवं स्वामी हि द्रव्यदानेन परिक्रीणीत न त्विह स्वामित्वं कस्यचिद्दृष्ट देवतायै हविर्यतः सकलस्य हविषो देवतायै

यस्त्वादलीयानो यजमानस्तुल्यः स ऋत्विग्भिः कथं परिक्रीणीत, तस्माच्च परिक्रय शेषस्य तु प्रतिपत्त्यपेक्षत्वाच्छ्रोतव्यतया च पुरोडाशस्य भक्षणमिव प्रतिपत्तिरुपगतेति कर्तृविशेषमात्रापेक्षया ब्रह्मादयो नियम्यन्ते, तद्विषय-स्यापि दृष्टमेव प्रयोजनं तेषां करिष्यमाणकर्मप्रयोगकौशलं भक्षणाद्धि सामर्थ्यं भवतीति भक्षणार्थता ॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

## अथ तृतीयेऽध्याये पञ्चमः पाद आरभ्यते ॥

---

ध्रुवाज्यादिभिः स्विष्टकृदा-दिशेषानुष्ठानाधिकरणम् ।

**सू० आज्याच्च सर्वसंयोगात् ॥ १ ॥**

शेषकार्याणि किमाज्यादप्युपांशुयाजद्रव्यात्कर्तव्यान्युत नेति संशये, तत्राविशेषात्कर्तव्यानीति प्राप्ते उच्यते—क्रमार्थस्य प्रतिपत्त्यपेक्षस्य स्थितस्य शेषस्य प्रतिपत्त्यर्थानि शेषकार्याणि, न चाज्यशेषविभागोऽस्ति यावत्तु ध्रुवा-यामप्युपांशुयाजार्थं गृहीते उपशिष्टमाज्यं तत्प्रयाजाद्युपस्तरणाद्युपयोगि-त्वादकृतार्थं न प्रतिपत्त्यर्हं, सर्वान्ते च तेन [1]हविःशेषेण समिष्टयजुर्होमः क्रियत इति न ततः शेषकार्याणि। यत्तु जुह्वां चतुर्गृहीतमाज्यं गृहीतं तदपि हुतमिति शेषाभावान्नाज्याच्छेषकार्याणि ॥

साकंप्रस्थाय्ये शेषकार्यानुष्ठा-नाधिकरणम् ।

**सू० साकं प्रस्थाय्ये स्विष्टकृदिडं च तद्वत् ॥ २ ॥**

साकं प्रस्थाय्ये श्रूयते "सह कुम्भीभिरभिक्रामेदि"ति तत्र किं शेषकार्याणि कर्तव्यान्युत तेषु नेति तदर्थं च किं कुम्भीषु[1] शेषो विद्यते उत नेति, तत्राभिक्रमणमात्रं कुम्भीभिर्न होमः स त्वभिक्रम्याध्याहवनी-यमवदायैव जुह्वा यथाप्रकृति कर्तव्य इति शेषसद्भावात्कर्तव्यं स्विष्टकृदादि इति प्राप्ते ब्रूमः, नेदमप्राकृतकार्यमपूर्वेणाभिक्रमणं कुम्भीभिर्विधीयते किं

---

१ निरूप्येष्विति पा० ।

तु यदेव प्राकृतं होमार्थं जुह्वाऽभिक्रमणं तदेव जुहूमपहाय कुम्भ्योनिवेश्यमानाद्धोमार्थो विज्ञायन्ते, न ह्यन्यथा होमार्थोऽभिक्रमणसम्बन्धो युज्यते तदनेन प्रकारेण कुम्भीभिर्होमो विधीयते तद्विधेो चाभिक्रमणं प्राप्तमेवा नुवदति तस्मादत्रापि शेषभावाच्च शेषकार्याणि ।

सौत्रामण्यां शेषकर्मानन्वाधानाधिकरणम् ।

सू० सौत्रामण्यां च ग्रहेषु ॥ ३ ॥

सौत्रामण्यां पयोग्रहा सुराग्रहाश्च तत्र श्रूयते 'यथागृहीतान् ग्रहा नृत्विज उपावहरन्ते दक्षिणेऽग्नौ पयोग्रहान् जुहुति दक्षिणाग्नौ सुराग्रहानिति,' तत्रापि पूर्ववदेव सर्वपूर्वोत्तरपक्षाः विशेषः सोमग्रहतुल्यश्रुतित्वात् तत्र च शेषमद्भावात् इहापि स्यादित्याशङ्कां व्यावर्तयितुमतिदेशः ।

सर्वपृष्ठेष्टौ स्विष्टकृदिडादीनां सकृदनुष्ठानाधिकरणम् ।

सू० द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ ४ ॥

सर्वपृष्ठायां षट्कर्माणीन्द्राय रथन्तराय निर्वपतीन्द्राय बार्हताये-त्येवमादीनि तेषां षड् हवींषि क्रमेण यथादैवत निरुप्य प्रकृतिवत्सहा-वघातपेषणे कृत्वा विभागे प्राप्ते तमकृत्वा वचनात्सर्वैरेकं पुरोडाशं कृत्वा ततः समस्तम् पर्यवदाय प्रधानानि क्रियन्ते तत्र किं प्रतिकर्मभेदेन स्विष्टकृदिडमवद्येयम् - उत सकृदिति संशयः तत्र कर्मबहुत्वेन प्रति-कर्माम्नायिभिः चोदकैः शेषकर्मापि प्रतिकर्मं प्रदिश्यते, तस्मात्प्रति-कर्माऽवद्येय, तथा च प्रधानभेदे एकस्मिन्नपि शेषे शेषकार्येऽरसेो सिद्धवद्धेतुं दर्शयति "द्विरैन्द्रयावस्य भवति" "त्रिर्हितस्य चतुश्चत्वारिंशति तद्विहाय पाति प्राप्ते ब्रूमः "सर्वसाधारणः शेषस्तस्मात्सकृदवद्यते। तावतैव हि सर्वदा कृत स्याद्विशेषतः" ॥ ननु त्यक्तस्य पुनरन्यायायोगात्र सकल. पुरोडाशः सर्वेषां किं त्वेकैकोऽवयव एकैकस्य यागस्य साधनं तद्भेनावयवेन यो यागः क्रियते तदुत्तराधोद्धवद्दीयमाने तस्य शेषादवत्तं भवतीति भेद एव न्याय्य, नैतदेव च अवयवानामेव विशेषग्रहणाच्च ह्यतत् ज्ञायते अयमवयवोऽस्या-यमस्येति विशेषे प्रमाणाभावात् होमदेशा एव वचनात्सर्वास्यता न याग-देशाः तेन यागावस्थायामेवं तदुत्पत्तितस्य योऽस्मिन् पुरोडाशे निर्वापद-

भक्षयन्ती''त्यादौ सर्वत्र गुणान्तरश्रवणात् तत्परो विधिर्न[1] भक्षं विधत्ते, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त इति लिप्सामात्रं श्रुतं न भक्षस्तस्मान्नास्ति भक्ष इति प्रथमपक्षः शेषस्तावद्दर्व्यहोमविधानादग्न्येव तस्य चाग्नौ भक्षे विशेषविधान पुरस्तादैन्द्रवायव भक्षयतीत्यनुपपद्यमानं भक्ष गमयति, तच्च लिङ्गं स्थालीपुलाकवद्विशेषेण भक्ष गमयतीति सर्वेष सर्वेषां भक्ष इति द्वितीयपक्ष. । स्यादेतद्यदि विशेषविधिरयम, असत्यां तु भक्षण[2]प्राप्तौ विशेषविधिर्न घटत इति अयमेव विशिष्टभक्षविधिः, तस्मात्त्वैन्द्रवायवादौ यस्याध्वर्य्वादेर्भक्षोपदेशस्तत्र तस्य भक्षो नातिप्रसज्यत इति तृतीयः पक्ष , सिद्धान्तस्तु सत्यमेतत् यथोपदेशं भक्ष इति पुरस्तादैन्द्रवायवस्येत्येवमादिभिस्तु भक्षोपदेशो येषु तेष्वेव भक्ष इति न ब्रूमहे कारणान्तरादेव भक्षप्राप्तेः पुरस्तादित्यादेस्तु विशेषमात्रपरत्वात् तच्च कारणान्तरमन्यत्राप्यस्ति, किं पुनः कारणान्तर समाख्यावषट्कारहोमाभिषवा यथायथ प्रापकाः, हारियोजने तु वचनं तत्र चमसेषु तावत्समाख्यया चमसिनां भक्षः, होतृचमसादिसमाख्या वेदे प्रैतुहोतुश्चमस इति मन्त्रे पठिताः, सोमचमस इति लौकिकी समाख्या चमस इत्येषोऽदनार्थस्य चमेरौणादिकोऽधिकरणसाधनोऽसच्-प्रत्यय , तस्मादच होत्रादिभिश्चमितव्यः सोमरस इति सिद्धश्चमसेषु चमसिनां भक्षः ॥

उद्गातृणां मध्ये सुब्रह्मण्यस्य भक्षाधिकरणम् ।

सू० उद्गातृचमसमेकः श्रुतिसंयोगात्
॥ ७ ॥

सम्प्रति वषट्कारादिनिमित्तं भक्षणमनुक्त्वाऽधिकरणमसमाप्यैवान्तरसामाख्याभक्षप्रसङ्गमेवानुसरति, तत्रैव मन्त्रे "उद्गातृणां चमस" इति श्रूयते सचेदुद्गातृचमसमुद्गाता एको भक्षयेत् प्रातिपदिकार्थविरोधिनो बहुत्वस्य षट्स्वप्यप्रत्यक्षादिति प्रथमः पक्षः पुनः पक्षे चतुर्ष्वपि भक्षणेऽप्यन्तासम्भवादिह तु लक्षणयाऽर्थपरत्वे सम्भवति न वचनस्यात्यन्तबाधनं युक्तं

[1] न भक्षमिति तु पा० ।
[2] भक्षणप्राप्तौ इति पा० ।

स्याद्वषट्कारादेर्होमेष्वपि साधकाशत्वात्प्रतिपत्तिश्चैकेनैव लक्षणेन सिद्धेः चमसिनामेव चमसेषु भक्ष इति पूर्वः पक्षः । वाचनिकयोर्वषट्कारहोमाभिषवयोः समाख्यया बाधायोगात्तस्याश्च निरवकाशत्वेन ताभ्यां बाधा सम्भवादुभयत्रशस्च सर्वभक्षे प्रतिपत्तिसम्भवे ऽन्यतरस्यापि बाधो न युक्त इति समुच्चय एवेति सिद्धान्तः ॥

होतुः प्रथमभक्षाधिकरणम् ।

सू० एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ १२ ॥

सिद्धे ऽनेकेषां भक्षणे क्रमश्चिन्त्यते । किमध्वर्युः पूर्वं भक्षयेत् ? उत वषट्कर्ते ? ति तत्राध्वर्युहस्ते पात्रस्यावस्थानात्स एवाग्रे भक्षयेत् । ततो वषट्कर्ता चमसिनः पश्चात् । वषट्कर्तुः प्रथमभक्ष इति भक्षपरं न प्राथम्यमपि विधत्ते वाक्यभेदात् । अथवाऽध्वर्योः प्राथम्यस्य न्यायतः स्थितत्वान्न तद्बाधनं युक्तं वषट्कर्तुश्चमसिना चानन्तरं क्रम आकाङ्क्षित इति तद्विषयमिदं वचनं वषट्कर्तुश्चमसिभ्यः प्रथमं भक्ष इति नाध्वर्योरपेक्षितत्वात्, तस्मादध्वर्योः प्रथमभक्ष इति प्राप्ते ब्रूमः । "वचनस्याविरोधेन प्रवृत्तेर्न्यायमात्रेण सङ्कोचायोगाद्विशिष्टविधानाच्च वाक्यभेदाभावात् । "द्वौ ते वनः प्रथमं पाहि" इति मन्त्रवर्णात्कारणभूतस्य वषट्कारस्य च प्राथम्यात्सन्निमित्तलक्षणं प्रथमं कर्तव्यम् । ये तु वचनाभावेऽपि कारणप्राथम्यादेव वषट्कर्तुः प्रथमभक्षणं भवतीति प्रतिपादयितुमिदमधिकरणम् । वचनोपन्यासस्तु कृत्वा चिन्तोद्घाटनार्थमित्याहुः । तेषां स्वव्यवहारविरोधः—तार्तीये क्रमोऽभिधेयोऽविधेयश्चेति विभज्य व्यवहरन्ति । यतः एवासौ तृतीये चिन्त्यते इत्याहुः । अत्रैवाधिकारेण क्रमचिन्ता । वषट्कारश्च भक्षयेदित्यत्र वषट्कारो भक्षनिमित्तमित्युक्तं न क्रमः । स त्विहैव चिन्त्यते । स चेद्वचनबलादृत्य न्यायादेव चिन्त्यते सोऽप्यनभिधेयः पाञ्चमिकश्चाविधेयश्च स्यादिति सिद्धान्तहानिः, पञ्चमे वाऽसौ चिन्त्यः स्यात् । प्रसङ्गादिह चिन्त्यते । पुष्पकमिवेति चेत्तर्हि त एव ब्रूहि विधेयत्वादसौ तृतीये चिन्त्यत इति पञ्चमिकाद्विशेषाभिधानं प्रलापः । किञ्च यदि वचनादिति सूत्रं कृत्वा चिन्तोद्घाटनार्थं तर्हि तदधिकरणं समाप्य कर्तव्यम् इह तु कारणानुपूर्व्यादिति

सूत्रात्प्रागेव कृतमिति न कृत्वा चिन्तोद्घाटनं युज्यते । यदि न्यायादेव प्राप्तम्य लभ्यते ततोऽवचनमेवेदं न्यायानुवादमात्रत्वात्तच्च वचनादिति सूत्रानुपपत्तिः । न च शक्यमिदं न्यायाल्लब्धुं यदा वषट्कारः न तदा भक्षणं कर्त्तव्यम् अहुतस्य भक्षणाभावात् होमे तु कृते तन्निमित्तकमिदमपि भक्षणं तदुपस्थितमेवेति न विशेषः प्रत्युत वषट्कारनिमित्तमुपस्थानं अष्ट होमनिमित्तं स्वप्रष्टम् इति तदेव प्रथमं कृत्वा पश्चादन्यत्कर्त्तव्यम् । वक्ष्यति हि सहारम्भे सवनीयमुपाकृत्य पश्चादग्नीषोमीयोपाकरणमिति । तस्माद्वचनादेव प्राप्तस्य वषट्कर्त्तुः । भक्ष्यत्वमात्रं तु कारणानुपूर्व्यम्

भक्ष्यानुज्ञापूर्वकत्वाधिकरणम् । **सू० वचनादनुज्ञातभक्षणम् ॥ १३ ॥**

नानुपहूतेन सोमः पातव्य इत्यत्रोपहूतशब्देनानुज्ञानमुच्यत इति दर्शयितुमुक्तविन्तार्थं चेतत्सूत्रम् ॥ तदुपहूत उपहूयस्वेत्यनेनानुज्ञापयेदिति ह्यात् । अनुज्ञाप्य भक्षयितव्य वचनादिति स्थितः तन्त्रोक्तिमेन शब्देन मन्त्रेण वेति । उपहूत उपहूयस्वेति लिङ्गवन्मन्त्राम्नानात्तेनैव कर्त्तव्यमिति इदमपि प्राप्तसूत्रमेव ॥

वैदिकवाक्येन प्रतिवचनाधिकरणम् । **सू० तत्रार्थात्प्रतिवचनम् ॥ १४ ॥**

"उपहूत उपहूयस्वे"ति मन्त्रः स किं समस्त एवानुज्ञानानुज्ञापनयोः अन्यतरत्र प्रयोक्तव्य इतरत्र लौकिकः शब्दः उत? उभयत्रापि समस्तः? किं वा विभज्य यथायथमिति, । तत्रानुज्ञापनपूर्वकत्वादनुज्ञाया मन्त्रायोश्च तद्विपरीतत्वाच्च विभज्य विनियोग । तस्मात्समस्तोऽयमन्यतरत्रोभयत्र वेति प्राप्ते ब्रूमः । लिङ्गेन वाक्यं बाधित्वा विभाग एव मन्त्रयोः । तत्रापि पाठक्रमम् अर्थक्रमेण बाधित्वा पश्चात्पठितो ऽप्युपहूयस्वेति पूर्वमभिधेय अनुज्ञापने पाठ्यः । पूर्वपठितोऽप्युपहूत-शब्दः पश्चात्तनायामनुज्ञायाम् ॥

एकपात्राणामनुज्ञापनाधिकरणम् । **सू० तदेकपात्राणां समवायात् ॥ १५ ॥**

---

१ उपस्थितमेवेति पा ।

२ पश्चात्तनायामनुज्ञायामिति पाठ एव यद्यपि सर्वपुस्तकेषु दृश्यते तथापि पश्चात्तन्यामनुज्ञायामित्येव युक्तः पाठ इति मादृशानामवगन्तव्यम् ।

तदुपह्वानं किं सर्वेषां पुरुषाणामुतैकपात्राणा ? मेवेति । अत्र शेषा-त्सर्वेषाम् इति प्राप्ते ब्रूमः ॥ दृष्टार्थमनुज्ञापनं लोके भागाधिक्यं च सर्वे-षितु तच्चैकपात्राणामेवेति तेषामेवानुज्ञापनम् ॥

अथ वषट्कर्तुर्भक्षाभा-वाधिकरणम् ।

**सू० याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ १६ ॥**

होतृप्रवचनाम्नानाद्याज्याः समाख्यया होतुः प्राप्तास्तत्र काश्चि-द्धोतुरपनीय यजमानस्य विधीयन्ते । तस्यापनीयमानायां किं वषट्कार-स्तत्रापनीयते ? उत नो होतर्येवावतिष्ठते याज्यामात्रं त्वपनीयत इति संशयः । तत्र । यजमानस्य याज्येति याज्यापनयचोदना । वषट्कारस्तु याज्यातो भिन्नत्वान्नापनीयते । याज्याया अधिवषट्करोतीति याज्यातो वषट्कारस्य भिन्नत्वान्न तदपनयने ऽपनयः । यद्यपि स्वयं वा निषद्य यज-तीति यष्टृत्वं यजमानस्योक्तं तदपि याज्यामात्रप्रयोगाद्विवोपपन्नम् यस्तेन प्रयुक्तायाः याज्याया अधिहोमे नैव वषट्कुर्वाणनिमित्तश्च भक्षस्तस्मै वेति । प्राप्ते ब्रूमः । यष्टृत्वं यजमानस्य प्रत्यक्षवचनाद्युक्तम् । परिपूर्णं च यष्टृत्वं वषट्कारेण जायते । याज्यामात्रप्रयोगे तु न्यूनं तत्त्वेन न युज्यते । यजमानं च यष्टव्यं याज्यामात्रं ब्रुवतो । अतान्याय्यजमानो ऽसौ वषट्-कुर्यात्स एव नः । अतोऽपि यजमानस्य वषट्कारनिमित्तकः ॥

फलचमसस्य इज्याविका-रताधिकरणम् ।

**सू० फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ १७ ॥**

“यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्ति-भिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति राज-न्यवैश्यनिमित्तेन सोमविकारः फलचमसः श्रुतः स किं भक्षमात्रे सोम-विकारः ? उत याज्यायाम् ? इति संशयः । तत्र बिभक्षयिषेदित्युपक्रमाद्भक्षं प्रय-च्छेदिति चोपसंहारात्तत्रैव विकारो नेज्यायामश्रवणादेव प्राप्ते ब्रूमः । यागा-र्थद्रव्यसंस्काररूपभक्षणासङ्गतेः । स्तिभिनीचमसो यागे द्रव्यमित्यभिधीयते । यदि सोमं बिभक्षयिषेदिति सोमभक्षमनु[1]कीर्त्य तत्र फलचमसो विधीयते

१ अनुकीर्त्येतितु पा ।

प्रकरणाच्च सोमभक्षो न लक्षान्तरम् । स च यागद्रव्यसंस्कारत्वेन निर्ज्ञातः स्तत्सम्बन्धित्वेन च श्रूयमाणं फलमसोऽन्यथा तत्सम्बन्धायोगाद्यजमानचमसयागाभ्याससाधनत्वं प्रतिपद्यते । तदेव भक्षसम्बन्धकथनव्याजेन तद्द्वाराऽवगतयागसम्बन्धित्वेन विधीयते । तद्विधौ च भक्षसम्बन्धः प्राप्तः यथानूद्यते सम्मार्जनव्याविकारत्वम् । एतेनाभिषवयुक्पूतीकाना, याग साधनत्वं व्याख्यातम् ॥

ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम् ।

सू० ऋत्विक्प्रसर्पिषु सामान्यात् ॥ १८ ॥

राजसूये दशपेये सोमविक्रयः तत्र राज्ञोऽधिकारः । ज्योतिष्टोमाच्च तत्र दश चमसा प्राप्ताः । तेषु यजमानचमसस्य यत्नेन लक्षणया प्राप्तत्वेऽत्र श्रूयते 'दश दशैकं चमसमनुप्रसर्पेयुः । शतं ब्राह्मणाः सोमान्भक्षयन्ती'ति तत्र संशयः । किं यजमानचमसं राजन्या दश भक्षयेयुः? उत ब्राह्मणाः? इति, तदर्थं च किं दश दशेति विधिः, शतं ब्राह्मणा इत्यनुवादः?, उतायमपि विधिः? इति । तत्रानुप्रसर्पेयुरिति विधिश्रवणात्तावत् चमस दशसंख्या विधीयते । तया संख्यामात्रं प्राकृतं निवर्तते, जातिस्तु प्राकृतैव तिष्ठति सवारुणैकहायनीन्यायेन जातिसंख्ययोर्विधौ नियमे सति ब्राह्मणचमसेषु ब्राह्मणा दश राजन्यचमसेषु राजन्या दश भवन्तीति शतं ब्राह्मणाः भक्षयन्तीति वर्तमानापदेशात्मकविशिष्टशतस्यानुवादः । भूम्ना च ब्राह्मणा ब्राह्मणेषु ब्राह्मण-शब्दः[१] अनुवादाच्च लक्षणाऽपि न दुष्यति । तस्माद्यजमानचमसं राजानो दश भक्षयेयुरिति । "उच्यते विधिरेवायमचोद्यात्प्रतीतेस्तथा । अन्यथा वचनं व्यर्थं लक्षणा च प्रसज्यते" ॥ न हि कृत्स्नानुवादस्य किंचिदस्ति प्रयोजनम् । सम्भवन्त्यां श्रुतौ नैव लक्षणा ऽप्युपपद्यते । तस्माच्छतानुवादेन ब्राह्मणत्वमिह चोद्यते । तत्र च न्यायतः प्राप्ता राजजातिर्निवर्तते । स्यात्पञ्चमलकारेण विधिरेव समिदादिवत् । ब्राह्मणानामेतो भक्षो राजन्यचमसे स्थित ॥[२]

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य पञ्चमः पादः ॥ ५ ॥

१ स्मिभिनो-मुकुषमुख्यते ।
२ प्राकृत्येष्वयामस्थत इति युक्त. पाठः ।

तदुपह्वानं किं सर्वेषां पृथगाह्वानमुतैकपात्राणामेवेति । अत्र शेषा-
त्सर्वेषाम् इति प्राप्ते ब्रूमः ॥ दृष्टार्थमनुज्ञापनमुक्तं भागाधिक्ये । अपे-
क्षितु तच्चैकपात्राणामेवेति तेषामेवानुज्ञापनम् ॥

स्वयं वषट्कर्तुर्भक्षास्ति नार्थपक्षणम् ।

सू० याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ १६ ॥

होतृप्रवचनाम्नानाद्याज्याः समाख्यया होतुः प्राप्तास्तत्र क्वचिद्
हेतुरपनीय यजमानस्य विधीयते । तस्यापनीयमानाया किं वषट्कार-
स्तदपनीयते? उत नेति होतर्येवावतिष्ठते याज्यामात्रं त्वपनीयत इति
संशयः । तत्र । यजमानस्य याज्येति याज्यापनयचोदना । वषट्कारस्तु
याज्यातो भिन्नत्वान्नापनीयते । याज्याया अधिवषट्करोतीति याज्यातो
वषट्कारस्य भिन्नत्वात्तदपनयने उपनयः । यद्यपि स्वयं वा निषद्य यज-
तीति यष्टृत्वं यजमानस्योक्तं तदपि याज्यामात्रप्रयोगादेवोपपन्नम् अत-
स्तेन प्रयुक्ताया याज्याया अधिहोमे नैव वषट्कुर्यादिति निमित्ताद्भक्षस्तस्मै-
वेति । प्राप्ते ब्रूमः । यष्टृत्वं यजमानस्य प्रत्यक्षवचनाच्छ्रुतम् । परिशेषं च
यष्टृत्वं वषट्कारेण ज्ञायते । याज्यामात्रप्रयोगे तु न तत्त्वेन न युज्यते ।
अनवधानं च यष्टृत्वं याज्यामात्रं ब्रूयते । अथान्यो यजमानो ऽतो वषट्-
कुर्यादिति एष नः । अतोऽपि यजमानस्य वषट्कारनिमित्तकः ॥

फलचमसस्य भक्षविकारताधिकरणम् ।

सू० फलचमसो नैमित्तिको भक्षविका-
रः श्रुतिसंयोगात् ॥ १७ ॥

"यदि राजन्यं वैश्यं वा याजयेत् यदि सोमं बिभक्षयिषेत् न्यग्रोधस्ति-
भिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्" इति राज-
न्यवैश्यनिमित्तेन सोमविकारः फलचमसः । स किं भक्षमात्रे सोम-
विकारः? उत याज्यायामिति संशयः । तत्र बिभक्षयिषेदित्युपक्रमात् न प्रय-
च्छेदिति चोपसंहारात् भक्ष एव विकारो न याग इत्येवं प्राप्ते ब्रूमः । यागा-
र्थद्रव्यस्य तस्य रूपलक्षणमस्ति । स्तिभिनीचमसो यागे द्रव्यमित्यभिधीयते ।
यदि सोमं बिभक्षयिषेदिति सोमभक्षमनूत्कीर्त्य तत्र फलचमसो विधीयते

१ अनुकीर्त्येतत् पा० ।

प्रकरणाच्च सोमभक्षो न कर्मान्तरम्। स च यागद्रव्यसंस्कारत्वेन निर्ज्ञातस्तत्सम्बन्धित्वेन च श्रूयमाणः फलमसोऽन्यथा तत्सम्बन्धायोगाद्यजमानचमसयागाभ्याससाधनत्वं प्रतिपद्यते। तदेव भक्षसम्बन्धकथनव्याजेन तद्द्वारा ऽवगतयागसम्बन्धित्वेन विधीयते। तद्विधौ च भक्षमन्त्रः प्राप्तपक्षानूह्यते अस्मादित्यविकारत्वम्। एतेनाभिषवपुनपूतीकाना, यागसाधनत्वं व्याख्यातम्॥

ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम्।

सू० अनुप्रसर्पिषु सामान्यात् ॥ १८ ॥

राजसूये दशपेय सोमविकारः तत्र राज्ञोऽधिकारः। ज्योतिष्टोमाच्च तत्र दश चमसाः प्राप्ताः। तेषु यजमानचमसस्य यद्वा लक्षयं प्राप्ततवेह श्रूयते 'दश दशैकैकं चमसमनुप्रसर्पेयुः। शतं ब्राह्मणाः सोमान्भक्षयन्ती''ति तत्र संशयः। किं यजमानचमसं राजन्या दश भक्षयेयुः? उत ब्राह्मणाः? इति, तदर्थं च किं दश दशेति विधिः, शतं ब्राह्मणा इत्यनुवादः? उतायमपि विधि? रिति। तत्रानुप्रसर्पेयुरिति विधिश्रवणात्सर्वत्र चमसे दशसंख्या विधीयते। तथा संख्यामात्रं प्राकृतं निवर्तते, जातिस्तु प्राकृतैवा[2]व तिष्ठते तत्रारुणैकहायनीन्यायेन जातिसंख्ययोर्मिथो नियमे सति ब्राह्मणचमसेषु ब्राह्मणा दश राजन्यचमसेषु राजन्या दश भवन्तीति शतं ब्राह्मणाभक्षयन्तीति वर्तमानापदेशात्प्रत्यर्थविशिष्टशतस्यानुवादः। भूम्ना च ब्राह्मणा ब्राह्मणेषु ब्राह्मण-शब्दः। अनुवादाच्च लक्षणाऽपि न दुष्यति। तस्माद्यजमानचमसं राजानो दश भक्षयेयुरिति। "उच्यते विधिरेवायमपेत्वात् श्रुतेस्तथा। अन्यथा वचनं व्यर्थं लक्षणा च प्रसज्यते॥ न हि कृत्स्नानुवादस्य किञ्चिदस्ति प्रयोजनम्। सम्भवन्त्यां श्रुतौ नैव लक्षणा ऽप्युपयुज्यते। तस्माच्छ्रुतानुवादेन ब्राह्मण्यमिह चोद्यते। तत्र च न्यायतः प्राप्ता राजजातिर्निवर्तते। स्यात्पञ्चमलकारेण विधित्वं समिदादिवत्। ब्राह्मणानामतो भक्षो राजन्यचमसे स्थितः॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य पञ्चमः पादः ॥ ५ ॥

१ जैमिनी-मुद्रितपुस्तके।

२ प्राकृतैवावतिष्ठत इति पुस्तः पाठः।

वचनं श्रुतं ततो दुर्बलं इति तत्र द्वयोरपि वाक्यप्रयोगाविशेषात्तुल्यबलतां मन्यते, न च प्रकरणे न कश्चिद्विशेषः "वाक्यानुबलं यस्मात्तस्मात्प्रकृतिगामिता। पूर्ववत्साप्तदश्यस्य तथा प्राप्ते ऽभिधीयते॥ सामिधेनीस्वरूपेण सम्बन्धो वाक्यतो भवेत्। तन्मात्रसङ्गते चैते मन्त्रे स्यातामनर्थके। अपूर्वसाधनत्वांशे लक्षिते सङ्गतिर्भवेत् तल्लक्षणावबोधश्च शीघ्रं प्रकरणाद्भवेत्॥ प्रकरणे विधीयमानस्य सर्वस्य प्रकृतापूर्वसाधनत्वं स्वरसत इति पाञ्चदश्यमपि तत्रैव विधीयमानं तादर्थ्येन विधातव्यमिति गम्यते तादर्थ्यं च तत्साधनरूपसम्बन्धे घटते न सामिधेनीस्वरूपसम्बन्ध इति स्वरूपातिक्रमेण साधनरूपलक्षणा तत्र लभ्यते, साप्तदश्यस्य तु रूपमात्रं गम्यते नापूर्वार्थत्वं, स्वरूपस्य च सामिधेनीस्वरूपेणापि संबन्धो घटत इति नोभयोपपत्तये लक्षणा, किं तु विधीयमानस्य साप्तदश्यस्यानर्थक्यपरिहाराय प्रतिपन्नक्रतुसम्बन्धसामिधेनीलिङ्गवशाद्विपरिवर्तमानमेव क्रत्वपूर्वं कथंचित् हृदयमागमय्य तादर्थ्यसिद्ध्यर्थं तत्साधनलक्षणाऽऽश्रयणीयेति क्रतुसम्बन्धविप्रकर्षाद्दौर्बल्यम्। अतः पूर्वनिविष्टपाञ्चदश्यबद्धत्वात्प्रकृतिनैव निराकाङ्क्षा प्रकृतिमलभमानं साप्तदश्यं विकृतिषु निवेक्ष्यते, तत्रापि न सर्वासु किं तु श्रुतसाप्तदश्यासु मित्रविन्दादिष्वेवेति दशमे वक्ष्यते॥

गोदोहनादीनां प्रकृतिगामिताधिकरणम्।

सू॰ नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्॥ ३॥

सप्तदश वैश्यस्येति यदि वै[1]श्यनिमित्तेन नैमित्तिकं साप्तदश्यं विधीयते तत्प्रकृतौ वा स्यादुत विकृतावेवेति प्रकृतेः पाञ्चदश्याविरोधात्पूर्ववद्विकृतिषूत्कर्षे द्वयोर्वा प्रकरणाधीनत्वक्रत्वर्थत्वाच्च विकल्पे प्राप्ते ऽभिधीयते, नैमित्तिकं प्रकृतावेव नित्यं पाञ्चदश्यं विकृत्य निविशते तुल्यप्रकरणत्वात्तत्रोत्कर्षं तावद्वृच्छति "प्रकृतौ निविशेतास्तत्रापि न विकल्प्यते। पाञ्चदश्येन किं त्वस्य बाधकत्वेन वर्तते

१ वैश्यनिमित्तेनेति पा०।

यत्त्वे प्रणयनादिद्वारतुल्यतयाऽस्ति विरोधः, ततश्च क्रत्वर्थस्य तस्मि-न्प्रयोगे बाधः प्रयोगान्तरे त्वप्रवृत्तस्याप्यने, सामान्येन हि स श्रुतः पशुकामप्रणयनप्रयोगे तु वाक्यान्तरगतश्चमसः सन्निधिमात्रेण सम्बध्यते गोदोहनं तु तत्रैव वाक्ये श्रुतमिति बलीयः, तदुक्तं 'पशुकामप्रयोगे तु क्रमेण चमसाङ्गता । श्रौताद्गोदोहनात्तत्र चमसस्य निराक्रिये' ति बाधितत्वादेव न तदानीं चमसादेरङ्गत्वमवघातादेरिव कृष्णलादौ, अतस्तल्लोपेऽपि नास्ति वैगुण्यं येन क्रियाफलविनाशस्तद्भयाच्च प्रणयनाभ्यासः स्यात् 'गुणहानिर्हि वैगुण्यं न चास्य गुणता तदा । गोदोहनं च न गुणः क्रतोः कामाय चोदनात् । किं तु प्रणयनं द्रव्यहीनमङ्गं क्रतोस्तदा काम्यनैमित्तिके तस्मात्प्रकृतौ नित्यबाधके" ॥

आधानस्य पवमानेष्ट्यङ्गताधिकरणम् ।

**सू० इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ४ ॥**

आधानपवमानेष्टयश्च मिथः सन्निहिता समाम्नाताः, तत्र किमाधानमिष्ट्यङ्गम् ? उत ने ? ति तत्र प्रकरणादङ्गत्वम् । ननु फलवत्सन्निधावफलं तदङ्गं, न चेष्टयः फलवत्य आधानं सफलमग्निनिष्पादकतया ऽतो न विपरीतमङ्गाङ्गित्वं, सत्यमेवं पूर्वपक्षवादी मन्यते अनयोऽतिदेशेनेष्ट्यङ्गम् आधानं चाग्निसंस्कारकमवगम्यमानं प्रकरणादिष्ट्यङ्गभूताग्नीनां संस्कारकमवगम्यमानं प्रकरणादिष्ट्यङ्गभूताग्निसंस्कारकतयाऽवघातादिवदिष्ट्यर्थम्, इष्टीनां तु विश्वजिदादिन्यायेन फलकल्पना भविष्यतीति, सिद्धान्तस्तु फलवदग्निहोत्राद्यर्थत्वादग्नयः फलवन्तः तदर्थं चाधानं श्रुतिसंयोगात्, इष्टयोऽपि प्राकरणिकेन वाक्येन फलवदाग्न्यङ्गं प्रकरणाच्चाऽऽधानस्यैव फलवतोऽङ्गं विज्ञायमाना न कल्प्यफला भवितुमर्हन्ति विनैव कल्पनया सर्वेषामर्थवत्त्वात् । यस्त्वातिदेशिकमग्नीनामिष्ट्यङ्गत्वं सदोपदेशिकेनेष्टीनामग्न्यङ्गत्वेनाधानाङ्गत्वेन वा विरुध्यमानं बाध्यत इति वक्ष्यते, तस्मादिष्ट्यर्थमाधानम्, अनारभ्यवादप्रस्तावादाधानवाक्यस्यानारभ्यवादत्वमेवावसितम् ।

आधानस्य सर्वार्थताधिकरणम् ।

**सू० तत्प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः ॥ ५ ॥**

रात्मानमपि गृह्णन्ति । ननूक्तमग्निप्राप्तेरर्थतस्तासामपि प्राप्तिरिति अत्रोच्यते, सत्यं, प्राप्नुवन्त्यग्नयस्तु त्वर्थवशाद्गृह्यन्ते ते इष्टीनां साधनभूताः कथमिव तासां साधनीभवेयुः । नन्वत एवाग्न्यर्थमन्याः क्रियन्ते तत्साधितैरग्निभिरन्या इष्टयः कार्यन्ते इत्युक्तं, न सर्वथा तावत्पवमानहविरिष्टयोऽग्निवत् कर्तव्या ताभिश्च क्रियमाणा जायन्ते न वा? यदि नेत्याह किमर्थं ताः क्रियन्ते । अथ जायन्ते सिद्धोऽयं नान्याः कर्तव्याः अग्न्यर्थमेव हि ताः क्रियन्ते नेष्ट्यै[1] सिद्धा इति नान्याभिः प्रयोजनं, तस्माच्च पवमानेष्टिषु पवमानेष्टयः कर्तव्याः ॥

उपाकरणादीनामग्नीषोमीयधर्मताधिकरणम् ।

सू॰ तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ ७ ॥

अथ प्रकरणस्य पूर्वैः सह विरोधविचारं प्रसङ्गेन समाप्याधुना स्थानस्य पूर्वैः सह विरोधाविरोधौ विचार्येते, पादशेषेण प्रकृतिविकृतीनां समानासमानविधानत्वं विचारितम्, अत्रापि तदेवानुवर्तते ज्योतिष्टोमे त्रयः पशवः अग्नीषोमीयः क्रयसविधावुत्पन्नो वचनादौपवसथ्येऽहन्यनुष्ठीयते, तस्मिन्नेवाहनि सवनीयाम्नानमाग्नेयः पशुरग्निष्टोम इत्यादि, तत्रैव पशुधर्मा यूपच्छेदादयः पठिताः, सौत्येऽहनि पुनः सवनीयाम्नानम् आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति, अनुबन्ध्यस्त्ववभृथान्ते समाम्नातः, तदिह विचार्यते किमेते धर्मास्त्रयाणामपि पशूनां साधारण्येन विधीयन्ते? किं वा सवनीयस्यैव? अथाग्नीषोमीयसवनीययोः? उताग्नीषोमीयस्यैव? इति तदर्थं च किमग्नीषोमीयस्य स्थानं ज्योतिष्टोमिकेन प्रकरणेन सवनीयावान्तरप्रकरणेन वा विरुध्यते, नेति तत्सिद्ध्यर्थं च किं सवनीयानामौपवसथ्येऽह्नि प्रकरणमस्ति? नास्तीति चिन्तनीयं, ततोऽप्येतद्विवेक्तव्यं किमौपवसथ्येऽह्नि सवनीयोत्पत्तिः? उत सौत्येऽहनीति तत्र प्रकरणाज्ज्योतिष्टोमगृहीता धर्मास्तदङ्गेषु पशुषु विज्ञाय-

१ ते च सिद्धा इति पा॰ ।

मानास्तत्प्रकरणाद्विशेषात्सर्वार्था भवन्ति, ज्योतिष्टोमद्वारेण हि पशूनां धर्म-
विधिः प्रकरणे न स्यात् कस्यचित्प्रकरणम् अग्नीषोमीयस्यापि स्थानमात्रं, तत्र
प्रकरणाद्दुर्बलं सवनीयस्यापि तुल्यायामुत्पत्तिरिति तत्र गुणार्थं श्रवणमिति
नास्त्येव विशेषतः प्रकरणम्, अनुबन्ध्यस्य स्थानादग्नीषोमीय इव । तस्मात्सर्वार्था ।
स्यादेतदग्निविशिष्टं प्रकरणं यदि ज्योतिष्टोमद्वारं स्यात् सवनीयस्य तु स्वत
एव विशेषतोऽवान्तरप्रकरणमस्ति सौत्येऽहन्याश्विनग्रहणोत्तरकालं गुणार्थं
श्रवणम् सोपवसथेऽहनि गुणाभावात्सवनीयानामुत्पत्तिः, अतः प्रकरणात्
सर्वार्थाः । ये त्ववान्तरप्रकरणं नेच्छन्ति तेषां सुतरामविरोधः । ज्योतिष्टोम
सञ्ज्ञकं समिदादिषु सोमिकधर्मवादिनीति तस्मिन्पक्षे साधिकारेऽपि तुल्यम्
अथ तस्य तस्मादितुल्यं पूर्वं क्रियत इति देवताविशेषोऽप्यनन्त
समिदादिष्वपि मन्त्रवर्णाद्दर्शपूर्णमासगुणार्थत्वस्यैव मा प्रापत्सोमिक
धर्मो दार्शपौर्णमासिकधर्मास्तु प्राप्नुयुः वैमृधवदिति चेत् इदमपि
पितृयज्ञे तुल्यम् । यत्र तत्र द्रव्यदेवताविधिविधानमिति तत्कल्पनाविनिर्देशस्तस्य
समिदादिष्वपि तुल्यमिति दर्शितं प्रकरणाधिकारे, तस्मादन्यत्रावान्तरप्रकरणम्
यदि चेतत्कल्प्यते तत स्थानादेव सवनीयार्थता वक्तव्या स्यादग्नीषोमीय
स्याप्यविशिष्टमिति केवलसवनीयार्थत्वपक्षो ऽप्यत्र निर्मूलः स्यात् । ननु
तथाप्युभयार्थत्वपक्षो निर्मूलः, यथा न निर्मूलस्तथा वक्ष्याम, तस्मात्सवनी
यार्था इति द्वितीयं पक्षं गृह्णाम एतत्सवनीयार्था इति स्थानादग्नीषोमी
यार्था अपि भवन्तु । ननु प्रकरणात्स्थानं दुर्बलं तस्मात्तस्य स्थानात्
अग्नीषोमीयशेषत्वं प्रमाणं स्यात्तद्यत यद्यपि प्राकरणिकेन सवनीयार्थ
त्वेन धर्मो निराकृतस्तथाप्यग्नीषोमीयस्य पशुधर्मार्थत्वात्तेनापि सम्ब
ध्यते यथोपदेशावगतप्रकृत्यङ्गभावा धर्मा दुर्बलेनाप्यतिदेशेन विकृतेष्वपि
भवन्ति एवमेतेऽप्युभयार्था इति प्राप्ते ब्रूमः अग्नीषोमीयशेषत्वं यदुक्तं सत्य
मेव तत् । सवनीयार्थता तेषामत्र जानीमहे कुतः ॥ सवनीयस्य धर्मेषु नास्ति
प्रकरणं यतः । न ह्यौपवसथ्येऽह्नि सवनीयो विधीयते । यत्र प्रकरणं तत्र
सवनीयस्य लभ्यते यथाश्विनग्रहणस्य [illegible] विधिस्तथा । कीर्त्यते सवनी
योऽत्र सौत्ये त्वेव विधीयते । कर्मणश्च विधिर्यत्र तत्र प्रकरणं भवेत् । ननु

यत्र गुणार्थेन श्रवणं तत्र विद्यते । तस्मात् सवनीयस्य प्रक्रिया गुणप्रविधौ पश्वैापवसथ्यवाक्ये गुणो नास्तीत्युक्तम्, अस्ति प्रचारविप्रकर्षः आग्नेयः पशु-रित्याद्यनुक्रान्त्यं यथा वै मत्स्य इत्यादिना निन्दित्वा तत्परिहारापेक्षया वपया प्रातः सवने चरन्तीत्यादिना प्रचारविप्रकर्षो विधीयते, शक्यते च सौत्ये-ष्वेव कर्मानूद्य प्रचारविप्रकर्षो विधातुमुपादेयत्वात्, सुत्यावाक्येषु कालो गुणः, न चासावनुपादेयत्वादौपवसथ्यात्पश्चद्दूरस्थाविपरिवर्तमानक-मेणानुवादेन विधातुं शक्यत इति तत्र नावत्कर्मोत्पत्तिर्विधानमथ्या । नन्वौपव-सथ्येऽप्युत्पन्नं कर्मप्रचारोत्कर्षादुत्कृष्य प्रातःसवने विपरिवर्तेत इति शक्यत-एव कालविधिः, नैव ये हि वपाप्रचारात्प्रत्यञ्चः पदार्थास्तेषामेव तदा विपर-भिसम्बन्धादिति न्यायेनोत्कर्षः स्यात्, अपूर्वत्वाद्वा तेषामपि न स्यात्, उपा-करणादीनां तु प्राचां पदार्थानां नास्त्येवोत्कर्षः, तस्मादुपाकरणस्य प्रातः-सवने विपरिवृत्त्यभावात् तस्य कालविधिः सम्भवतीत्युत्पत्तिविधिरेवायम् इतरस्तु गुणविधिरिति प्रकरणाभावाच सवनीयार्थत्वं स्थानात् त्वग्नीषो-मीयार्थत्वम् । यत्तु महाप्रकरणेन स्थानं बाधित्वा ज्योतिष्टोमगृहीताः सर्व-पशूनामित्युक्तं, तत्रोच्यते पशुधर्मा हि पशुयागमाकाङ्क्षन्ति, ज्योतिष्टोमस्तु सोमयागो न पशुधर्मान् गृह्णाति यदि न कश्चिदपि पशुधर्मान् ग्रहीतुं शक्नुयात् ततो गत्यभावाज्ज्योतिष्टोमगृहीताः सन्तस्तत्रानर्थक्यात् तदङ्गे-ष्ववतरेयुः, शक्नोति च स्थानादग्नीषोमीयो ग्रहीतुमिति तदङ्गं धर्माः न सर्व-पाशवी, नापि सवनीयस्य, नोभयोः, अग्नीषोमीय एवातो विधेर्धर्मा व्यव-स्थिताः अन्यत्र त्वतिदेशेन गच्छन्ति न विधानतः । विधिस्तु [illegible] एवेति सूत्रे विधिरुदाहृतः ॥

शाखाहरणादीनामुभय-दोहधर्मताधिकरणम् ।

सू॰ दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ ८ ॥

दर्शपूर्णमासयोः सायं दोहः पूर्वेद्युः प्रातर्दोहश्चापरेद्यु दोहधर्माः शाखाहरणादयः पूर्वेद्युः क्रियन्ते ते किं सायं दोहार्थाः ? उतोभयार्थाः ? इति सन्देहे पूर्ववदनुष्ठानसादेश्यादव्यवान्तरप्रकरणाद्वा सायं दोहार्था इति प्राप्ते

नापि प्रकरणं तेषां विशेषणं[1] तयेष्यते ॥ न ये सोमप्रकरणगतास्तेषाममी धर्मा इति किं तु यत्रै प्रकरणं तेन प्रकृतेन विशेषणात् । धर्मास्तत्साधनानां हि यज्ञानां शेषतामियुः, ये चानारभ्य विहिता ये च प्रकरणे ग्रहाः । सर्वे तत्साधनत्वात्तद्धर्मसम्बन्धमाप्नुयुः ।

चित्रिण्यादीष्टकानाम प्रकृतार्थाधिकरणम् ।

सू॰ अग्न्यङ्गमप्रकरणे तद्वत् ॥ १२ ॥

अग्निप्रकरणे समाम्नाता इष्टकाधर्मा मन्त्रपदाम् अक्ष्ण्यामित्यादयः, किं प्राकरणिकीनामेवेष्टकानाम् ? उतानारभ्याधीतानामपि चित्रिणीरुपदधातीत्येवमादीनाम्, पूर्ववदेव संशयपूर्वपक्षौ । पूर्वत्रांशद्वाभ्यामनारभ्योक्तयोरपि प्राकरणिकेन वाक्येन विनियोगोऽस्तीति प्रकरणसम्पर्शाद्युक्तो धर्मसम्बन्धः, चित्रिण्यादीनां तु विनियोगोऽप्यनारभ्यवादेनैवेति प्रकरणसम्पर्शाभावाच्च तद्धर्मसम्बन्ध इति विशेषाशङ्का, प्रकरणसम्पर्शाभावेऽपि प्रकृतापूर्वसम्पर्शात्तत्साधनविशेषिणो धर्मास्तासामपि भवन्तीति सिद्धान्तः ॥

मानोपावहरणादीनां सोमसमानधर्मताधिकरणम् ।

सू॰ नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ १३ ॥

ज्योतिष्टोमे राजन्यवैश्यनिमित्तेन फलचमसश्चोदितः स चेज्याधिकार इति स्थितम्, मन्त्याभिषवादिसंस्कारास्ते किं नैमित्तिकस्यापि फलचमसस्य समानाः ? उत नित्यस्यैव सोमचमसस्य नैमित्तिकं तु तद्विकार इति विचार्यते तत्र "अपूर्वसाधनत्वाद्धि संस्कारविधयो यतः । तस्मान्नैमित्तिकेऽपि स्युः साधनत्वाविशेषतः" । सोममभिषुणोतीत्ययमर्थः अभिषुतेन यजेतेति, फलचमसेनापि चेज्यते, अतस्तस्याप्यभिषव उपदिष्ट एव भवति, "तेन व्रीहियवा नित्या समानविधयो यथा । नित्यनैमित्तिके द्रव्ये समानविधिनी तथा" उच्यते साधनेनैव नित्यसंस्कारसङ्गतिः । सरूपेण स्वसंयुक्ता न विरूपेण युज्यते" संस्कारा हि निमित्तसंयोगाभावात्क्रतोः स्वाभाविकाङ्गत्वेन विधीयमानास्तदनुरूपमेव द्रव्यमाश्रयन्ति व्रीहियवञ्च यवा अपि प्राप्तरूपेण क्रतौ

१ विशेषेण तयेष्यते इति पा- ।

नित्या एवेति धर्मविधेर्वैरूप्याच्छक्नुवन्ति द्वारतामुपगन्तुं यद्यप्यनुष्ठानरू-पेणानित्यत्वं व्रीहीणामपि तुल्यमेवेति नित्यद्वाराभावादगत्याऽवघाता-दीनामनित्यद्वाराश्रयणं युक्तम्। आम्नानस्वरूपेण च नित्यत्वाद्व्रीहिवद्विधे-र्नित्यवदाम्नातसंस्कारविधिकस्यास्य शास्त्ररूपसमानत्वात् युज्यते, शक्यते हि वक्तुमवहन्ति व्रीहिभिर्यवैर्वा यजेतेति, फलचमसस्तु निमित्तप्रयोगाद्राज्ञा-नैमित्तिकस्य कथं नित्ये योगक्रतुभावैरभिषवादिभिरकृताश्रयतामुपेयात् किंतु यल्लोतदभिषवेण नित्यं ज्योतिष्टोमम् उपकुर्यादनित्यफलचमसद्वार-मिति तथा नित्येन फलचमसेन नित्यकर्तृत्वाभिषवसंस्कृतेन यजेतेति यद्यभिषुतेन फलचमसेनेत्युच्यते, ततः फलचमसोऽपि नित्याभिषवद्वारमिति नित्यः स्यात्, सोमस्वाम्नानतः प्रयोगत[१]श्चानित्य, राजन्यवैश्ययोरपि यज-मानयो[२]रसत्येव सोमो निवर्तेत अन्यत्र तु सोमः स्थित एव, तस्मान्-नैवाभिषवादिविधिः। अपि च नित्यनैमित्तिकौ च न युगपद्विधीयेते किं-तु नित्यं विधाय पश्चान्नैमित्तिकं विधेयं, तद्धि निमित्ते सति क्रतोर्विशेष-रूपेण बोध्यते निमित्ते स्वैतद्रूपः क्रतुरिति, एवं च स्वारसिकरूपे प्राक् सिद्धे शक्यते वक्तुं, तस्माद् यया वलाया क्रतोः स्वाभाविकं नित्याङ्गं विधीयते तस्यामेव संस्कारविधयः तद्विशेषणत्वेन स्वार्थं विधाय निवृत्तव्यापारा न भूयः शक्नुवन्ति नैमित्तिकेनापि सम्बन्द्धुम् आवृत्तिप्रसङ्गात्। तस्मा-न्नित्यार्था धर्मा, नैमित्तिकस्य स्वनिर्देशेन भविष्यन्ति ॥

प्रतिनिधावपि मुख्यधर्मा मुख्याभावाधिकरणम्।

सू० प्रतिनिधिश्च तद्वत् ॥ १४ ॥

मुख्याभावे प्रतिनिधिर्भवति स किं मुख्येन समानविधानो नेति मुख्याभावनिमित्तत्वात्पूर्ववदसमानविधौ प्राप्ते उच्यते, स्यादेवं यदि द्रव्या-न्तरमिह यागस्य साधनत्वेनोपादीयेत व्रीह्यवयवास्त्विह सकलासम्भवा-द्विकला उपादीयन्ते, नीवारगतास्तदनुषङ्गादवर्जनीयतया नीवारोपादान न साधनतया, साधनत्वे प्रमाणाभावात्। व्रीह्यवयवाश्च व्रीहिगता इव नीवारगता अपि संस्कारविध्यन्विता एवेति समानविधानता ॥

---

१ प्रयोगतश्च नित्य इति पा०।
२ राजन्यवैश्ययोरिति पा०।

श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ।

सू० नियमार्था गुणश्रुतिः ॥ १५ ॥

अथ यत्र श्रुतः प्रतिनिधिः यथा यदि सोमं न विन्देत पूतीकान[1]भिषुणुयादिति तत्र वचनेन पूतिकानामेव साधनत्वं विधीयते, न नीवारवद्द्रव्यसाधनत्वम्, अतो द्रव्यान्तरमिदं सोमाभावे निमित्ते तत्साधनतापन्नं फलचमसवदसमानविधानं, मैवं न ह्यत्र पूतिका यागसाधनत्वेन विधीयन्ते सोमाभावे पूतिकैर्यागं कुर्यादिति, किं तर्हि सोमावयवोपलक्षणतया प्रतिनिधिनियमो ह्ययं, तेन सोमाभावे पूतीकैर्यागं कुर्यादिति नाभावे विधिरिति वक्ष्यते तदेषा वचनव्यक्तिः यत्सकलसोमावयवाभावे विकल्पावयवानुपाददीत तत्पूतिकागतानिति, तस्मादत्रापि सोमावयवगतामे तत्साधनत्वात्पूर्ववत्समानविधानत्वम् ।

दीक्षणीयादिधर्माणाम् ग्निष्टोमाङ्गताधिकरणम् ।

सू० संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ १६ ॥

नैमित्तिकं काम्यं नित्येन समानविधानं न भवति, नैमित्तिकस्यानित्यत्वात्तद्द्वारेण धर्माणां नित्यवत्कृत्स्नत्वेनानुपपत्तेरित्युक्तम्, इह काम्या गुणाश्चिन्त्यन्ते किमाश्रयभूतया क्रियया समानविधानाः उतासमानविधानास्तद्विकारा इति, तत्र काम्यस्य फलवत्त्वात्क्रतुवदेव स्वयमितिकर्तव्यतासाकाङ्क्षत्वाच्च तद्द्वारेण कृत्स्नधर्मत्वमङ्गाना, येन नैमित्तिकवद्विरोधः स्यात्, अतो न गतार्थमिदं सत्यापत्त्या च प्रदर्शनार्थम् । अन्योऽपि दाशाभ्ययज्ञादिहशाहर्तव्यः, ज्योतिष्टोमस्य चतस्रः संस्थाः अग्निष्टोमः, उक्थ्यः, षोडश्यतिरात्र, इति अग्निष्टोमस्यैव विधान्तरमत्यग्निष्टोम इति यत्र षोडशिग्रहणमत्यग्निष्टोमे राजन्यस्य गृह्णीयादिति वाजपेयश्च षोडशिन एव भेदः, आप्तोर्यामश्चातिरात्रस्य एतदभिप्राय सप्त सोमसंस्था इति स्मरणं, तत्राग्निष्टोमस्य—संस्था क्रत्वर्था कृतोस्तु फलं ज्योतिष्टोमेन स्वर्गकाम इति उक्थ्या[2]दयः संस्था ज्योतिष्टोमाश्रिताः फले विधीयन्ते "पशुकाम

१ पुतीकाम इति पा० ।

२ उक्थ्यादय इति पा० ।

उक्थ्यं गृह्णीयात्' "षोडशिना वीर्यकामः स्तुवीत" "अतिरात्रेण प्रजाकामो याजयेत्" इति । ननु ग्रहणादीनामत्र फले विधानं न संस्थायाः, उच्यते उक्थ्यशब्दोऽयं स्तोत्रविशेषवचनस्तत्सम्बन्धाद् ग्रहणं उपचर्यते, न चैकस्यावयवयुक्ते समाप्तौ च स्तोत्रसम्बन्धिन्यां वाचक एव तत्संस्थाविशिष्टे क्रतौ प्रयोगाद्रूढो यज्ञ इति तत्र वाक्याधिकरणन्यायाद्विशेषणभूता संस्थैवाभिधेया स्तोत्रसम्बन्धात्समाप्तावपि लक्ष्यते इति चेत् न तत्सम्बन्धिक्रतुमात्रे प्रयोगाभावात्, अस्ति हि षोडशिसंस्थे यज्ञे अतिरात्रसंस्थे चोक्थ्यस्तोत्रम्, न च तत्र यज्ञे उक्थ्यशब्दप्रयोगः, तथा चैतन्नाप्रयुज्येत तत्संस्था एव प्रयोगादभिधेयेति संस्था, सैवात्र फलाय चोद्यते पशुकाम उक्थ्यं गृह्णीयात् उक्थ्यात्मिकां संस्थां कुर्यादित्यर्थः, ग्रहणं तु फलवत्संस्थाङ्गत्वेन वाक्यान्तरप्राप्तमनूद्यते, एवं षोडशि-शब्दस्यापि स्तोत्रवचनत्वं संस्थावचनत्वं च व्याख्येयं तत्र लिङ्गव्यवस्था–यदा समाप्तिवचनः तदाप्यतो लिङ्गाभावाद्वचनत्वं पुंल्लिङ्ग' । स्तोत्रवचनस्तु नपुंसकः फलवाक्ये च पुंल्लिङ्गः षोडशि-शब्दो वाक्यशेषादवगम्यत इति संस्थैव फले चोद्यते, स्तोत्रं तु पूर्ववदनूद्यते अतिरात्र इति तु रात्रिमतीत्य यः संतिष्ठते यज्ञः स उच्यते तत्र संस्थापि संस्थाविशिष्टयज्ञवचनत्वे विशिष्टस्य यज्ञस्य प्राप्तत्वादप्राप्ता संस्थैव विधीयते विधेयस्य च फलमिति संस्थैव फले साधनम् । एतदिह विचार्यते किं दीक्षणीयाद्यङ्गविधानं ज्योतिष्टोमस्य संस्थानां च समानं? उत ज्योतिष्टोमस्यैवेति, तत्र 'तुल्यप्रकरणत्वेन सर्वेषां फलवत्त्वतः । तुल्यमङ्गविधानं स्यादिति प्राप्तेऽभिधीयते । वैरूप्यमङ्गवाक्यानां प्रसक्तेनोभयान्वये । सम्भवत्येकरूपत्वे नानात्वं न युज्यते । न च क्रतुमनादृत्य संस्थाभिर्घटतेऽन्वयः । संस्थाऽप्रधानत्वेनैव युज्यते क्रतुसङ्गतिः । संस्था ह्यक्रियात्मकत्वाद्द्रव्यादिवदाश्रयभूतां क्रियामपेक्ष्य फलं साधयति, साधननिर्देशि चाङ्गजातं तदा संस्थापि सम्बन्धुं प्रस्थितं तदा तत्साधनत्वनिर्वाहिका क्रियापि सैव दृश्यते

---

१ तत्संस्थाविशिष्टे इति पा ।

सा च स्वयमपि फलवत्त्वात्सत्त्वार्थमपि प्रस्थितमङ्गजात किमिति न गृह्णाति तस्मात्सत्त्वासम्बन्धत्वादेवानोऽप्यवर्जनीयः क्रतुसम्बन्ध इति न केवलमस्यार्थत्वं क्रतुस्तु स्वयमेव फलसाधनत्वादनारभ्यैव सत्त्वा शक्नोत्यङ्गजातमात्मसात्कर्तुमिति तदर्थमङ्गविधानं[1] न सत्त्वार्थम्, अत एव प्रमाणविशेषत्वादुभयार्थमित्यपि न शक्यं वक्तुं विशेषग्रहणात्, एवमपि सत्त्वार्थत्वं किं न भवति वैरूप्यादिति ब्रूमः, अङ्गविधयो हि न स्वार्थमात्रे पर्यवस्यन्ति यान पेक्ष्यप्रसङ्गात्, प्रयोगवाक्ये तु विशेषणत्वेन स्वार्थं समर्पयन्ति तेन नित्यानित्यप्रयोगद्वयानुसारेण नित्यवदनित्यवच्च स्वार्थं बोधयन्तस्तात्पर्यभेदाद् भिद्येरन्, यो ज्योतिष्टोमेन फलं कुर्वीत स एव यश्च ज्योतिष्टोमे कदाचित्स स्यात्फलार्थी स एवमिति । किं च गुणः फलाय चोद्यमानः पूर्वप्राप्तं प्रययुक्तां क्रियामाश्रित्य पश्चात्कोद्यते यथायुक्ता च क्रिया प्रयुज्यते, तत्र यागनक्रिया प्रयुज्यते तत्र यागजनक्रियाविधिसमये व्यापृतानामङ्गविधीनां पश्चात्तने ऽपि गुणफलविधौ व्यापियमाणानां विरम्य व्यापारः प्रसज्यते, अथ चापरो ऽत्र विशेषः सोमस्तावत्क्रत्वा यागार्थस्तत्संस्कारार्थश्च क्रयाभिषवग्रहणादयस्तद्द्वारत्वाद्यागार्था एव न सत्त्वाभिः सम्बध्येरन्, सर्वं च प्रकरणं सोमसंस्कारविधिनिरुद्धमिति तैरसम्बन्धिपदैर्विच्छिन्नं सत्त्वानां प्रकरणं न दीक्षणीयादिकमप्यङ्गमलं ग्रहीतुं तस्मादसमानविधाना सत्त्वाः ॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य षष्ठः पादः ॥ ६ ॥



१ तदर्थमङ्गजातमिति ।

## तृतीयाध्यायस्य सप्तमः पाद आरभ्यते ॥

बर्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गताऽधिकरणम्।

**सू० प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥१॥**

समानासमानविधयप्रसङ्गाङ्गान्यप्रकरणविरोधाविरोधविचारेण द-र्शपूर्णमासयोर्वेद्या बर्हिर्व्यासादयति वेदिं स्तृणाति बर्हिषि हवींष्यासाद-यति बर्हिर्लुनातीति श्रुता वेदिबर्हिर्धर्माः किमङ्गप्रधानहविषां साधा-रणाः? उत प्रधानहविषामेवे?ति चिन्त्यते, तत्र वाक्यस्यात्यन्ते सत्यान-र्थक्यात्प्रकरणान्तरे वातिप्रसङ्गादवश्य प्रकरणेनैकवाक्यत्वमपेक्षितव्यं प्रकरणं च प्रधानस्यैवेति प्रधानहविषामेव वेद्याद्यङ्गं न प्रयाजादिहविषामिति प्राप्ते ब्रूमः, सत्यं, प्रकरणैकवाक्यत्वं न तु अत्यन्तसङ्कोच[1]स्तथा वाक्यस्यात्यन्त-सङ्कोचप्रसङ्गात् प्रधानगृहीता हि वेदिस्तदर्थेष्वेव हविःषु स्यात्, तत्र वाक्यस्यात्यन्तसङ्कोचः स्यात्, तस्मादेवं वाक्यार्थः प्रधानार्थं हविरासा-दनद्वारेण प्रधानापूर्वं वेदिः कुर्यादिति, किं तर्हि दर्शपूर्णमासोपकारिह-विरासादयामिति, एवं हि नातिसङ्कोचः कृतः स्यात्, न चानर्थक्यम्, अङ्ग-हविरपि च प्रधानस्योपकारकमेवेति तत्रापि वेदिः स्यात्। यद्वाऽस्तु प्रधानस्य ग्राहकत्वं द्वारं तु न तदर्थमेव हवि किं तु तदुपकारिहविरपि च वाक्यसङ्कोचपरिहारात्, सम्भवति चोपकारिमात्रस्यापि द्वारत्वम्, अतः प्रधानप्रयुक्तानामपि वेदिबर्हिरादिधर्माणां प्रयाजाद्यपूर्वस्योपनिपत्तिद्वारेण तादर्थ्यं प्रयाजादीनामिव भविष्यतीति सिद्धं प्रयाजाद्यङ्गत्वं वेद्यादेः॥

स्वामिसंस्काराणां प्रधानार्थताऽधिकरणम्।

**सू० फलसंयोगात्तु स्वामिसंयुक्तं प्रधानस्य ॥ २ ॥**

ज्योतिष्टोमे केशश्मश्रुवपनादयो यजमानसंस्काराः किमङ्गप्रधा-नार्थाः? उत प्रधानार्थाः? एवेति संशय, तदर्थं च किमेते कर्तृत्वाद्युपाधिनः? किं भोक्तृत्वाद्युपाधिना? इति तत्र भोक्तृत्वस्य प्रधानफलत्वात्तदर्थाः सन्तः संस्कारा प्रधानतुल्यफलतया न प्रधानार्था भवेयुः तादर्थ्य

---

१ न तु बाधकतया वाक्यस्येति पा०।

च प्रकरणादवगतमतः कर्त्रर्थाः, कर्ता चाङ्गप्रधानार्थः संस्कारा अपि तद्गता अङ्गप्रधानशेषाः स्युरिति प्राप्तेऽभिधीयते “भोक्तृत्वस्य प्रधानत्वाददृष्टत्वाच्च तद्गुणाः । संस्काराः कर्तृभावस्तु गुणो दृष्टश्च सोऽन्यतः ।” प्रधानं हि भोक्तृत्वं गुणभूतं कर्तृत्वं भोक्तृत्वार्थत्वात्, संस्काराश्च गुणभूतास्ते प्रधानार्था एव युक्ताः, न गुणार्थाः, “गुणानां च परार्थत्वा”दिति न्यायात् अदृष्टं च भोक्तृत्वं शास्त्रगम्यमुपायमपेक्षते, कर्तृभावस्तु विनाऽपि संस्कारैरन्यस्मात् प्रमाणान्तरादेव दृष्ट इति न तादर्थ्यमेषां, न च भोक्त्रर्थानां प्रधानाङ्गत्वविरोधः, न हि ते फलं जनयन्ति यतः प्रधानतुल्याः स्युः किं तु तादृशं संस्कारं यजमाने कुर्वन्ति येन यजमाने प्रधानं स्वफलं जनयितुमलं तेन क्षेत्रसंस्काराणामिव बीजावपनार्थत्वं प्रधानार्थत्वं संस्काराणां, प्रधानफलं हि यजमानो भुङ्क्ते नाङ्गफलं तस्य क्रत्वर्थत्वात् ॥

सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गताऽधिकरणम् ।

सू० चिकीर्षया च संयोगात् ॥ ३ ॥

सौमिकी वेदिः किं प्रधानार्था ? उताङ्गार्थाऽपीति चिन्ता तत्रैषमतिशय्या[1]महेऽस्यां कर्तुमिति तुमुना चिकीर्षितार्थता गम्यते प्रधानं च फलवत्त्वाच्चिकीर्षितं नाङ्गानि, तस्मात्प्रधानार्था वेदिः स्थितं तावदपर्यवसितम् ॥

अभिमर्शनस्याङ्गप्रधानोभयाङ्गताधिकरणम् ।

सू० तथा[2]प्रधानेन ॥ ४ ॥

संयोगादित्यनुवर्तते तल्लिङ्गयाऽनन्तरोपक्रमः । दर्शपूर्णमासयोर्हविरभिमर्शनार्थो मन्त्रः “वसुहीनावापौर्णमासीमभिमृशेत्यस्याहोत्राममावास्या”मिति किं तावदङ्गप्रधानार्थ उत प्रधानार्थः ? इति पौर्णमास्यमावास्या-शब्दयोः प्रधानवचनत्वात्प्रधानार्थत्वं स्थितादुत्तरं सत्यं, चिकीर्षितार्था वेदिः साङ्गं चिकीर्षितं तद्धि फलाय पुष्कलं न करणमात्रम्, यतोऽङ्गप्रधानार्था वेदिरित्यग्नीषोमीयविकारे निरूढपशौ प्रवर्तते नन्वशेषिमतामियमाग्नीषोमीयस्य तु प्राकृती वेदिरस्त्येवेति न तद्गतिवं, नैव यचमथनाग्न्यर्थत्वावगतेः प्राकृतौ न प्रयोक्ष्यते द्वितीयस्योत्तरं पौर्णमा-

१ ऽस्यामहे इति पा० ।
२ तथाऽभिधानेनेत्यपि पुस्तकान्तरे सूत्रपाठः ।

स्यमावास्या-शब्दौ कर्मवचनौ, न च कर्मणोऽभिमर्शनं सम्भवति तस्माद् द्वितीयैव सप्तम्यर्थे व्याख्यातव्या पौर्णमासीयजमाने चतुर्होत्रामभिमृशेदमावास्यायजमाने पञ्चहोत्रेति हविर्मात्राभिमर्शनं वाक्यान्तरप्राप्तमासन्नानि हवींष्यभिमृशेदिति तस्मादङ्गप्रधानार्थौ मन्त्रौ ॥

दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ।

सू॰ दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ५ ॥

ज्योतिष्टोमे दीक्षादण्डेन दीक्षयतीत्यादि दक्षिणा तस्य द्वादशशतं दक्षिणेति तद्दीक्षादक्षिणमङ्गप्रधानार्थं' उत प्रधानार्थमेवे' ति तत्र दीक्षाया यजमानसंस्कारत्वात्प्रधानार्थत्वे सिद्धेऽप्यग्नीषोमीयादौ दीक्षितविनियोगादङ्गप्रधानार्थत्वशङ्का, दक्षिणा तु प्रयोगाङ्गत्वादङ्गप्रधानार्थैव दीक्षा सोमस्य दक्षिणा सोमस्येति वचनं परम्परया ऽप्युपपन्नं नोऽङ्गार्थतां विरुणद्धीति प्राप्ते ब्रूमः, वचनात्प्रधानार्थत्वम्, अन्यथा हि वचनं न्यायप्राप्तानुवादमात्रमनर्थकं स्यात्, न च साक्षादपेक्षिताङ्गाङ्गिभावपरत्वेऽर्थवत्त्वे च सम्भवति परम्पराश्रयणमानर्थक्यं च युक्तं तस्मात्प्रधानार्थत्वम् ॥

अन्तर्वेदियूपाङ्गताधिकरणम् ।

सू॰ तथा यूपस्य वेदिः ॥ ६ ॥

यूपे श्रूयते अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति तत्र किं क्रियमाणोद्देशो यूपाङ्गत्वेन चोद्यते? उत बहिर्वेदि सहितो यूपस्य मानदेशो लक्ष्यते? तत्र लक्षणाया अन्याय्यत्वाद्वेदिदेशस्य श्रुतस्य यूपाङ्गत्वेन विधेर्द्धं च मीयमानेऽर्धान्तरं बहिरेव भवतीत्यर्धबहिर्वेदीत्यनुवादः स्यात् स्याच्चैव यद्यर्धमेवान्तर्वेदीति वाक्यं स्यात्, न त्वेवं परिसंख्यादोषात् किं त्वर्धं तावदन्तर्वेदि मातव्यमिति, ततश्चार्धान्तरं न विहितं प्रतिषिद्धं स्यादन्तर्वेदि वा मानं स्यात् तथार्धं बहिर्वेदीत्यपि विधातव्यं तत्र वाक्यभेदः पाक्षिकानुवादत्वे नित्यवच्छ्रवणविरोधः । नन्वर्धमिति विशेषणादर्धान्तरव्यावृत्तिः स्यात् सत्यं, विधितो व्यावृत्तिः यत्र हि विशेषणं श्रुतं तत्र एवान्यव्यावृत्तिर्भवति चोद्यमानविशेषत्वादर्धं विशेषणमिति विधानादेवार्धान्तरं व्यावर्तते इत्यतस्तु वेद्यामेव मानप्रधान्त

रस्य को वारयेत् तस्मादर्द्धं बर्हिर्वेद्योरपि विधातव्यमिति वाक्यभेदः स्यात् उपलक्षितदेशे विधाने त्वेकार्थविधानादवाक्यभेदः, तदयमर्थः—यत्र मीयमानस्य यूपस्यार्धमन्तर्वेदि भवत्यर्धं च बहिर्वेदि तत्र मिनुयादिति लौकिक एव देशविशेषो विधीयते न संस्कृतो वेदिदेशः ॥

हविर्धानस्य सामिधेन्यन-ङ्गताधिकरणम् ।

सू० सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥ ७ ॥

एतयन्स्युन्ति 'सामिधेनीस्तदन्वाहुरिति यस्मिन्हविर्धाने भिषवस्तत्र स्थित्वा सामिधेनीरनुब्रूयादित्यर्थः तत्र संशयः किं हविर्धानं सामिधेन्यङ्गं ? उत तल्लक्षितो देश - इति तत्र पूर्ववद् वाक्यभेदाभावाल्लक्षणापरिहाराय हविर्धानमेवाङ्गमिति प्राप्तं तदुच्यते हविर्धानस्य हविर्धारणार्थत्वाच्च प्रयोजनान्तरापेक्षा/ प्रकृतित्वाद्दवनीयवत्प्राप्तदेशः सामिधेन्यङ्गत्वेन प्राप्त , स च दक्षिणस्योत्तरस्य वा हविर्धानस्य समीपे भवति, तत्र नियममात्रं लाघवाद्विधेयं, हविर्धानस्य तु अत्यन्ताप्राप्तमङ्गत्वमनपेक्षितं च न युक्तं विधातुं तदिहापि देशलक्षणा ॥

'अङ्गानामन्यद्वारानुष्ठानाधिकरणम् ।

सू० शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात्स्वयं प्रयोगे स्यात् ॥ ८ ॥

प्रासङ्गिकी कथा एता समाप्याथास्त्वतः परं विविचारयिषु. पूर्वैर्विबहुत्वाधिकृते तदुपोद्घातरूपेण ज्योतिष्टोमादिकर्मसु नानाकर्तृसमावेशं वक्तुमारभतेऽधुना दर्शपूर्णमासे ज्योतिष्टोमादिकर्तृफलदक्षिणायुक्तं कर्म किं सर्वं यजमानेनैव कर्तव्य ? उत द्रव्योत्सर्गमात्रे हविस्त्यागदक्षिणादानादिके यजमाननियमोऽन्यत्रानियमो यजमानोऽन्यो वाऽथ वोत्सर्ग एव यजमानोऽन्यत्रान्य एवेति विचारः, तत्र स्वर्गकामो यजेतेति सामानाधिकरण्येनात्मनेपदेन च कर्तुरेव फलायगमादशेषमेव कुर्यात् दक्षिणादानं तु धर्ममात्रम् । ननु प्रधानस्यैव सामानाधिकरण्यात्मनेपदाभ्यां फलार्थकर्तृकत्वं नाङ्गानां तत्र भावनाया एव हि प्रत्ययवाच्याया ताभ्यां तत्कर्तृकत्व, सा च प्रयोगेत्यङ्गानामपि स एव कर्ता, उच्यते सत्यमर्थेन साङ्गे कर्तृत्वं तत्तु

प्रयोजकत्वेनापि सम्भवति 'तत्प्रयोजको हेतुश्च' इति स्मरणात् पद्विहृते' क्रय-
णीति च प्रयोगात् तत्रासति परस्परप्रमाणे साक्षादेव कर्तृत्वं स्यात्, अस्ति
तु प्रमाणं परिक्रयवचनं तच्च कर्त्रन्तरसद्भावे दृष्टार्थं भवति सर्वत्र स्वय
मशक्तोऽन्येन कार्यं कारयति यजमानोऽपि शक्तः स्वयं कुर्यात् अशक्तस्त्व-
न्येन कारयेत् परिक्रयश्चान्यपरो भविष्यति दृष्टोत्सर्गं स्वन्यथा शक्यत्वात्
स्वयमेव कुर्यादिति प्राप्ते ब्रूमः सम्भवति प्रयोजकत्वेनापि कर्तृत्वे परिक्र-
यस्य नित्यवदाम्नातस्य पाक्षिकत्वायोगाच्चित्त्यमुपपन्नहेतुमत्सर्गादन्यश्चान्यैरेव
कारयितव्यम् ॥

परिक्रीतानामृत्विजां सङ्ख्याविशेषानियमाधिकरणम् ।

सू० तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥ ९ ॥

हस्तयोरन्यथान्य इत्युक्तं तत्र कति तेऽन्ये इति सत्यपि विशेषाभा
वादनियमः सर्वथा परिक्रयसिद्धेः, अथवा यजमानस्यैव कर्तृत्वे प्राप्ते परि-
क्रयशब्दस्योपादानं, स चैकेनापि सिध्यतीत्येक एवान्यः स्यात्, अध्वर्य्वादि
संज्ञास्तु कर्मनिमित्ता अध्वरं युनक्तीत्यध्वर्युः, आवाहयतीति होता, तथा
न्येऽपि, तथा च दर्शयति "अ ग्नामुमावहामुमावहेत्यावाहयति तदेव होतु
र्होतृत्व मिति ततश्चैकस्यापि तत्तत्कर्म कुर्वतः पाप'कलाजकउद्गातृ'त्वा ना
नात्वा, तस्मादेकः स्यात्, स्यादेव यदि प्रवृत्तिसमये तदुत्तरकालं वैता संज्ञा
श्रूयेरन् वरणान्त्वप्रवृत्ताध्यर्थेन तच्चैता श्रूयन्ते 'स ब्रह्माणं वृणीते' इत्यादि
न च तदा कर्मनिमित्तत्वं सम्भवतीति वरणनिमित्तत्वं, भिद्यन्ते च वरणा-
'न्येकस्यैव पुन ब्रुति' रिति न्यायात न चैकस्मिन्नुत्वे बहूनि वरणानि सम
भवन्ति दृष्टार्थत्वात्, न हि वृतस्य वरणं दृष्टार्थं, तेन वरणानां तन्निमि
त्तानां च संज्ञानामसङ्कीर्णविषयत्वाद्यावद्वरणं यावत्संज्ञं च कर्तृभेदः कर्मा
णाम्, अतस्तावत्सङ्ख्यैः कर्तृभिर्ज्योतिष्टोमस्य निर्वृत्तिः । किं पुनरिदं वरणम्?
उक्तं प्रार्थनमिति, तत्र महर्त्विजां होत्रकाणां च मन्त्रेण 'अग्निर्होताऽसौ
मानुष" इत्यादिना, अन्येषां तु लौकिक्या वाचा प्रतिपत्स्यातां मे भवानित्य

(१) पाचकेति पा ।
(२) उपवर्णेति तु पुस्त पाठः ।

त्यादि, किमेतावता होत्रादित्वं भवति? को दोषः? न होता सन्ता प्राग्दृ
श्यन्ते वरणोत्तरकालं च य एव वृतः स्वयं चैतत्समानीति मनसा सङ्कल्पयति,
तत्र होत्रादिसंज्ञा प्रसिद्धवद्वेदे याज्ञिकप्रयोगे च व्यवह्रियमाणा दृष्टा,
तस्माद्य एव वृतः य एव च सङ्कल्पयति स एव होत्रादिसमाख्यां लभते, सत्रेषु
तु दृष्टार्थत्वाद्वरणस्यार्थलोपाद्विशक्तिः तदभावे चाध्वर्युर्होतेति दीक्ष
यित्वेत्यादिव्यवहारदर्शनात्सङ्कल्पादेव होत्रादित्वसिद्धिः प्रकृतावपि हि
सङ्कल्पो निमित्तमेव यो हि व्रियमाणो नेच्छति न स होतेत्युच्यते तस्मात्प्र-
कृतौ वरणविधानात्तन्निमित्तः सङ्कल्पो निमित्तं सत्रेषु तु सङ्कल्पमात्र
प्रयोगदर्शनात् न चैव वैरूप्यादशोभनमिति मन्तव्यं प्रमाणवत्त्वादीदृशस्यैव
शोभनत्वात् न हि सत्रे होत्रादिशब्दानां गौणत्वे किञ्चित्प्रमाण
मस्ति । यथाप्यत्यन्तमैकरूप्येण कार्यं तत्र सङ्कल्प एव निमित्तं य एव
क्रतूपक्रमे सर्वोपयिक होत्रादिभावमात्मनः सङ्कल्पयति स एव होत्रादि
शब्दैरुच्यते तथा च वक्ष्यति 'सत्रे तु स्वयं कर्तृत्वाद्वरणभरणयोरनपेक्षित
योरग्रहणाद्विनैव ताभ्यामवैगुण्य'मिति येनवतामात्रेणाध्वर्युत्वादिसिद्धि
रिति,। नन्वदृष्टमध्वर्युत्वादिकं कथमविहितेन सङ्कल्पेन जायते? विहितमेव
तु वरणं तस्य जनकं युक्तं यच्चादृष्टमध्वर्युत्वादिकं तदर्थं वरणं तत्र सत्रेऽपि
तदनुयाज्यावरणवत् कर्तव्यमिति सुतरां तत्राध्वर्य्यादित्वसिद्धिः । न वा
दृष्टाध्वर्युत्वादिसद्भावे प्रमाणमस्ति वरणविधिर्हि दृष्टार्थतयोपपत्तेर्ना
दृष्टकल्पनायाल, यदि चादृष्टमिदं विहितोपायसाध्यं च ततो दर्शपूर्ण
मासयोर्होता वृतः सामिधेनीरन्वाहेति वचनात् प्रागेव वरणात्सामिधेनीषु
प्रवृत्तस्य प्रसिद्धहोतृभावस्य पश्चाददृष्टार्थे वरणे न होतृत्वापयोगात्ति हो
तृत्वं न स्यात्, तस्मादध्यवसायादेव होतृत्वमङ्गीकर्तव्यमिति सत्रेऽपि होत्रा
दित्वसिद्धिः । ननु होतृ-शब्दवाच्यः स्यामित्यध्यवसायादेव तद्वाच्यो भवती
त्येतदलौकिकमेव तच्छब्दवाच्यो भवति प्रार्थनादेव तच्छब्दवाच्यो भवती
त्येतद्वा किं लौकिकं तत्सिद्धं संज्ञया कर्तॄणां भेदः । माभूत्संज्ञया वरणानां
तु बहूनां युगपत्प्रयोगवचनपरिगृहीतानां दृष्टार्थत्वेनैकपुरुषासमवायाद्वा-
घट्टरणं घरीतथ्या कर्तारो भिद्यन्ते ॥

१ प्रसिद्धवदति पा ।

शमितुःपृथक्त्वाधिकरणम् ।

सू० शमिता च शब्दभेदात् ॥ १३ ॥

अस्ति शमिता स किं प्रकृतेभ्योऽन्यस्तेषां वाऽन्यतमः इति संशये संज्ञाभेदादन्यत्वं यौगिकत्वात्संज्ञाया वरणाभावाच्च तेषामेवान्यतमः तत्राध्वर्योः पराङ् वर्तेतेऽध्वर्युस्तु पशोः संज्ञप्यमानादिति वचनादसामर्थ्यादन्ये तत्पुरुषाः संज्ञपयेयुः ॥

उपगस्य पृथक्त्वाधिकरणम् ।

सू० उपगाश्च लिङ्गदर्शनात् ॥ १४ ॥

सन्त्युपगाः ते किं प्रकृतिभ्योऽन्ये? उत त एवे?ति तत्र गातॄणां गुणभूता उपगातारो लोकवत् न चर्त्विजामृत्विजस्तुल्यकक्षा गुणभूता भवितुमर्हन्तीत्यन्ये इति प्राप्ते उच्यते—उपगा वरणाभावात्संज्ञायाश्च यौगिकत्वादृत्विजामेव वेदवेदार्थकारित्ववत्परस्परोपकारसम्भवादृत्विज एवोपगायेयुः ॥

सोमविक्रेतुः पृथक्त्वाधिकरणम् ।

सू० विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ १५ ॥

अस्ति सोमविक्रयी स किं तेषामन्यतम? उतान्य? इति पूर्ववद्वरणाभावात्तेषामन्यतमः, नैवं विक्रयस्याकर्त्तव्यत्वात्कर्त्तव्योपात्ता ऋत्विजो न तं कुर्युस्तस्मादन्यो विक्रयी ॥

ऋत्विगिति नाम्नोऽध्वर्य्वादिमिताऽधिकरणम् ।

सू० कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ १६ ॥

ब्रह्मादयश्चमसाध्वर्यवश्च बहवः कर्तारः समधिगता, ते सर्वे किमृत्विक्शब्दवाच्याः? उत केचिदेवे?ति तत्र "ऋतौ कार्यं हि सर्वेषां तेनर्तुयजनादमी । सर्वे तदभिधेयाः स्युरविशेषेण यष्टृवत्" ऋतुयजननिमित्तो ह्यमृत्विक्शब्दः कृदन्त, सर्वे च ते तत्कार्यकरणादृतौ यजन्तीति यष्टृशब्दवदेव ऋत्विक्शब्दस्याप्यभिधेयाः सप्तदशर्त्विज इति वचनमप्युक्त्याऽनुवाद इति प्राप्ते ब्रूमः "ऋतुयागनिमित्तत्वे भवेत्सर्वाभिधायिता । सङ्ख्याश्रुतिविरोधात्तु तन्नैव कथयामहे । वरणं तन्निमित्तं स्याद्ब्रह्माध्वर्य्वादिशब्दवत् । ततो नातिप्रसङ्गः स्याद्वचनं चैवमर्थवत्" ॥

ऋत्विजो वृणीत इति यूपं छिनत्तीतिवद्वरणेनर्त्विजः कुर्यादित्यर्थो न तु प्रसिद्धानृत्विजो वृणीत इति । ननु वरणनिमित्तत्वेऽप्यतिप्रसङ्गः स्यात् चमसाध्वर्यूणामपि वरणसद्भावात्, उच्यते न वरणमात्रं निमित्तं किं तु ब्रह्मादिगतो वरणविशेषः । ननु ब्रह्मादिष्वनुगतं चमसाध्वर्युभ्यो व्यावृत्तं वरणावान्तरसामान्यं न किंचित्, मा भूदवान्तरसामान्यं विशेष एव निमित्तं यो ऽयम् ऋत्विक्शब्दो ब्रह्मादिशब्दवदेकैकस्यैव न वाचकः सो ऽयं साधारणशब्दो न सामान्यशब्द इति यथाश्रुतभाष्यार्थः । नत्वेवं युक्तं क्लृप्तावयवशक्तिपरित्यागाददृष्टशक्त्यन्तरकल्पनाप्रसङ्गात् स्मृतिविरुद्धं च—ऋत्विक्त्वेन निपातनात् कर्तरि क्विप् 'ति वचनात् तथाऽन्यदपि स्मरणम् 'ऋत्विग्यज्ञकृदुच्यते' इति एवमपि वरणनिमित्ताऽऽश्रीयेत यद्यन्यथा सप्तदशश्रुतिर्नोपपद्येत सा तु यथा वरणनिमित्तत्वे तद्विशेषनिमित्तत्वादुपपद्या तथर्तुयजनमात्रं ब्रह्मादिगतमेव ऋत्विक्शब्दस्य निमित्तम् इति हरिशब्दस्येव पशुगतं हरित्वम्, एवं च प्रसिद्धावयवशक्तिपरित्यागः स्मरणविरोधश्च न कृतो भवति, श्रुतिश्चोपपादिता वरणविधिश्चैव प्रसिद्धपदार्थको भवति यावदुक्तं भवति याजकान् वृणीते इति तावदृत्विजो वृणीते इति तेन नाप्रसिद्धपदार्थकत्वं वरणनिमित्तत्वे तु यूपादिवदप्रसिद्धपदार्थकत्वं वचनव्यक्तिविपर्यासश्चैव स्यात्, न चैवं स्यात् चमसाध्वर्य्वादिशब्दानां तु प्रसिद्ध्यभावाद्वा एवं च वरणेन प्रकारान्तरेण वाऽध्वर्युत्वेन क्रतुव्याप्तिमभि परिकल्पितः स एवाध्वर्युरिति युक्तम् ऋत्विक्शब्दस्तु प्रसिद्धावयवत्वात्सप्तदशश्रुतेश्च क्रतुयजनविशेषनिमित्त इति सिद्धम् ॥

दीक्षणीयादिवत् प्रोक्ता नामेव ब्रह्मादीनां सप्तदशर्त्विक्त्वाधिकरणम् ।

सू० नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ १७ ॥

सप्तदशेत्युक्तं [illegible] ते इत्यनियमे प्राप्ते ऋत्विग्भ्यो दक्षिणां ददातीत्युक्त्वाऽग्नीधे ददातीत्युक्त्वा ब्रह्मणे ददातीत्यादिना ब्रह्मादीनां षोडशानां कीर्तनात्तेषामृत्विक्त्वम् ॥

ऋत्विक्त्वं स्वामिनः सप्तदशत्वाधिकरणम् ।

सू० स्वामिसप्तदशाः कर्मसामान्यात् ॥ १८ ॥

अथ सप्तदश किं सदस्य ? उत यजमान ? इति संशय , तत्र कर्मक रत्वात्सदस्य , न चासौ नाप्नोति मन्त्रस्य वरणोऽस्मात्, न च ब्रह्मण एवेद वरणं तस्य हि ब्रह्माणं वृणीत इति वरणं विहितं न पुनर्विधातुं शक्य मनुवादे चानर्थक्यमध्वर्य्वादिष्वपि तथा प्रसङ्ग । न च सदस्यव्यतिरेकेण ब्रह्मवरणं नास्ति ब्रह्माणं वृणीत इति वरणवचनमृत्विग्बहुत्वसाधनाधि करणे भाष्यकृतोदाहृत, तस्मात्सदस्य सप्तदश इति प्राप्ते ब्रूम "सदस्य वरणमदृष्टार्थं न तु कश्चिदपि पदार्थस्तेन कर्तव्यो येन यजमानादन्य ऋत्विक् स्यात् तस्मात्स्वामी सप्तदश ॥

आध्यप्यादसु अध्ययहोमा कस्तुनामयमाधिकरणम अत्र प्रकृ तिविकृतव्यवस्थाधिकरणं वा ।

**सू० ते सर्वार्था प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ १९ ॥**

नाना कर्मसु सिद्धेषु साम्प्रत मवधार्यते किमव्यवस्थित तेषां कार्ये किं वा व्यवस्थित तत्र प्रकरणाविशेषात्सामर्थ्याच्च यत्नेन शक्य कर्तुं तत सर्वमव्यवस्थया कुर्यात दुर्बला हि लिङ्गप्रकरणाभ्यां समाख्या न तद्विरोधेन नियम कर्तुमलं, तत सर्वं सर्वार्था स्थित तावदपर्यवसितम ग्निषु चिन्ता ते ह्यनारभ्यवादेन यदाहवनीये जुहोतीत्यादिना होमा र्थतया विहितास्ते किं प्रकृत्यर्था ? उत वैकृतानामप्याग्नहोमादीनां साधारणा ? इति पर्णतादिवत प्रकृत्यर्थत्वे प्राप्ते मन्यमानस्योत्तरम अग्नयश्च सर्वार्था इत्यनुवर्तते तदनुवृत्त्यथ चान्तरा सूत्रकरणं स्वकालत्वात्स्वत न्त्राम्नानादप्रकरणाधीतत्वादित्यर्थ । न चात्र द्विरुक्तिदोष प्रकृतिसमका लमेव विकृतावप्युपादेयत्वाद्धोमस्य यत्र तु यागमात्रे चोदिते प्रकृतित एव चतुरवत्त जुहोतीत्येतदतिदेशात्प्राप्यमाणा प्रतीयते तत्र पर्णमयी न्याय । उपादिष्टेषु तु वैकृतेष्वपि होमेषु समानमेवाग्निविधान स्थिता दुत्तर लिङ्गप्रकरणाभ्यां हि [illegible] सर्वथा समुदितं[1] कर्तृत्व प्राप्त येन समा ख्याविरोध स्यात् किं त्वनियमेन । तत्र किं केन इत्यस्ति व्यवस्थाऽपेक्षा सा च कुर्वती समाख्याऽनुगुणत्वाच्च बाधितव्या । तस्माद्यथासमाख्य नियम

---

१ समुच्चितकर्तृत्वमिति ।

हौत्रं होत्रा आध्वर्यवं चाध्वर्युणा तथा किमेष एवोत्सर्गः सर्वं हौत्रं होत्राऽध्वर्यवमध्वर्युणेति न, क्वचिद्बाध्यते, यत्र प्रत्यक्षं वचनं यथा मैत्रावरुणः प्रेष्यति चान्वाहेति यत्र च विशेषसमाख्या यथा पोत्रीयं नेष्ट्रीयं याजमानमिति तत्र विशेषसमाख्यातस्तद्वचनबलाच्च सामान्यसमाख्याऽपोद्यते, तदुक्तं "न चोपदेशसमाख्याभ्यां निर्देशः" इति, तदिदं समाख्याविनियोगस्यैवातिप्रसक्तिनिवारणेन शेषीभूतं सूत्रं नाधिकरणान्तरम् अत एव तस्यैव लिङ्गं यथा दृश्यते यामानुवाके होतृदर्शनादिकम् ॥

प्रैषानुवचनयोर्मैत्रावरुणकर्तृकत्वाधिकरणम् ।

सू० प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ २० ॥

उपदेशान्निर्दिष्टे समाख्याबाधे तद्विशेषचिन्ता 'मैत्रावरुणः प्रेष्यति चान्वाहे'ति किं प्रैषमात्रेऽनुवचनमात्रे च मैत्रावरुणोपदेशेन होत्रादिसमाख्याबाधो ? ऽथ वा यानि प्रैषान्तान्यनुवचनानि होता यक्षदग्निमित्यादीनि तेष्वेवेति संशयः, "प्रैषानुवचने देयात्साहित्यमविवक्षितम् । विधीयते यथा स्थाऽत्र समस्तव्यस्तयोस्तयोर्नैव समस्तयोरेव मैत्रावरुणचोदना । यद्यतस्तत्त्वेन व्यस्ते हि ज्ञातकर्तृके" प्रैषाणामध्वर्युरनुवचनानां च होता निर्ज्ञात इत्यनेनाऽपेक्षितं[1] कर्तृविधानं, यानि तु प्रैषान्तान्यनुवचनानि तेषु प्रैषांशे आध्वर्यवानुवचनांशेन हौत्रः प्राप्तेरेकमन्त्रत्वेन नानाकर्तृसमावेशासम्भवाद्धोतुरध्वर्योश्च प्रच्युतानामन्त्रासकर्तृकाणां मैत्रावरुणविधानमपेक्षितार्थं भवति तदधिकारे चेदं वचनमिति तत्रैव मैत्रावरुणविधिः ॥

चमसहोमेऽध्वर्योः कर्तृताऽधिकरणम् ।

सू० चमसांश्चमसाध्वर्यवः समाख्यानात् ॥ २१ ॥

चमसेषु संशयः किं तैश्चमसाध्वर्यवो जुहुयुः ? उत अध्वर्युः ? तत्राध्वर्युसमाख्या सामान्यभूता बाधित्वा विशेषसमाख्यया चमसाध्वर्यव एव तैर्जुहुयुरिति 'सामान्यनिर्देशो हि विशेषस्य बाधकः' । एवं माध्वर्यवं चैषामध्वर्युप्राप्त्यपेक्षिणो चमसेऽध्वर्युत्वमाख्ययेति यत' ।

१ इत्यनपेक्षितमिति पुस्त० पाठः ।

ततः साऽध्वर्य्यंपेक्षत्वाच्च तद्बाधेन वर्त्तते । तद्बाधे हि चमसाऽध्वर्युसंज्ञैव न स्यात् अतद्रूपभावात् काममजुह्वतामेव तद्भावः स्यात्, अतो ऽध्वर्युर्जुहुयात् तस्य ग्रहहोमादिव्यापृतत्वेनाशक्तौ सत्यां ते जुहुयुः ॥

श्येनवाजपेययोरनेककर्तृकताऽधिकरणम् ।

**सू० वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ २२ ॥**

औद्गात्रे समाम्नातः श्येनो वाजपेयश्चाध्वर्यवे द्वावपि ज्योतिष्टोमविकारौ तत्र किं प्रधानवेदसमाख्यात उद्गाताऽध्वर्युश्चेतरत्रेतरत्र वा सर्वपदार्थानतिदिष्टान् कुर्यात् ? उत प्रकृतिवदनेके कर्तारः ? इति तत्र प्रधानविधिविधेयत्वादङ्गानां तत्समाख्यालाभात्तस्याश्च प्रदेशरूपत्वेनातिदेशाद्बलीयस्त्वात्तत्समाख्यात एक एव कर्ता सर्वं कुर्यात्, प्रकृतौ तु प्रत्यक्षवचनैरेव नानात्वविधानात्तस्यामपि प्रधानद्वारेणाध्वर्यवसमाख्यायां नानेव कर्तारः, इह तु चोदकप्राप्तत्वात्तद्बाधेन समाख्यायाश्च एक एव कर्ता स्यात् । अत्रोच्यते औपदेशिकश्चोदको यदि दुर्बलः, स तु प्रथमभावित्वात्समाख्यां बाधते बलात् । अङ्गानां हि समाख्यानं प्रयोगवचनाश्रयं चोदकप्राप्त्यपेक्षस्तु प्रयोगविधिसंबन्धः । प्राकृतानामङ्गानां वैकृतप्रयोगविधिसंबन्धोत्तरकालं तत्समाख्या भवेत् तत्सम्बन्धश्च चोदकप्रापितानां स्यात्, तेन च ते प्राप्यमाणाः सकर्तृका एव प्राप्यन्त इति कर्त्रपेक्षाभावादपेक्षानिबन्धनश्रुतिकल्पना समाख्या न कर्त्रन्तरमलं कल्पयितुम् । न चात्र "शरमयं बर्हि"रितिवत्प्राप्तबाधः, कल्प्यत्वात्समाख्याविनियोगस्य, कल्पनायाश्चापेक्षाधीनायास्तदभावेऽनुदयात्, अपि च पाठनिमित्ताध्वर्य्यादिसमाख्या न विधिनिमित्ता, न चौद्गात्रे पदार्थानां पाठः, तेन नास्ति समाख्यैव विद्यमानाऽपि दुर्बला, श्येनादौ तेन नानैव कर्तारः प्रकृताविव ॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य सप्तमः पादः ॥

---

## अथ तृतीयेऽध्याये अष्टमः पाद आरभ्यते ॥

क्रयस्य स्वामिकर्मताधिकरणम् ।

**सू० स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥**

अस्ति हि परिक्रयो ज्योतिष्टोमे द्वादशशतदानमाध्वर्यवे समाम्नातम्, चौद्गात्रे च दर्शपूर्णमासयोश्चान्वाहार्यदानमाध्वर्यवे तत् किमध्वर्य्वादिना कर्तव्यम्? उत यजमानेन? इति संशये समाख्यानादध्वर्य्वादिना यथा ह्याध्वर्युः स्वद्रव्येणेतरान् परिक्रीणीते तमुपायं यजमानः कुर्यादिति प्राप्ते ऽभिधीयते स्वामिकर्तृकत्वे सर्वेष प्राप्ते परिक्रयवशात्परम्परया यागकर्तृत्वमाश्रित, न हि समाख्यामात्रात्साक्षात्कर्तृत्व प्रधानवाक्यस्वरसोपगत शक्यते बाधितुं, न हि यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयादित्यादिष्वध्वर्योरन्वयणमिति अतः परिक्रयात् प्रागध्वर्य्वादेरभावाच्च तत्कर्तृकत्वं परिक्रयस्य, यजमान एव कर्ता तस्य चात्मनि परिक्रयविरोधात्कर्त्रन्तराणि प्राप्नुवन्त्यन्यत्रैव भवन्ति नियममात्रं समाख्यया क्रियत इति न परिक्रयेऽध्वर्युः समाख्यया भवति । किं च सत्यपि कर्त्रन्तरप्रवेशे ऽवश्यं स्वयं यजमानेन किञ्चित्कर्तव्यं तद्विषयं एवायं परिक्रयविधिर्लोकवशादध्वर्य्वादिरत्यन्ताप्राप्त एव विधेयः तस्माद्यजमानं 'दानयेत' ॥ वचनमस्ति च एतामिष्टकामुपदधाति यीत् वरान्दद्यादित्यादि, तत्र चार्त्विज्यमपि स्यात्, वचनस्यातिभाराभावात्, अन्यत्र यजमानस्यैव ॥

वपनादिसंस्काराणां याजमानताधिकरणम् ।

**सू० संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद् व्यवतिष्ठेरन् ॥ २ ॥**

पुरुषसंस्काराः केशश्मश्रुवपनादयः किमाध्वर्यवाः? उत याजमाना एव? इति समाख्यानादाध्वर्यवत्वे प्राप्ते ब्रूमः संस्काराः संस्कृतस्य कार्ययोग्यतामाधातुं क्रियन्ते, न च कश्चिद्योग्यताजननार्थं कर्तारं परिक्रीणीते स्वयमेव योग्यस्यात् स्वतश्च कार्ये प्रतिगुणभावेन परिक्रीणीते तेन गुणतयैव परिक्रीतानां कर्तृणां प्राप्तेर्यथाप्राप्तानामेव च समाख्यया व्यवस्थानाच्चैव पुरु-

याणां गुणभावस्तत्रैव समाख्यया नियमः, संस्कारास्तु याजमाना वचना-
दृत्विजामपि भवन्ति हिरण्यमालिन ऋत्विज इतिवत् ॥

तपसो याजमानताऽधिकरणम् ।

**सू० तपश्च फलसिद्धित्वाल्लोकवत् ॥ ३ ॥**

अस्ति ज्योतिष्टोमे तपः कायशोषणं कर्म त्र्यहं नाश्नाती[1]त्यादि तदा-
ध्वर्यवम्? उत याजमानम्? इति समाख्यानादाध्वर्यवं दुःखात्मकत्वेन च कर्तृ-
प्रतिकूलत्वाच्चासौ संस्कार इति मन्यते । दुःखात्मकत्वादस्य तु सफलं,
कार्यविरोधिनमधर्मं क्षपयितुं योग्यताऽस्तीति क्रतुफलप्रतिबन्धकपापक्षप-
णेनैवास्य क्रत्वर्थत्वं लिङ्गप्रकरणाभ्यामवगम्यते यजमाने च फलेनोत्पत्तव्यम
तोऽस्यापि फलिसंस्कारत्वाद्याजमानत्व वचनादृत्विजामपि स्याद्यथर्त्विज
उपवसन्तीति, ॥

आकाङ्क्षानिरासः, लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मताधिकरणं वा ।

**सू० गुणत्वाच्च वेदेन न व्यवस्था स्यात्, ॥ ४ ॥**

ये च संस्कारा एव वचनादृत्विजां जाता हिरण्यमालित्वादयः
किं ते समाख्यया तत्पुरुषैः कार्याः? उत सर्वैर्त्विग्भि? रिति समाख्यया
तत्पुरुषैरिति प्राप्ते ब्रूमः, यत्र पुरुषस्य गुणभावस्तत्र केन विशेषेण तत्सि-
द्धिः कः कुर्यादि? त्यपेक्षिते नियमः समाख्यया क्रियते संस्काराणां तु
यावत्संस्कार्यमाश्रयत्वगमात्तद्विरुद्धमनपेक्षितं च नियमं न शक्नोति समाख्या
कर्तुमिति सर्वविषयता ॥

वृष्टिकामनाया याजमानताऽधिकरणम् ।

**सू० तथा कामोऽर्थसंयोगात् ॥ ५ ॥**

ज्योतिष्टोमे सदोमाने गुणकामश्रुतयः "यदि कामयेत वर्षुकः पर्जन्यः
स्यान्नीचैः सदो मिनुया" दिति स किमाध्वर्यव? यदि कामयेताध्वर्युरिति
उत याजमानः? यदि कामयेत यजमान? इति, तत्र मिनुयादित्यध्वर्योर्वच-
नात्सामानाधिकरण्यादाध्वर्यवे च प्रवचनेऽध्वर्योः समाख्याधिकृतत्वात्स
एव कामयतिना निर्दिश्यते इति तस्यैवेदं फलं. नैवं मिनुयादिति परस्मै-
पदश्रुत्याऽध्वर्युव्यापारः परार्थः श्रूयते तया श्रुत्या विरोधात् वाक्यगम्यं

---

१ नाश्नीयादिति पा ।

तादृशस्यैव प्रकरणे विपरिवृत्तेः, अपेक्षितश्च मन्त्राणां प्रकाशनोपायः न स्वप्रकाशिता। स्वार्थमभिदधति, तत्र पाठस्य विपरिवृत्तिस्तदतिक्रमे कारणं नास्तीति मत एव प्रयोगकाले मन्त्राणां पाठसिद्धिः। अन्यथा हि स्मृति-स्थैर्यप्रकाशनसम्भवाच्चैकान्तेनोच्चारणं सिध्यत् अतो यत्र पाठद्वयं तत्र समाख्याद्वयेन कर्तृद्वयं प्राप्तवद्विकल्पप्रयत्नेनाविरोधात्समुच्चीयते।

अभिज्ञस्यैव वाचयितव्य-त्वाधिकरणम्। — सू० ज्ञाते च वाचनं न ह्यविद्वान्विहितोऽस्ति ॥ ८ ॥

वाजपेये "ऋत्वीयजमानं वाचयती"ति श्रुतं, तत्र किं ज्ञश्चाज्ञश्च द्वावपि वाचयितव्यौ? उत ज्ञ एव? अथवा अज्ञ एवे-ति याजमानमन्त्रप-महाच्छिल्यते तत्र 'अविशेषात्तुभौ यद्वा स्वयमेव वदेद् बुधः। अज्ञस्तु वाच्यते नैव न ह्यज्ञो विद्यते क्रतौ अधिकारो हि विदुषां नान्येषामिति निश्चयः' ब्रूहीति स्मरणात् ज्ञस्य सम्भविष्यति वाचनम् ॥

द्वादशद्वन्द्वानामाध्वर्यव-त्वाधिकरणम्। — सू० याजमाने समाख्यानात्कर्माणि याजमानं स्युः ॥ ९ ॥

दर्शपूर्णमासयोर्वत्समुपावसृजत्युखामधिश्रयति व्रीहीनवहन्तीत्यादिभिः प्रत्येकं कर्माणि सामान्यरूपेणाध्वर्यवे विहितानि पुनश्च याजमाने वत्सं चोपावसृजत्युखां चाधिश्रयतीत्याद्यनुकीर्त्य 'तानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्य यजेते'ति श्रुतं, तदेतेषां द्वाम्नातमन्त्रवदुभयकर्तृकत्वं न सम्भवति एकेन कृतानामितरेण कर्तुमशक्यत्वादत एकः कुर्यादिति स्थिते कः कुर्यादि? ति विशेषसमाख्यानाद्याजमान इति प्राप्ते उच्यते 'कर्माणि यत्र चोद्यन्ते तत्रैषां कर्तृपेक्षिता। आध्वर्यवे च चोद्यन्ते कर्माण्याध्वर्यवात्[1]ततः याजमाने तु द्वन्द्वतासम्पादनमात्रं विहितानां निर्ज्ञातकर्तृकाणां विधीयते, द्वयोर्द्वयोर्मिथः प्रत्यासन्नत्वसम्पादनत्वमित्यर्थः। न तु कर्मणां विधिः, न चान्येन क्रियमाणानामन्येन द्वन्द्वत्वसम्पादनमशक्यम्। ननु द्वन्द्वानि सम्पाद्य यजे-

१ आध्वर्यवाद्यतः पा०।

प्रैषप्रैषार्थयोः पृथक्कर्तृत्वाधिकरणम् ।

सू० प्रैषेषु च पराधिकारात् ॥ ११ ॥

प्रोक्षणीरासादयाग्नीदग्नीन् विहरेत्यादयः प्रैषाः प्रोक्षण्यासादनाग्निविहरणादयः प्रैषार्थाः किमध्वर्युणैकेन कर्तव्याः? उतान्यः प्रेषितुस्तदर्थानां कर्तेति संशये समाख्यानादुभयत्राऽध्वर्युः प्राप्तकालतायाञ्च लोट् भविष्यति न प्रैषे समाख्यानबलादिति प्राप्ते ब्रूमः—मध्यमपुरुषस्याग्नीदिति च संबोधनस्य चेतनान्तरविषयत्वादन्यत्रानुपपत्तेः प्राप्तकालताऽपि पुरुषान्तरं प्रति वक्तव्या तद्वरं प्रैष एवायं प्रैषसमाख्यानात् स चात्मनि न सम्भवतीति लिङ्गेन समाख्यां बाधित्वाऽन्यः प्रेषिताऽन्यश्च प्रैषार्थः कर्ता ॥

प्रैषप्रैषार्थयोः यथाक्रममध्वर्य्वाग्नीध्राधिकरणम् ।

सू० अध्वर्युस्तु[1] दर्शनात् ॥ १२ ॥

प्रेषितुरन्यः प्रैषार्थकर्तेति स्थितं, स किमध्वर्युः प्रैषार्थकर्ता? आग्नीध्रश्च प्रेषिता उत विपरीत?मिति संशये अर्थानां प्रधानभूतत्वाद् भूयस्त्वाच्च न तत्राध्वर्युबाधो युक्तः प्रैषस्य त्वेकत्वात् गुणत्वाच्चाध्वर्युं बाधित्वाऽऽग्नीध्रकर्ता भवत्विति प्राप्ते उच्यते—अध्वर्युः प्रेषिता स्यात् एवं हि तेनैव प्रयोक्तृत्वेन प्रैषार्था अपि कृता भवन्तीति न क्वचित्समाख्याबाधिता स्यात् इतरथा प्रैषेऽप्यन्यथाबाधिता स्यात्, न चाबाधसम्भवे तद्युक्तम् अतोऽध्वर्युः प्रैषमग्नीत् प्रैषार्थान्कुर्यादिति ॥

करणमन्त्रेषु स्वामिफलस्याशासितव्यताधिकरणम् । वर्षान्यायः

सू० ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ १३ ॥

अकरणत्वात् प्रत्यगाशिषो मन्त्रा लिङ्गाद्याजमाना इत्युक्तं, ये तु करणमन्त्रा "ममाग्ने वर्चो विहवेष्व"स्त्वित्यादयः ते प्रत्यगाशिषोऽपि क्रियाङ्गत्वादध्वर्युणैव वक्तव्याः न त्वन्येनोच्यमाना अध्वर्योः क्रियां प्रकाशयन्ति । न च मन्त्रवशेन प्रधानभूतायां क्रियायामध्वर्युबाधो युक्तः तेन मन्त्रस्तावदाध्वर्यव एव तद्गतं च वर्चः प्रभृति सूक्तवाकगतायुरादिवत्फलमिति स्थिते किं तत्फलमध्वर्योः? उत यजमानस्ये?ति संशये लिङ्गादध्वर्योरिति प्राप्ते

१ अध्वर्युस्तद्दर्शनादिति पा ।

प्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानभावनाविषयाङ्गफलभावनानामपि यजमानगामित्वमुक्तमिति तद्विरुद्धं लिङ्गं नर्त्विग्गामित्वं बोधयितुमलम् अतो ममेति यजमानव्यतिरेकजनिता षष्ठी मम यो यजमानस्तस्य सर्व्वं इति यजमान एव वोचारात्ममेति निर्दिश्यते अतस्तस्यैव फलम् ॥

करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मताधिकरणम् ।

सू० कर्मार्थं तु फलं तेषां स्वामिनं[1] प्रत्यर्थवत्त्वं स्यात् ॥ १४ ॥

यत्तु मामासन्नापनमित्यप्सन्नापनादिकं फलं कर्मानुष्ठानौपयिकं यजमानस्यात्मीयकर्मोपविधानार्थमृत्विग्गामित्वेनैवेष्टमित्यात्मनेपदानुगु-ण्यादृत्विग्गामीति युक्तम् ॥

सू० व्यपदेशाच्च ॥

यत्र व्यपदेशो भवति तथा सहेति तत्रापि द्विवचनस्यानुपपत्तेर्ऋ-त्विग्गामित्वम् ॥

द्रव्यसंस्कारस्याङ्गप्रधानार्थताधिकरणम् ।

सू० द्रव्यसंस्कारः प्रकरणाविशेषात्स-र्वकर्मणाम् ॥ १५ ॥

बर्हिर्धर्माणामङ्गप्रधानार्थत्वं पूर्वमुक्तमुपकारकत्वतया प्राप्यते, यद्वा पूर्वपक्षसूत्रमिदं, यस्मात्प्रकृतावङ्गप्रधानार्थो बर्हिर्धर्मास्तस्माद्विकृतावपि यूपावटास्तरणार्थबर्हिषि कर्तव्या इति प्राप्ते सिद्धान्तसूत्रम् ।

अपूर्वप्रयुक्तधर्माणां विकृतावप्रवृत्त्यधिकरणम् ।

सू० निर्देशात्तु विकृतावपूर्वस्यानधि-कारः ॥ १६ ॥

प्रकृतौ यद्बर्हिः कार्ये तदपूर्वका बर्हिर्धर्मा. कार्यद्वारेण विकृतिं गच्छन्ति न स्वरूपतः तेन प्राकृतकार्यसाधने एव धर्मा विकृतौ कार्य्याः, न च यूपावटस्तरणे प्राकृतं बर्हिः कार्यम् अतो न तत्साधने बर्हिर्धर्माः ।

विधि[illegible] [illegible] [illegible] कर्तव्यताधिकरणम् ।

सू० विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ १७ ॥

[1] स्वामिनं प्रत्यर्थवत्त्वादिति पा ।

इदानीं प्रकृतावपि नातीव सर्वार्थेत्युच्यते दर्शपूर्णमासयोर्विधृत्यर्थं पवित्रार्थे च यद्बर्हिस्तदपि धर्मवत्स्यात् अविशेषादिति प्राप्ते ब्रूमः धर्मवतः कृत्स्नस्य बर्हिषो यथालूनस्य संनद्धस्यासादितस्यास्तरणे विनियोगादन्यत्र विनियोगः संभवतीति बलादसंस्कृतादेव पवित्रादि कार्यम् ॥

प्राकृतपुरोडाशादीनां निधानाधिकरणम् ।

सू० अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ १८ ॥

ज्योतिष्टोमाधिकारे पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधातीति धाना मैत्रावरुणस्य धाना आश्विनस्य पात्रे इत्यादि किं सन्निहितात्सवनीयपुरोडाशादपनीय शकलः पात्रे निधातव्यः? उत पुरोडाशान्तरमुत्पाद्य तच्छकलस्य निधान? मिति विचारे पूर्वशकलस्यायार्थस्य निधाने विनियोगासम्भवादन्योत्पादनं, स्यादेवं यद्यन्यत्र विनियोगः स्यात्यागार्थस्यैव तु शकलस्य संस्कारोऽयं द्वितीयानिर्देशात्, अतः प्रकृतैकदेशस्यायमपनयः, एवं पयस्यादिष्वपि पयस्याद्यर्थं चेदमधिकरणं पुरोडाशशकलाद्युधानविधेरेकदेशद्रव्यत्वेनाप्रयोजकत्वस्य सिद्धत्वात् ॥

काम्येष्टिषु उपांशुत्वधर्मस्य प्रधानार्थताऽधिकरणम् ॥

सू० विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ १९ ॥

यद्याजुर्वेदे ये काम्या इष्टयस्ता उपांशु कर्तव्या इति श्रुतमुपांशुत्वं किमङ्गप्रधानार्थम्? उत प्रधानार्थ? मिति संशयः, "तत्र मन्त्रोच्चारणसद्भावात् द्वयोरङ्गप्रधानयोः । तद्विषयं उपांशुत्वं बर्हिस्तद्रुमेवङ्ग द्वयोः उच्यते, बर्हिषां धर्मा वाक्यादङ्गप्रधानगाः । उपांशुता च वाक्येन काम्यानामेव चोच्यते" कामप्रयोजनानि प्रधानान्येव काम्य-शब्देनोच्यन्ते इति तेषामेवोपांशुत्वं ननु प्रवर्ग्यशब्दसंयुक्तस्योच्चैष्ट्वस्यावभृथशब्दसंयुक्तानामप्यपामङ्गप्रधानार्थेतेष्यते तथोपांशुत्वमपि स्यात् विषम उपन्यासः, तत्र ह्युच्चैः प्रवर्ग्येण प्रचरन्ति अप्स्ववभृथेन चरन्तीति तृतीयासंयोगात्प्रवर्ग्यावभृथकरणिकायां भावनायामुच्चैष्ट्वमप्त्वं विधीयन्ते तदन्तर्गतानि चाङ्गानि युक्तं यदुच्चैष्ट्वमप्त्वमङ्गं लभन्ते अत्र तु काम्या उपांशु कर्तव्या इति कर्तव्यत्वनिर्देशात्

सवनीयाः पुरोडाशा भवन्ती"ति किमिदं तरसं सर्वपुरोडाशानाम् ? उत सवनीयानाम् ? इति संशयः, तत्र 'न ह्युद्दिश्यः पुरोडाशः सवनीयेन शक्यते विशेषुं' तेन सर्वार्थं तरसं नवनीतवत्, । सवनीयपदन्त्वश्रुत्याऽनुवादः स्फुटं–शब्दवद्दा । लिङ्गसमवायेन सवनीयासवनीयेषु वर्तत इति प्राप्तेऽभिधीयते "पुरोडाशं समुद्दिश्य तरसम्वोध्यते यदि । ततः स्यात्सर्वगामित्वमुद्दिश्यस्याविशेषणात् ॥ उद्दिश्य सवनीयांस्तु मांसमत्र विधीयते । पुरोडाशापुरोडाशसमवाये तु लक्षणा । पुरोडाशपदं तद्धि जघन्यां लक्षणां व्रजेत् । प्रकृतौ वास्य दृष्टा सा पुरोडाशानलंकृत । सवनीयपदं मुख्यं न मुख्यार्थं परित्यजेत् दृष्टा च प्रकृतौ नैव सवनीयस्य लक्षणा । अन्यथाख्यात्तेनैव युक्ता तरससङ्गतिः । तद्द्रव्यकेन पुरोडाश इति तेन न सङ्गतिः ॥ सवनीयपदं खलु सन्निहितं तदसतीत्यं पदान्तरमेति न हि, । तरसं नवनीतविधर्मतया सवनीयहविर्विषयीकुरुते ततः । बोधे हेतुस्तस्तद्धि नियोगे भानं श्रुत्याद्यत्र विरोधे[1] परमावं पूर्वस्मात्स्यात् दुर्बलमत्राऽस्ति विरोधो नात्रेत्येवं शेषकथोक्ता परिपूर्णा ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
तृतीयाध्यायस्याष्टमः पादस्तृतीयोऽध्यायश्च समाप्तः ॥

---

## अथ चतुर्थाऽध्याये प्रथमः पाद आरभ्यते ।

अथ प्रतिज्ञाधिकरणम् । सू० अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

"प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते । शेषिणैव च शेषस्य प्रयुक्तिरिति हेतुता" ॥ यद्यपि न सर्वः शेषी शेषस्य प्रयोजकः तुषोपवापादेः कपालादिप्रयोजकत्वाभावात्, तथापि शेषिण एव तच्छेषायां प्रयोक्तार इति भवति शेषलक्षणस्य प्रयुक्तिलक्षणं प्रति हेतुतेति, ततः परमारम्भः ॥ ननु विधिरेव प्रयोजकः सर्वस्य विधिः स्वविषयस्य प्रयोजक एव अप्रयोजकस्य विधित्वानुपपत्तेः, तदेकरसत्वाद्विधेः । अथ प्रधानविधिरेव प्रयोजको नाङ्गविधयः अन्यतः सिद्धत्वात् । तुल्यमिदमानि-

१ विरोधे इति पा० ।

वाविधेरजिनविधेश्च द्वयोरप्यङ्गविधित्वादत्र किमत्र चिन्त्यते ? । उच्यते सत्यम् विधिरेव प्रयोजकः प्रयोजनाय तु कस्मै किमनुष्ठापयति कस्मै न कि दध्यानयनविधिरामिक्षार्थतयैवानयनमनुष्ठापयति ? उत वाजिनार्थतयाऽपि ? एवं कपालादिष्वपि द्रष्टव्यम् । यदर्थत्वेनानुष्ठापयति तत्प्रयोजकमित्युच्यते । यत्तु साध्यमपि साधनमन्यतः सिद्धमुपजीवति न स्वयमनुष्ठापयति तदप्रयोजकमुच्यते । यद्वा विधिः क्रियायामेव साक्षात्प्रयोजको विशेषणेषु स्वर्थात् । तच्च परप्रयुक्तमेव विशेषणत्वेनाङ्गीक्रियते, यथैकहायनीक्रयप्रयुक्तारुण्यग्रहणस्य पुरोडाशकपालस्य च पुरोडाशप्रयुक्त तुषोपवापस्य तत्र तुषोपवापादिविधेः परप्रयुक्तविशेषणोपजीवित्वात्तद्विषया प्रयुक्तिर्नाक्षिप्यते । कपालेषु श्रपयति एकहायन्या क्रीणातीत्यादयस्तु विधयः स्वतन्त्रकपालैकहायन्यादिग्राहित्वात् भवन्ति प्रयोजकाः, तत्र किमस्य प्रयोजकः ? किमस्य ने?ति युक्ता चिन्ता । सर्वस्मिंश्चाध्याये क्रत्वर्थपुरुषार्थादिविचारद्वारेण प्रयुक्तिरेव चिन्त्यते । सङ्गतप्रतिज्ञासूत्रम् । यत्तु नभाष्ये श्रुत्यादिषट्कोक्तेन तेनान्यत् शेषप्रमाणं तृतीयस्याविषयभूतमस्तीति गम्यते । अन्यथा हि नाना कर्मलक्षणं वृत्तमितिवत् शेषलक्षणं वृत्तमित्येवावक्ष्यत् । अथ तत्र द्वितीयेऽध्याय इत्यनुक्त्वा इह तृतीयेऽध्याय इति किमर्थमुक्तं ? वक्तृविवक्षावैचित्र्यात् । इदमेव श्रुत्यादिषट्कोक्तेनेऽप्युत्तरम् ॥ १ ॥

अथ क्रत्वर्थपुरुषार्थ लक्षणाधिकरणम् ।

सू० यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥

वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणार्थमिदं सूत्रम् ॥ यद्भावनाकर्मभावपूरणार्थं विधीयते तत्क्रत्वर्थम् । अन्यत्कारणं फलञ्च पुरुषार्थम् । अथवा फलाश्रयः किं विधिः प्रयोजको ने?ति चिन्त्यते । विधेयभावनाविशेषणत्वात्करणादिवत्फलस्यापि विधेयत्वशङ्का, रागतस्तु प्रवृत्तिसिद्धेरविधेयत्वम् । एवं वा दर्शपूर्णमासयोः श्रूयते । "गोदोहनेन पशुकामस्य प्रणये"दिति । तत्र संशयः किं गोदोहनं क्रत्वर्थमपि ? उत पुरुषार्थमे?ति तत्र षष्ठीश्रुत्या पुरुषार्थं क्रतुप्रकरणात्वाच्च क्रत्वर्थमित्युभयार्थत्वम् । नैवम् ।

उपकारलक्षणशेषत्वनिराकरणात् । अन्यार्थस्यापि क्रतूपकारकत्वाविरोधात् । श्रुत्या पुरुषार्थमेवेति फलप्रयुक्तमेवैतच्च क्रतुप्रयुक्तम् । एवं चा ऽग्निहोत्रोदाहरणम् ? । द्रव्यार्जनमेव द्रव्यस्य प्राप्तिरित्यर्थः । येयं पुरुषस्य तेन तेन नियमेन द्रव्यप्राप्तिः—ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना, शूद्रस्य सेवादिना, सर्वेषां दायादिनेति, सैव चिन्त्यते । किं क्रत्वर्था पुरुषस्य द्रव्यप्राप्तिः ? उत पुरुषार्था ? इति, तत्र "नियमस्यार्थवत्त्वाय क्रत्वर्थोद्रव्यसङ्ग्रहः । पुरुषार्थत्वपक्षे हि नियमोऽनर्थको भवेत्" । प्रतिग्रहाद्युपायनियमस्तावद् द्रव्यार्जनोद्देशेन ब्राह्मणादीनां विधीयमानस्तदङ्गं विज्ञायते, स्वरूपे कार्ये वोपयोगयद्गम्भवति सोऽयन्नियमो न तावदर्जनस्वरूपे उपयुज्यते, अन्तरेणापि नियमदर्शनसम्भवात् । अतः कार्योपयोगी, पुरुषार्थत्वे च दृष्टमेव प्रयोजनं क्षुत्प्रतिघातादि द्रव्यार्जनस्य कार्यं स्यात्तदपि च विनापि नियमेन निष्पद्यत इति तादर्थ्ये सति अर्जनस्य नियमस्तदङ्गञ्च स्यात्, अतो नियमविध्यनुपपत्त्या नूनं द्रव्यप्राप्तिः क्रत्वर्थेत्यनुमीयते । तथा सति हि क्रत्वपूर्वस्यादृष्टत्वाच्चियतोपायमेवार्जनं तन्निष्पादयतीति कल्पनाचानर्थक्य नियमविधेः । न चाऽर्जनार्थयेयोद्देशेनायन्नियमविधिः, विधेरश्रवणात्, प्रकरणाद्यभावाच्च, तस्मादर्जनमात्रोद्देशेन विधीयमानोनियमस्तन्मात्रस्य क्रत्वर्थत्वङ्गमयति तस्मात्सर्वमेव पुरुषस्य स्वं क्रत्वर्थम् । एवञ्च क्रत्वर्थकान्तहिरण्यादिसम्बन्धात् -चामरत्यादीनां खादिरवत् क्रत्वर्थत्वात् फलं न कल्पनीयम्भवति । तस्मात्सर्वं द्रव्यं क्रत्वर्थं, तथा च स्मृतिः । "यज्ञार्थं पशवः सृष्टाः" इति, एवं प्राप्ते ब्रूमः । "पुरुषार्थत्वमेतस्य प्रत्यक्षेणावगम्यते । क्रत्वर्थताऽनुमानेन प्रत्यक्षात्त्च दुर्बलम् ॥ रागप्राप्तं तावदर्जनं न शास्त्रीयम् । रागतश्च पुरुषार्थतया प्राप्तिः । प्रत्यक्षेण चार्जितं द्रव्यं पुरुषं प्रीणयत् पुरुषार्थं विज्ञायते, न तदनुमानेन क्रत्विरुशेषतया शक्यं विज्ञातुं, तस्मात्पुरुषार्थं द्रव्यम् । क्रतुरपि पुरुषकार्याणामन्यतम इति कार्यान्तर इव क्रतावप्युपयुज्यते इत्येतावान्विशेषः, न तस्यैवाङ्ग, तथा च सति जीवनलोपात्क्रतुरव न प्रवर्त्तेत द्रव्यप्राप्तिमात्रादेव च क्रतूपक्रमात् "अपशवो वा अन्ये गोअश्वेभ्यः" सुवर्गात् लोकादित्यनपक्रमद-

स्फ्यश्च कपालानि चेत्युपक्रम्य "एतानि वै दश यज्ञायुधानी"ति श्रुतं, किमयं प्रधानयागहविः-शब्देन स्फ्यादीनां विधिः? उत स्फ्येनोद्धन्तीत्यादिवाक्यप्राप्तानुवाद? इति संशये "अपूर्वत्वाद्विधिर्न्याय्यो वादमात्रं ह्यनर्थकम्। यज्ञशब्दः प्रकरणादाग्नेयादिषु वर्तते॥ गौणेनायुध-शब्देन तत्साधनतया ततः। स्फ्यादिद्रव्याणि चोद्यन्ते पुरोडाशादिभिः सह। समुच्चयोऽविकल्पो वा स्यादिति प्राप्त उच्यते। न ह्यत्राख्यात-शब्दोऽपि श्रूयते न ततो विधिः। विकल्पोऽपि न वैषम्यात्पुरोडाशादिभिः सह। समुच्चयोऽपि नैकार्थ्याद्विरोधेऽश्रुतेरपि'। यज्ञायुधानि सम्भरन्तीति वाऽनन्तरश्रुतेन विधिनैकवाक्यत्वात्तच्छेषोऽयम् उद्धननादिद्वारप्राप्तयज्ञसाधनत्वानुवादः॥ ४॥

पश्वेकत्वादेर्विवक्षाधिकरणम् ।

**सू० तच्चैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्॥ ५॥**

उपादेयभूतपश्वादिगता विभक्त्यभिहितैकत्वादिका संख्या किमयज्ञाङ्गमविवक्षिता? उत यज्ञाङ्गं विवक्षिते?ति संशयः। तत्र "श्रुत्या पश्वङ्गता तस्याः समानपदरूपया। पदान्तरस्ययागाङ्गभावो वाक्यात्प्रतीयते। दुर्बलस्य श्रुतेर्वाक्यमित्ययज्ञाङ्गमेकता। तद्भावेऽपि यज्ञावैगुण्यात्तदविवक्षितम्। उच्यते।—समानप्रत्ययस्थेन कारकेणात्मसात्कृता। क्रियायै नीयते संख्या न पश्वङ्ग पदान्तरैः॥ समानप्रत्ययोपात्तेन प्रातिपदिकार्थादपि सन्निहिततरेण प्राधानभूतेन कारकेणावरुद्धमेकत्वं प्रातिपदिकार्थमनादृत्य क्रियाङ्गमवगम्यमानं वाक्यसमर्पितेन क्रियाविशेषेण सम्बध्य पश्चादरुणैकहायनीन्यायेन पशुना विशेषणत्वेनार्थात्सम्बध्यते तादर्थ्यन्तु यज्ञ प्रत्येयेति विवक्षितमेकत्वम्॥ ५॥

लिङ्गस्य विवक्षितत्वाधिकरणम् ।

**सू० तथा च लिङ्गम्॥ ६॥**

एवं वा लिङ्गत्वलिङ्गे विपरीतलिङ्गे दारादौ मक्षिकादौ च शब्दप्रयोगादशब्दार्थे इत्यविवक्षितत्वाशङ्का, सिंहःसिंहीत्यादावनन्यथासिद्धलिङ्गप्रतीतिः शब्दस्य वाचकत्वं कल्पयतीति शब्दार्थत्वात्सङ्ख्यावल्लिङ्गं विवक्षितम्॥ ६॥

यागविधानादृष्टार्थताधिकरणम्।

सू० आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ ७ ॥

उक्तम् प्रयाज पशुपुरोडाश स्विष्टकृदित्यादयो यागेन परकीय द्रव्यदेवतसंस्कुर्वन्ति किन्तदर्था एव उतापूर्वार्था अपी? ति चिन्त्यते 'एकस्य कर्मणो युक्तमेकमेव प्रयोजनम्॥ दृष्टे सति च नादृष्टं कल्प्यमपूर्वम् स्यत'। उच्यते—"देवतास्मरणं मन्त्रात्। प्रचारात् द्रव्यसंस्कृतिम्। त्यागांशस्य तु नादृष्टादृते किञ्चित्प्रयोजनम्। तस्मात् त्यागांशेनादृष्टार्था अपी त्युभयार्थाः ॥ ७ ॥

प्रतिज्ञाधिकरणम्।

सू० अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ॥ ८ ॥

य एव तावत्फलभूत प्रयोजकाप्रयोजकत्वमाश्रित्य शेषशेषित्वमेव साक्षाच्चिन्तितम्॥ अत्र परमेतदेव साक्षाच्चिन्त्यते हेतुत्वेन तु शेषि विचारं करिष्यते। तदेतद् वक्ष्यमाणविवेककथनमात्रार्थं सूत्रम् ॥ ८ ॥

तप्ते पयसि दध्यानयनस्यामिक्षाप्रयुक्तताधिकरणम्।

सू० एकनिष्पत्ते सर्वंसमं स्यात् ॥ ९ ॥

'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति श्रुतम्॥ तत्र संशयः किमामिक्षायोगेनैव दध्यानयनमपेक्ष्यते? उत वाजिनयोगेनापी ति तदर्थं च किमुभयार्थं? मुतामिक्षार्थं? मिति, ततोऽपि पुनर्विचारयितव्यम्। किमामिक्षादधिपयोभ्यामर्थान्तरं वैश्वदेवयागस्य हवि? उत पय एव दधिसंसृष्टमिति 'मधुराम्लरसोऽभिव्यञ्जनया च तेन सा। पयसोऽर्थान्तरत्वाद्धि मधुरैकरसं द्रवम्। वैश्वदेवयागस्य तावदामिक्षा हवि सा च रूपरसान्यत्वात् अर्थान्तरं क्षीरादतो दध्यानयनमप्युक्तमामि यथा विहित केवलं तञ्चाननसामर्थ्याल्लिङ्गादामिक्षार्थं स्यात्। सामर्थ्यं न्व वाजिनेऽप्यस्तीति तादर्थ्यमपि युक्तम्। अत उभयप्रयुक्तमानयनमिति उच्यते—'पयसा दधि संसृष्टं वैश्वदेव विधीयते। मन्त्रवर्णाच्च पयसा दधि पद्म(?)दयुगम्यते पयस्यच द्रव्यान्तरं स्वभावनिमित्तकम्। पय एव घनीभूतमामिक्षेत्यभिधीयते। आम्नानादामिक्षापदं सा वैश्वदेव्यामिक्षेति यत

च्छब्दपरामृष्टं तद्धविः, स च पयः परामृशति, तद्धि पूर्ववाक्ये प्रधानभूतम्, प्रकृतं तादर्थ्येनानयनविधानात्, कथन्तादर्थ्यमानयनं द्विकर्मकं यदानीयते तत्प्रथमकर्म यत्प्रत्यानीयते तद् द्वितीयं, तच्चेह पयः, तच्च प्रथमेन कर्मणा व्याप्यमानं प्रधानम् । प्रधानपरामर्शी च सर्वनामेति तच्छब्दः पय एव विश्वेदेवैः सम्बध्नातीति तदेव हविः । तथा च मन्त्रः "जुषन्तां युज्यम्पय"-इति, पय एव घनीभूतमामिक्षेत्यामिक्षापदं नित्यानुवादः । तत्सामानाधिकरण्याच्च सेति स्त्रीलिङ्गम् । सोऽपि नित्यानुवाद एव, न च पयस्त्वं द्रवापेतं, रसविशेषमात्रापेक्षं तत् । तायेन सान्द्रीभूतेऽपि पयस्त्वप्रतीतेः । यस्त्वम्लो रसः स संस्कारकस्य दध्नः न स्वभावामिक्षापदस्याभिधेयः, यस्त्वत्र मधुरः पयोंऽशः स एवामिक्षा, पयःप्रतिनिर्देशकतच्छब्दसामानाधिकरण्यान्मन्त्रवर्णाच्च । तस्मात्पय एवामिक्षा वैश्वदेवयागहविरिति वैश्वदेवयागप्रयुक्तमानयनं न वाजिनयागप्रयुक्तम् ॥ ९ ॥

नयनस्य पदकर्माप्रयुक्तताऽधिकरणम् ।

सू० पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ १० ॥

"एकहायन्या क्रीणाती"ति प्रकृत्य श्रूयते । "षट् पदान्यनुनिष्क्रामति सप्तमम्पदमध्वर्युरञ्जलिना गृह्णाति यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादिति तत्र संशयः किं यदेतद्द्वाभ्यञ्जनं सप्तमपदसाध्यं तदर्थमप्येकहायनीनयनं तेनापि प्रयुज्यते? उत क्रयार्थमेव नयनं तेनैव प्रयुज्यत? इति, तत्र "द्वयोर्नयनसाध्यत्वाद्वाक्ये चाश्रवणात्तथा । संनिधान-क्रयार्थत्वं तथैव पदशेषता । दध्यानयनमामिक्षासंयुक्तं न वाजिनेनानयन[illegible] द्वाभ्यामसंयुक्तं द्वयोरपि संनिधानावयवसाध्यत्वाच्चाविशेषः । नैवं तृतीयया तावत्क्रयार्थैवैकहायनी । पदर्था सा तदर्थैव च तत्संस्कारात्मको नयः । नयनस्य परार्थत्वात्पदकर्माप्रयोजकम् । परार्थानुष्ठितं तत्तु पदकर्मोपजीवति ॥ १० ॥

कपालानां तुषोपवापप्रयुक्तताऽधिकरणम् ।

सू० अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ ११ ॥

"पुरोडाशकपालेन तुषानुपवपती"ति "कपालेषु श्रपयती"ति श्रुतम्। तत्र संशयः। किम्पुरोडाशश्रपणं तुषोपवापश्च उभयं प्रयोजकं कपालस्य? उत तुषोपवापो न प्रयोजकः? इति, तत्रोपवापशेषत्वस्य कपालस्य तृतीयया निर्देशादमतः सोऽपि कपालस्य प्रयोजकः, "सत्यमस्ति तदङ्गत्वं तथाऽपि त्वप्रयोजकः पुरोडाशप्रयुक्तस्य कपालस्येह चोदनात् पुरोडाशार्थिनोपात्त-मासादितञ्च कपालं तुषोपवापे चोद्यते न कपालमात्रं, न च प्रयुक्तस्य पुनः प्रयुक्तिः सम्भवतीत्यप्रयोजकस्तुषोपवापः ॥ ११ ॥

शकृल्लोहितयोः पशावप्रयोजकत्वाधिकरणम्।

**सू० पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ १२ ॥**

"अग्नीषोमीयं पशुमालभेते"ति प्रकृत्य "हृदयस्याग्रेऽवद्यती"ति श्रुतम्। तथा शकृत्स्थ प्रविध्यति लोहितं निरस्यतीति श्रुतम् तत्र संशयः किं हृदयादि शकृल्लोहितं च द्वयमपि पश्वालम्भस्य प्रयोजकम्? उत हृदयाद्येवे? ति, उभयत्र पशोरवयवत्वात्कृतसम्बन्धे चाविशेषादुभयं प्रयोजकम्, नैवम् "यागार्थः पशुस्तस्याहवि प्रकृतिभावत। हवींषि हृदयादीनि तेनैवात प्रयुज्यते। यद्यपि हृदयादिवाच्ये पशोरवयवा यागार्थतया तु दृश्यते ता दृश्यं च न हविष्ट्वेन विशसनश्रवणात्किन्तु हवि प्रकृतित्वेन। हृदयादीनि हवींषि नान्यदिति वयमे स्थितम्, अतस्तदर्थं एव पश्वालम्भः शकृल्लोहितकर्मं तु प्रतिपत्तिमात्रम् ॥ १२ ॥

पुरोडाशस्य स्विष्टकृदप्रयुक्तताधिकरणम्।

**सू० एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥ १३ ॥**

उत्तरार्धात्स्विष्टकृते समवद्यतीति स्विष्टकृत् किमुत्तरार्धं पुरोडाशयोरस्यैव प्रयोजकः? उतान्यादिप्रयुक्तोपजीवी? ति संशये। 'नान्यार्थस्य हार्येण दैवतान्तरसङ्गतिः। कृत्स्नात्यन्तं हि तस्मादयं प्रयोजक' इत्युच्यते—"उत्तरार्धादिशब्दाना याकाङ्क्षाऽभिधायिनाम्। नापेक्षितोपसम्बन्धा द्रव्यार्थोऽभ्युपगम्यते॥ उत्तरार्धादिशब्दा न स्यात्स्वेष्टार्थं चोदयन्ति। स्वष्टाख्ये च न प्रतिसम्बन्धी पुरोडाशोत्तरार्धादि तेन विना याकाङ्क्ष

अयं प्रकृतसम्बन्धे निराकाङ्क्षीभवति, प्रकृतं चाग्नेयादिप्रयुक्तं हविरिति तदुत्तराङ्गग्रहणादप्रयोजकत्वम् । अन्यार्थस्याप्यन्यसम्बन्धोपवचनात् प्रतिपत्तित्वाच्चाविरुद्धः ॥ १३ ॥

अभिघारणे शेषधारणतत्पात्रयोरनुष्ठानाधिकरणम् ।

सू० अभिघारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात् ॥ १४ ॥

वाजपेये क्रतुपशवः प्राजापत्याश्च प्रातःसवने तन्त्रेणोपक्रम्यन्ते पर्यग्निकरणान्ते कृते प्राजापत्यानामालम्भोत्कर्षः श्रूयते । "ब्रह्मसाम्न्यालभत" इति क्रतुपशवः प्रातःसवने एवालभ्यन्ते, प्रयाजाश्च तत्रैवानुष्ठिताः प्रकृतौ च प्रयाजशेषेण हवींष्यभिघारयतीति श्रुतम् ॥ तदिह प्राप्तं सन्दिह्यते किं प्रातःसवनानुष्ठितानां प्रयाजानां शेषो माध्यन्दिनकालप्राजापत्यवपाभिघारणाय धारयितव्यस्तदर्थञ्च पात्रान्तरमुत्पाद्यं जुह्वा व्यापृतत्वात् उत ने-ति तदर्थं च किं हविः संस्कारार्थमभिघारणम् ? उत शेषस्य प्रतिपत्ति? रिति, संस्कारत्वपक्षे प्राजापत्यवपासंस्कारो मा विलोपीति धार्य्यं स्यात् प्रतिपत्तित्वे तु सन्निहितास्वेव क्रतुपशुवपास्वभिघारणसिद्धेर्न तु धार्यं तत्रोपयोक्ष्यमाणानां द्वितीयायोगिनां तथा हविषामेव संस्कारो न शेषस्य विपर्य्ययात्, उपयोक्ष्यमाणसंस्कारो ह्युपयुक्तसंस्कारादभ्यर्हितः, हवींषि च तथा शेषस्तूपयुक्तः किं तस्य संस्कारेण द्वितीयया च हविषामेव प्राधान्यं न शेषस्य विपरीतविभक्तिनिर्दिष्टस्य तस्माच्छ्रुत्यादितः शब्दतश्च हविःसंस्कारोऽभिघारणं सत्यमेवं तथापीह शेषस्य प्रतिपादनं न्याय्यं दृष्टार्थतालाभादन्यथाऽदृष्टकल्पनात् । शेषस्य प्रतिपत्तिरपेक्षिता तादर्थ्योऽभिघारणं दृष्टार्थं भवति हविःसंस्कारस्त्वनपेक्षितो दृष्टं कल्प्येत, न च दृष्टे सति तद्युक्तम् यतः प्रयाजशेषं हविःषु धारयतीति वाक्यार्थः—हविराधारनियमात्संस्कारोऽपि गम्येत, तस्मादुभयसंस्कारः स्विष्टकृत् सूक्तवाकवत् यत्तु हविःसंस्कारं नेच्छति प्रतिपत्तौ च द्रव्यस्याधारत्वादेकस्मिन्नेव हविषि सर्वधारणं बहुवचनन्त्वनियमाभिप्रायमित्याह सकृद्यं सर्वध्रुवामेवाप्यभिघारयति ततो हि प्रथमावाज्यभागौ यजन् भवतीति लिङ्गं समर्पयेत् ।

अनेन हविषा संस्कार्यत्व समुच्चयश्चावगम्यते । प्रधानयागाद्युपयोगिना हविषामपि प्रयाजशेषत्वमिति गुणत्वमत्यन्तानुपपन्नमित्यास्तान्तावत् ॥ १४ ॥

समानयनस्याज्यधर्म प्रयोजकताऽधिकरणम् ।

सू० समानयने तु मुख्यं स्याल्लिङ्गदर्शनात् ॥ १५ ॥

दर्शपूर्णमासयोराज्यग्रहणं प्रकृत्य श्रूयते यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् यदुपभृति प्रयाजानुयाजेभ्यस्तदिति तथातिहापेडोर्बर्हिः प्रतिसमानयति जुह्वामौपभृतमिति । तत्र विचारः यदेतच्चतुर्थप्रयाजोपक्रमे समानयनं तत्किमौपभृतस्याज्यग्रहणस्य प्रयोजकं ? उत नेति । तदर्थं च किमुपभृति यत्प्रयाजार्थमाज्यं तस्येदं समानयनम्? उत यदनूयाजार्थं तस्ये? ति तत्र सर्वार्थं हि प्रयाजार्थमविशेषाद्बहुश्रुतेः ॥ सर्वाद्धि तत्समानीतमिदानी चोपभृत्यद ॥ प्रयाजानुयाजेभ्यस्तदित्यविशेषश्रवणात्सर्वप्रयाजार्थमौपभृतम् ॥ प्रयाज-शब्दाच्च विभक्त्यश्रवणात् ॥ अनूयाजशब्दात्परा या विभक्तिः साऽनुषज्यते प्रयाजेभ्य इति च ततश्च बहुवचनात्सर्वार्थं न चतुर्थोत्तमयोरेव अत सर्वप्रयाजार्थाद्यानीतमिदानीमुपभृति न तदस्ति केवलमनुयाजार्थमेवास्ति तस्येदं समानयनमनुयाजप्रयुक्तस्य संस्कारमात्रादप्रयोजकमुभयोरपि जौह्वौपभृतयोः प्रयाजार्थयोर्ग्रहणयोः सर्वप्रयाजविषययोरेकार्थत्वाद्विकल्प उच्यते समानयनमुद्दिश्य कालमात्रं विधीयते । अदृष्टकल्पनानेकविधानत्वान्यथा भवेत् ॥ यदुपभृति प्रयाजार्थं गृहीत तस्य प्राप्तमेव जुह्वामानयनमनूद्य कालमात्रं विधीयते । अतिहापेडोबर्हिः प्रतीति तथा ह्यल्पार्थं विधानं दृष्टार्थं च समानयनम्भवति अनुयाजार्थस्य तु अदृष्टार्थमत्यन्ताप्राप्तं तावत् विधीयते तस्य च काल इत्यनेकार्थविधिदोषोऽदृष्टकल्पना च स्यात् अत प्रयाजार्थस्येदं समानयनं प्रयाजद्वयवृत्त्यै क्रियत इति प्रयोजकमेवाज्यस्य प्रयाजानुयाजेभ्य इत्यविशेषश्रवणाद्धालविधित्वादुपरितनप्रयाजद्वयविषयमुपसंह्रियते । एवञ्च जौह्वमाद्यानामेव त्रयाणामभवतीति विषयभेदात्समुच्चयः ॥ १५ ॥

औपभृतजौहवयोः क्रमेण उभयानुभयार्थताधिकरणम् ।

सू० तच्चोत्पत्तिरविभक्ता स्यात् ॥ १६ ॥

चतुर्जुहूं गृह्णात्यष्टावुपभृति चतुर्ध्रुवायामित्युपयाज्यानि सम-र्थानि किमविशेषेण सर्वकार्याणि? उत जौहवं प्रयाजार्थमौपभृतमनु-याजार्थम्? अथवा जौहवं प्रयाजार्थमौपभृतमुभयार्थं जौहवमन्तर्हितमिति किञ्चिद-त? इति संशये तस्याविशेषेण सर्वार्थत्वमिति प्राप्तम् । चतुर्गृहीतानुवादत्व प्रयाजाद्यर्थतापत्तेः । यदि तु चतुर्जुहूं गृह्णाति प्रयाजेभ्यस्तदिति वचनात् तत्केवलं प्रयाजार्थं स्यात् ततो यदुपभृति अनुयाजेभ्यस्तदितिवचनात्तदपि केवलानुयाजार्थं प्रसज्येत । अत तदनुवादमात्रं प्रयाजवाक्यमपि तथा ऽस्तु अविशेषादित्येतावानेव प्रथमपक्षः नानर्थकं वचोऽनुक्रमर्थवत्त्वस्य सम्भवे । तेन जुहू प्रयाजार्थमितरार्थं तदितरत् । न हि प्रमाणवशादायात-मनिष्टमिति शक्यमुत्स्रष्टुम् अतो प्रत्यक्षेण केवलानुयाजार्थं जौहवं च प्रयाजार्थमिति द्वितीयपक्षः । जौहवस्य प्रयाजैकशेषत्वं युक्तमितीरितम् । अनुयाजैकशेषत्वमितरस्य न युज्यते ॥ यदुपभृति प्रयाजानुयाजेभ्यस्त-दिति वचनादुभयार्थं तत् अनुयाजेभ्यस्तदिति वचनमगत्याश्रुत्यानु-वादः ॥ १६ ॥

उपभृति द्विचतुर्थहो-मावत्वाधिकरणम् ।

**सू० तदष्टसंख्यं श्रवणात् ॥ १७ ॥**

अष्टावुपभृति गृह्णातीति किमष्टसंख्यैकग्रहणविधिः? उत चतुःसंख्या-ग्रहणद्वयविधिः? इति विचारः । विधीयते ऽष्टसंख्याकं ग्रहणं श्रूयते हि तत् लक्ष्यते तु चतुःसंख्याद्वयमनयाष्टसंख्यया, न च श्रुतिसम्भवे लक्षणा युक्ता चतुर्गृहीतं जुहोतीति सामान्यवचनं प्रयाजानुयाजयोः विशेषतोऽष्टगृही-तविधानात् बाध्यते उच्यते चतुर्गृहीते होमाङ्गमष्टसंख्याश्रुतिः पुनर्ग्र-हणं तेन होमाङ्गं चतुष्ट्वं बाधते न वा । ननु ग्रहणस्य होमार्थत्वादर्थानु-न्यार्थतां प्राप्य बाधः स्यात् । केवलग्रहणाङ्गत्वे हि अष्टसंख्या निष्फला स्यात् उच्यते "प्रधानाङ्गं चतुःसंख्या ग्रहाङ्गमितरा पुनः । प्रधानाङ्गं च ना-ङ्गाङ्गमलं भवति बाधितुं" तेनेयमष्टसंख्या प्रधानाङ्गभूतां चतुःसंख्यां बा-धितुमशक्नुवन्ती ग्रहणमात्राङ्गतां च निष्फलत्वादनासादयन्ती चतुः सं-ख्याद्वयलक्षणार्था विज्ञायते ॥ १७ ॥

इति महामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपि-कायां चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

## अथ चतुर्थाध्याये द्वितीयः पाद आरभ्यते।

स्वरोश्छेदनाद्यप्रयोजकताधिकरणम्। सू० स्वरुस्त्वनेकनिष्पन्नः स्वकर्मशब्दत्वात् ॥ १ ॥

अग्नीषोमीये पशौ श्रूयते यूपस्य स्वरुं करोति स्वरुणा पशुमनक्तीति तत्र विचारः किमेषः स्वरुर्यथा पृथङ् नियमः छेदनादीनां यूपधर्माणामुद्दिरादेश्च वृक्षस्य प्रयोजकः उत यूपमनुनिष्पन्नः शकलो ग्रहीतव्य इति तदर्थमिदं चिन्त्यते किं स्वरुं करोतीति स्वरुभावना विधीयते न स्याच्च करोतिकर्तव्यसाध्यत्वात् यूपस्य स्वरुमित्यनेन यूपशब्दोपलक्षणखदिरादिवृक्षकारणत्वेन छेदनादीनि च कर्मापीतिकर्तव्यतात्वेन समर्पयति तयोत्पन्नश्च स्वरुणा पशुमनक्तीति विनियुज्यते अतोऽनेन वाक्येनाञ्जनसाधनस्वरुरुत्पाद्यते कुतोऽसावुत्पाद्य इत्यपेक्षायां यूपस्य स्वरुमित्यनेन यस्य रूपमुपादत्ते तद्रूपादिति विधीयते तत्र करोतिभावनावाची सा च श्रुत्या विधीयते। वाक्यार्थविधिरन्यथा लक्षणा चान्यथा भवेत् अञ्जनसाधनत्वेनावगतस्य हि स्वरोरर्थप्राप्तमादानमनूद्य यूपादिति विधिवाक्यार्थविधानं करोतिरुपलक्षणानुभावकवचनः तदुपादानं लक्षयेत् स्वरुभावनाविधिस्तु श्रुत्या भवति करोतिश्च श्रौत इति स एव न्याय्यः तस्याश्च करोतिकर्तव्यता वाक्यगतेनैव यूप-शब्देन समर्प्यत इति प्रयोजकः स्वरुः, नैवम् "वहूर्थविधिरेवं स्यान्मुख्यशब्दस्य लक्षणा। वाक्यार्थविधिरस्मात्तु जघन्यस्य च लक्षणा। स्वरुभावनायां हि करोतिकर्तव्यताविशिष्टायां विधीयमानायामतिभाराद्गुरुं विशिष्टमात्रविधानम्॥ मुख्यस्य च यूप-शब्दस्य लक्ष्यते लक्षणा मत्वर्थे जघन्यस्य करोतेः प्राप्तस्वरूपादानानुवादेन यूपानुनिष्पन्नशकलस्योपादानादप्रयोजकः स्वरुः॥ १॥

शाखाया आहार्यताधिकरणम्। सू० शाखायां तत्प्रधानत्वात् ॥ २ ॥

शाखामधिकृत्य "प्राचीमाहरती"ति श्रुतं तत्र किमयं दिग्वाद? उत शाखावाद? इति संशयः तत्र "श्रुत्या दिग्वचनः शब्दः शाखाया लक्षणा भवेत्। प्रादुर्संज्ञाभिधानात्तु शाखाणादत्वनिश्चयः। प्राचीमाहर-

तीत्याहृतेऽप्यवचनः प्राची-शब्दः ॥ न च शस्या दिगाहर्तुम्, । अथ दिशं प्रत्याहरतीत्युच्यते प्रतिशब्दाध्याहार एव दोषः प्रकृतशाखापदसामानाधिकरण्याच्च शाखावाद एव अयं वृक्षस्य या प्राची शाखा तामिति ॥ २ ॥

छेदनस्य शाखाप्रयुक्तताधिकरणम् ।

सू० शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यं तत् ॥ ३ ॥

"शाखामाच्छिनत्ति शाखामाहरति मूलतः शाखां परिवास्योपवेषं करोति, उपवेषेण, कपालान्युपदधाति, शाखया वत्समपाकरोती" ति श्रूयते तत्र संशयः किं शाखाच्छेदनाहरणपरिवासनाना वत्सापाकरणं कपालोपधानञ्च द्वयमपि प्रयोजनम्? उतोपधानमप्रयोजकम्? मिति तदर्थमिद मूलार्थमपि छेदनादिकम्? उताग्रार्थमेवेति, तत्र "शाखा-शब्दः समूलस्य शाखमात्रस्य वाचकः । छेदनादि च शाखाऽर्थं द्वय तस्मात्प्रयोजकम् । शाखां छिनत्तीति द्वितीयया शाखार्थं छेदनादिकं द्वयमपि मूलमपच्य सहैव शाखा-शब्दोऽभिधत्ते नाग्रमात्रम् अतो यदुपवेषसंज्ञस्य मूलस्य कार्यमुपधानं यच्चाग्रकार्यवत्सापाकरणादिकं तयोरुभयोरपि छेदनादिकमङ्गम् परिवासनञ्च द्वयोर्विभागार्थं तस्मादुभयं प्रयोजकम्, उच्यते "मूलात्प्रभृतिक अत्र परिवासनमुच्यते । तच्चाग्रस्य न मूलस्येत्यग्रार्थं परिणामनम् । तद्विशेषणभूतत्वान्मूलस्यापि तदर्थता । अन्यार्थेन तु मूलेन कपालमुपधीयते । यद्यपि छेदनादिवाक्ये समूलमग्रमात्रस्थे शाखा-शब्दः परिवासनवाक्ये तु चपलेन मूलतः परिवासन हि तत्र विधीयते न परिणामनमात्रम् न च मूलस्य मूलतः परिणामनं सम्भवतीत्यवमेव परिवासनवाक्ये शाखा-शब्देनोच्यते तदर्थञ्च परिवासनं परिवासनविशेषण च मूलं तदहुरिणामार्थमेव, समूलस्य च छेदनमाहरणञ्च कथंनाम मूलतः परिणामनं शाखायाः स्यादित्येवमर्थम्, न ह्यनाहृते मूले मूलन परिणामनं सम्भवति तस्मात् परिवासनं समूलाहरणं छेदनञ्च सर्वमग्रकार्यार्थं न च परिवास्येति ल्यप्प्रत्ययाद्रुपवेषकरणार्थं परिणामनम् वाक्यसंयोगाद्धोदम्या द्वितीयया शाखाभिधानायार्थत्वाद्ग्रमात् उपवेषं करोतीति मा-

काङ्क्षमन्यार्थेनानुपपन्नेन मूलेन निराकाङ्क्षीक्रियते, करोतिश्च पूर्वप्रदाने वर्तते यदिदमयार्थपरिवासनानुनिष्पन्नं तत्कपालोपधानसाधनतयाऽधग तोपधेयत्वेनोपादत्त इति न शाखां परिवास्य मूलत उपवेषं करोतीत्यन्वयो येन मूलस्योपवेषार्थता लभ्येत व्यवहितकल्पनाप्रसङ्गात् तस्मादयार्थत्वात् स्वैव तदेव प्रयोजकम् ॥ ३ ॥

शाखाप्रहरणस्य प्रतिपत्तिकर्मताऽधिकरणम् ।

सू० हरणे तु जुहोतिर्योगसामान्याद्द्रव्याणां चार्थकर्म[1]त्वात् ॥ ४ ॥

सूक्तवाकेन प्रस्तरं प्रहरतीति हरतिर्यागो मान्त्रवर्णिको देवताविधिरिति स्थितम् इदमपरं श्रूयते सह शाखया प्रस्तरं प्रहरतीति तत्र संशयः किं शाखाप्रहरणं यागस्यैवोपलक्षणं शाखायाः प्रयोजकमर्थकर्म उत प्रतिपत्तिरप्रयोजककर्मेति तत्र प्रस्तरतुल्यत्वाच्छाखा यागस्य साधनम् । निर्वापवच्च हरणं यागस्यैवोपलक्षणम् । प्रस्तरप्रहरणं तावद्यागः स चार्थकर्म तत्साधनभूतः प्रस्तरः शाखा च सहत्वशब्दात्प्रस्तरेण समाना गम्यते तेन सापि यागं प्रति गुणभूता, हरतिश्चाविवक्षितो निर्वापालम्भादिवत् यागोपलक्षणार्थः तस्माच्छाखाप्रहरणं होमोऽर्थकर्म द्रव्यकर्मसंयोगन्यायादिति प्राप्तेऽभिधीयते यागे यदि प्रहरणं स्यात्स्यादेव हरतौ तु तत् । तत्र च प्रतिपाद्यत्वात्प्रस्तरस्य तथैव सा । सूक्तवाकेन प्रस्तरं प्रहरतीत्यत्र मान्त्रवर्णिकदेवताविधित्वाद्यागः कल्पितो न तु हरतिर्यागवचनोऽत्र तु हरणमात्रं श्रुतं सह शाखया प्रस्तरं प्रहरतीति न च प्रहरणे सूक्तवाकः साधनं येन मान्त्रवर्णिकदेवताविधित्वाद्यागः स्यात् तस्माद्धरतिमात्रे शाखायाः सहभावाद्धरतौ च प्रस्तरस्य प्रतिपाद्यत्वात् शाखाया अपि प्रतिपत्तिः यथा हरतौ सहभावे प्रतिपत्तिर्न गुणत्वं शाखायास्तथा षष्ठे वक्ष्यते, अत्र हरतावेव साहित्यं न यागे इत्येतावत् स्थितम् ॥ ४ ॥

प्रणीतानाम् उत्पत्तिवाक्यताऽधिकरणम् ।

सू० उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात् ॥ ५ ॥

१ साधनत्वादिति पा० ।

दर्शपूर्णमासयोः अपः प्रणयतीति प्रयोजनासंयुक्ता प्रणीता उत्पाद्य तत्र श्रूयते 'प्रणीताभिर्हवींषि संयौती'ति तथा "ऽन्तर्वेदि प्रणीता निनयति" इति, तत्र सन्देहः किमासां सयवननिनयन चोभय प्रयोजकमुभयार्थाः प्रणीता? उत सयवनार्था? एव तदेव प्रयोजकं निनयन प्रतिपत्तिरिति 'तत्रोत्पत्तावसंयोगात्कैमर्थ्यस्याभिलाषिणी.' । स्वीकुर्वाते उभे तस्मादुभयार्थास्तदुच्यते हवि.सयवने तासां गुणभावस्तृतीयया । द्वितीयया निनयन प्रतिपत्तिर्विधीयते । उत्पत्तावसयुक्तानामपि प्रयोजनेन प्रणीतानां कैमर्थ्याभिलाषिणीना तृतीयया सयवनार्थत्वं गम्यते, निनयनन्तु द्वितीयाश्रुत्या तासामेव प्रतिपत्त्यर्थमप्रयोजकम् ॥ ५ ॥

दण्डदानस्यार्थकर्मताधिकरणम् ।

सू० प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ ६ ॥

दीक्षितस्य दण्डप्रदानं विधाय पुनराम्नात क्रीते सोमे मैत्रावरुणाय दण्ड प्रयच्छतीति किं मैत्रावरुणाय दण्डप्रदानं दण्डस्य प्रयोजकमर्थकर्म? उत प्रतिपत्तिकर्माप्रयोजक?मिति, तत्र "द्वितीयाश्रुतिसयोगात्कृतार्थत्वाच्च धारणे । मैत्रावरुणहस्तेऽस्य प्रक्षेपः प्रतिपादनम् ॥ दीक्षितधारणे कृतार्थो दण्ड. प्रतिपत्त्यपेक्ष. द्वितीयया च तत्प्राधान्यं गम्यते न दानस्य, अतो मैत्रावरुणहस्ते प्रक्षिप्यते उच्यते—"चतुर्थ्या सम्प्रदानत्वं प्रधास्तुरव गम्यते । कर्मणा यमभिप्रेति सम्प्रदान तदुच्यते । तेन दीयमानेन दण्डेनाभिप्रेयमाणत्वान्मैत्रावरुणस्य तत्प्रधान दानम् । उपयुक्तस्य संस्कारादुपयोक्ष्यत्संक्रिया गरीयसी प्रयास्तुस्व दृष्टं तेन प्रयोजनम् स्थित्वा हि प्रैषानुवचने कुर्वीत आलम्बनमभवत् दृष्टार्थ एव दण्ड इति मैत्रावरुणार्थे दण्डदान प्रयोजक दण्डस्येत्यग्नीषोमीयविकारे निरूढपशौ असत्यपि दीक्षिते मैत्रावरुणार्थेन दण्डोपादानसिद्धिः ॥ ६ ॥

पूर्वाधिकरणे ह्याग्रहणानि रास । तथाप्रासनस्य प्रतिपत्तिकर्मताधिकरणम् ।

सू० उत्पत्त्या येन संयुक्तं तत्त[१]दर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वान्प्रतिपत्तिः स्यात् ॥ ७ ॥

१ तदर्थन्तत् ।

यागाङ्गभूतानां देशादीनां नियमविधौ स्थिते तत्प्रसङ्गाद्यागादि-लक्षणं क्रियते, देवतोद्देशेन स्वद्रव्यपरित्यागो यागः स एव प्रक्षेपाधिको होमः स्वीयस्य परकीयत्वापादनं दानमिति, आचार्यस्तु लोकसिद्धपदार्थ-व्यवहारिण्यां मीमांसायां तल्लक्षणमनुचितमिति यागाद्यनुष्ठानप्रकारक-थनमिति व्याख्यातवान् । यो देवतामुद्दिश्य द्रव्यन्त्यजति तेन यागचोद-नार्थः सम्पादितो भवति, प्रक्षेपन्त्वधिकं कुर्वता होमविध्यर्थ इति, एवञ्च चोदनार्थग्रहणमर्थवद्भवति न लक्षणपरत्वे प्रदेशान्तरे त्विदं सूत्रमन्यथा व्या-ख्यातम् आचार्येण पूर्वं दर्शादियागानुवादेन देशादयो विधीयन्त इत्युक्तं, तत्रेयमाशङ्का कथं नु दर्शादेर्यागत्वं, न ह्युत्पत्तिचोदनास्वाग्नेयादिषु यजिः श्रूयत इति तत्रेदमुच्यते द्रव्यदेवताक्रियं श्रूयमाणे यजतिचोदनेति मन्तव्यं तदविनाभावात्तयोस्त्वेकस्यार्थः, इतरस्य तु यजत्यभिहिते कर्मणि पुनर्जु-होतिश्रवणं चतुरवत्तं जुहोतीति तत्कथमुपपादनीयं यागहोमयोर्भेदादत आह आसेचनाधिकः स्यात्प्रक्षेपमात्रं तथाप्तं चतुरवत्तं संस्कारार्थं विधीयते, यागार्थस्तु प्राप्तानुवाद इत्यक्षरार्थस्य सूत्रयोर्भवति ॥ १३ ॥

बर्हिष आमिक्षादिसाधारण्याधिकरणम् ।

सू० विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ १४ ॥

यद्यामिक्षायां बर्हिस्तदुपसदामिति किमिदमाच्छिद्य विधानम्? उत निर्दिष्टकोपदेशः? अथवा धर्मातिदेशः? अथवा बर्हिःसाधारणविधिः? इति, "हित्वस्य गार्हपत्याय मम चाच्छिद्य दीयताम् ॥ इदं ग्रहवचनमाकर्ण्याद्या-च्छिद्य विधिरिष्यते? एवञ्चाच्छिद्यमानस्य बर्हिषः स्यादनर्थकः । आमिक्षायां विधिस्तस्मादविशिष्टकविधिर्वरम् । शिष्टाचारविरोधात्तु नैतद्युज्यते । त-स्माद्धर्मातिदेशोऽयमामिक्षायां हि यादृशम् । अवघातादिभिर्बर्हिस्तादृगी-दोपसत्स्वपि । बर्हिःशब्देन धर्माणां लक्षणैव भवेदतः । साधारणविधिश्चा-यास्मिन् दोषो न कश्चन । आमिक्षायामुपादेय यद्बर्हिस्तच्च केवलम् । तद-र्थेन सदुपात्तं तदैवोपसदामपि । बर्हिर्धर्मास्तु तद्द्वारा तद्धर्माणां प्रमा-यत. ॥ १४ ॥

इति शास्त्रदीपिकायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

# चतुर्थाध्यायस्य तृतीयः पाद आरभ्यते ॥

द्रव्यसंस्कारकर्मणां क्रत्वर्थताधिकरणम्।

सू० द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् ॥ १ ॥

"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती"त्यत्र संशयः किं पर्णमयीत्वं क्रत्वर्थं? मुत पुरुषार्थमाहोस्विदुभयार्थं? मिति, तत्र फलश्रवणात् पुरुषार्थत्वम् यद्यपि चैवंजातीयकस्य फलविधित्वमौदुम्बराधिकरणे निराकृतं, तथाऽपि विहितस्य पर्णत्वस्य फलापेक्षायां क्रतुप्रयोगवचनात्सविहितमपापश्लोकश्रवणमेव रात्रिसत्रप्रतिष्ठावद्विपरिणामेन फलमाश्रयितुं युक्तम्। अथवा साधनांशमात्रमौदुम्बराधिकरणे विचारितं विधिरहितस्य भवतीत्येतावन्मात्रस्य साधनप्रतिपादकत्वञ्च सम्भवतीति विध्युन्मीलनायैवार्थवादत्वमुक्तं पशूनाप्नोति न स पापं श्लोकं शृणोतीत्यादेराश्रयितव्यम्। इह तदुपेत्याभ्युपेत्य वा साध्यांशो विचार्यते, तथैवंजातीयकमपि फलप्रतिपादकं लोके दर्शनात्, अतः पुरुषार्थमित्येकः पक्षः क्रत्वर्थजुहूद्वारेण विधीयमानं भवतु क्रत्वर्थं फलसंयोगात्तदर्थमपि स्यात् दध्यादिवदित्यपरः। सिद्धान्तस्तु युक्तं दधि संयोगपृथक्त्वादुभयार्थत्वम्। इह त्वेकवाक्यं तदुभयपरत्वे भिद्येत तत्र तावदुभयार्थं. न च शृणोतीति वर्तमानापदेशात्साध्यत्वं शक्यं प्रतिपत्तुं. न च विपरिणामेन फलपरत्वम्, यथास्थितस्वरूपहानप्रसङ्गात्, पर्णतायाश्च जुहूपस्थितक्रत्वर्थत्वेन निराकाङ्क्षत्वादयुक्तं शब्दस्वरूपस्य बाधनम्, न च पर्णत्वस्य फलं प्रति विधीयमानस्याश्रयः प्रकृतोऽस्ति तत्र वाक्येनैवाश्रये दीयमाने वाक्यभेदः, तस्मादपापश्लोकश्रवणस्य अर्थवादत्वात्क्रत्वर्थमेव पर्णमयीत्वम् ॥

नैमित्तिकानां वार्त्रघ्नादीनामनित्यार्थत्वाधिकरणम्।

सू० नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्[1] ॥ २ ॥

अपः प्रणयतीति प्रकृत्य श्रूयते 'मृन्मयेन प्रतिष्ठाकामस्य प्रणये'-

---

१ स्यादित्यधिक. पाठः।

दिति, तथा "बार्हद्गिरं आग्रयणस्य ब्रह्म साम कुर्या"दिति तत्र संशय-
यदेतत्काम्य मृन्मयवन्नैमित्तिकञ्च बार्हद्गिरन्तदेव नित्यार्थं उत अन्यदुपादेय
मिति तत्र नित्येऽपि प्रयोगे प्रणयनब्रह्मसामादेः साधनापेक्षत्वादश्रुत,
साधनान्तरकल्पनाद्वरङ्कामनिमित्तयोरपि श्रुतस्य मृन्मयादेः सन्निहितस्य
नित्यार्थेऽप्युपादानम्, आरण्याभोजनादिनित्यविधिमदृष्ट्वा पूर्वः पक्षः,
भवन्ति हि ईदृशान्यप्यधिकरणानि ऐन्द्रवायवे तु वचनात्प्रतिकर्मभवः
स्यादित्यादीनि नित्यविधिर्नास्तीति कृत्वा चिन्त्यते । अत्र चारण्या
यन्नाश्चर इति अभोजनं ब्रह्मसामेति च सामान्यविधिरयम् मृन्मय
बार्हद्गिरञ्च विशेषतः प्रणयने द्वादशाहे चातस्तदेव नित्यार्थेऽपि सन्नि
धिविशेषाद् युक्तमिति मन्यते ॥ 'आग्रयणेन निमित्तेन बार्हद्गिरमिति
श्रुतम्, मृन्मयञ्च प्रतिष्ठायामित्ये स्याताम् अतो न तेन ह्यन्यत्र श्रुत सन्नि
हितमपि अन्येन सम्बन्धुमर्हति साधनाशङ्का च नित्यस्यार्थाक्षिप्तेन सामा-
न्यविहितेन वा निवर्त्तते न तु नैमित्तिकेन सन्निधिमात्रस्य सम्बन्धका
रणत्वाभावात् । निमित्तश्रुतिविरोधाच्च, सति असति च निमित्ते क्रिय
माणस्य कीदृशं नैमित्तिकत्वम्, तस्मादन्यन्नित्यार्थं ॥

दध्यादेर्नित्यनैमित्तिकोभ
यार्थताधिकरणम् [illegible]
[illegible] ।

**सू॰ एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ३ ॥**

अग्निहोत्रे 'दध्नेन्द्रियकामस्य जुहुया'दिति श्रूयते तत्र किन्नाम
यन्मेव दधि नित्येऽपि स्यात् ? उत ततोऽन्यन् नित्यमिति संशये 'पूर्वाधि-
करणन्यायात्काम्यत्वेन श्रुतं दधि । न नित्यार्थमुपादेयमतोऽन्यन् नित्य-
मिष्यते ॥ अन्यत्र त्वत्र नित्यार्थं श्रूयते 'दध्ना जुहोती'ति नैयमितस्य
वाक्यस्य कामवाक्यैकवाक्यता । गम्यते इतो न नित्यार्थं पृथग्दधि विधी
यते । दध्नेन्द्रियं कुर्यादित्युक्ते निमित्तेनैव्यपेक्ष्यते, होमसंयुक्तस्य च दध्न
फलार्थता तयोर्यमाकाङ्क्षयात्वैकवाक्यता यद्दधीन्द्रियं कुर्याद्धोमादितिन
यच्च दध्ना जुहोति तदिन्द्रियार्थमिति, तस्मान्नित्ये दध्यविधानात्काम्य
मेव तत्स्यात्, मैवम्, द्वयोरेकस्य साकाङ्क्षा भवेद्धि तत्स्तयोः । एकस्यैक-

वाच्यत्वं निराकाङ्क्षत्विहोभयम् । कामवाक्यस्तावद्विपरिवृत्तिलब्धहोमा-श्रयं नाश्रयसम्बन्धकरं प्रमाणमपेक्षते दधिस्वरूपमपि लोकसिद्धं नोक्ष्य-व्यूढादिवदलौकिकम्, अतो न तदर्थमन्यापेक्षम्, दध्नोऽपि फलवद्धोमसंयु-क्तस्य न फलान्तरापेक्षा तस्मात्पृथक्रूपयोगादुभयार्थन्दधि स्यात् ॥

पयोव्रतादीनां क्रतुधर्मताऽधिकरणम् ।

**सू॰ द्रव्याणान्तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥ ४ ॥**

ज्योतिष्टोमे पयोव्रतं ब्राह्मणस्येत्यादि श्रूयते तत्पुरुषार्थं क्रत्वर्थ-मिति संशये पुरुषसंयोगात् व्रतस्य पुरुषप्रीत्यर्थतया लब्धफलस्य जङ्गम्य-मानमत्र वचनन्यायासम्भवात् पयोनियमस्यापि व्रतसंयुक्तस्य तत्फलनि-राकाङ्क्षत्वात् न प्रकरणग्रहणमिति पुरुषार्थत्वम् । उच्यते "नियममन्तरे-णापि पुरुषप्रीतिदर्शनात् । नियमस्य फलं क्लृप्यं तच्च प्रकरणात्क्रतोः । कल्प-नीये हि फले प्रकृतक्रतुफलसिद्धिरेव तदधिकृतसंस्कारद्वारेण पयोनिय-मस्य फलं युक्तमाश्रयितुमिति क्रत्वर्थता ॥

विश्वजिदादीनां सफलत्वाधिकरणम् ।

**सू॰ चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत न ह्यशब्दं प्रतीयते ॥ ५ ॥**

विश्वजिता यजेतेत्यादिषु अश्रुतफलासु चोदनासु फलमस्ति नेति संशयः, "नास्त्येव फलमेतस्यां चोदनायां फलाश्रुतेः । शब्दगम्यमदृष्टं हि फलत्वेन विना कथं प्रत्येतुं शक्यते तच्चेदध्याहारेण कल्प्यते ॥ परिपूर्ण-मिदं वाक्यं नाध्याहारमपेक्षते" । ननु यागेन कुर्यादित्युक्ते किं कुर्यादित्य-पेक्षणादध्याहारोऽवकल्प्यते, सत्यं, यदि यागेन कुर्यादित्युच्येत यागं कु-र्यादिति तूक्ते परिपूर्णत्वान्नाध्याहारापेक्षा, फलश्रवणे हि सति विध्यनु-गुण्यात् समानपदोपात्तधात्वर्थातिक्रमेण वाक्यसमर्पितं फलम्भाव्यत्वेन भावनाऽवलम्बेत तदभावे तु धात्वर्थभाव्यत्वङ्को निवारयेत् । "तथा च सति सम्पूर्णं वाक्यन्नाध्याहृतिक्षमम् । नन्वेवं यागकर्तव्यतायामुच्यमा-नायां न कश्चित्प्रवर्तेत सत्यङ्किन्दोषो विध्यानर्थक्ये तदपि भवतु निष्फ-लस्य कर्तव्यवचनमप्रमाणं स्यादित्येवमस्तु क्षेमोऽयं पन्था गच्छतु भवा-

नित्यावगतप्रयाजवल्लिङ्कुर्मे , न च कर्तव्यताबलादेव फलमुपकल्पयितुम्
शक्यम् तदात्वे दुःखदर्शनात्स्वत्यन्तविरोधाद्यापत्त्या च फलं न कृतमात्रवि
नष्टेन यागेन शक्यते कर्तुं, न चापूर्वद्वारेण सम्भवति तदभावात्, श्रुते हि फले
यद्वा यादृक्तया धात्वर्थस्य तत्साधनत्वे शब्देन प्रतिपादिते तद्बलाददृ-
ष्टमप्यपूर्वं कल्प्यते यागक्रियामात्रपर्यवसिते तु शब्दे कथमपूर्वसिद्धिस्तद-
भावे च कथं कालान्तरभाविफलकल्पनम्? तदितरेतराश्रयं भवति फला-
धीनमपूर्वं तदधीनं च फलमिति, असत्यपि भाव्यापेक्षणे कस्य यागः क-
र्तव्य? इति नियोज्यापेक्षणात्फलकामस्याध्याहार इति चेत् नाध्याहार
मन्तरेणापि तल्लाभात्, यथा निषेधाधिकारेषु अप्रवृत्तस्य निवर्तनासम्भ
वात्प्रयोगव्यक्तेरुद्यतयोग्यपुरुषापि मर्शस्तिरेव विशेषणमिति तद्विशिष्टस्य
नियोज्यत्वावगमात् न प्रयुक्तिलाघवमाश्रित्य फलकामोऽध्याह्रियते, तथा
प्रकृत्युपदेशेऽपि अशक्तस्याजीवतश्च तदसम्भवात् शक्तो जीवंश्चाधिकारी
लभ्य इति किमध्याहारेण? तस्माद्विश्वजिदादौ फलमेवेदमिति प्राप्ते उच्यते
"विधियुक्ता क्रिया नैव धात्वर्थमात्रमृच्छति। भाव्येन च विना वाक्यं नैव
तत्परिपूर्यते। तस्मात्सम्प्रदायातः फलमध्याहरिष्यते"। असत्यपि फलश्रवणे
चेतनप्रवृत्त्यात्मकविध्यभिहिता भावना धात्वर्थं तावच्च कथञ्चिद् भाव्यम-
ङ्गीकरोतीति तदतिरिक्तभाव्यापेक्षणात्तल्लाभात्परिपूर्णं वाक्यमल्प
दाध्याहारमपेक्षते, तच्च लौकिकमपि वेदवाक्यैकदेशतयाऽध्याहृतं वैदि
कमेव भवति किमुत यदा वैदिकमेवान्यत्र स्थितमध्याह्रियते, कथम्पुन-
र्वेदस्थितस्यानुषङ्गाभ्युपगमः, नायमनुषङ्गः किन्त्वध्याहारः, स च यत्र क्वचिदपि
वाक्यस्थितस्याविरुद्धः तेनाश्रुतफलानामप्यध्याहृतफलान्वयात् सर्वथाङ्गमे
यागत्र फलवत्त्वमवस्थितम् ॥

विश्वजिदादीनां सफल-
ताधिकरणम् ।

सू० तत्सर्वार्थमनादेशात् ॥ ६ ॥

स्थिते फलार्थत्वे किं सर्वफलार्थं? उतैकार्थं? इति विशेषानिर्दे-
शात्सर्वार्थत्वे प्राप्तेऽभिधीयते 'येनैकेन तद्वाक्यं साकाङ्क्षं परिपूरितम्' ॥
तेनैव तदविरोधाद्गमिति नानेककल्पनम् ॥

विश्वजिदादीनां स्वर्गफलताऽधिकरणम् ।

**सू० स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ ७ ॥**

एकस्फलमित्युक्तम् । किन्तदेकमिति न ज्ञायते । अत पुनरपि सर्वार्थत्वमप्रामाण्यं वाऽनध्यवसायात प्राप्नोति, तदुच्यते स्वर्गोऽनतिशय प्रीतिरूपो हि सर्वैरर्थित । "भूयासोऽभिलपन्त्येनमल्पे स्वल्पसुखरा" ॥ सति सम्भवे शास्त्रस्य भूयोविषयत्वस्याप्यर्थविशेषपरत्वस्यातिसङ्कोचपरिहारा त्स्वर्गश्च दुःखासंयुक्तनिरतिशयसुखात्मकः सर्वेषामभिमतः पश्वादिसुखन्तु दुःखानुषक्तमल्पञ्च कैश्चिदेव प्रार्थ्यन्ते । प्रत्यवायपरिहारस्तु सर्वाभिलषितोऽपि प्रत्यवायापेक्षया क्रियताऽपि विलम्बेन हृदयमागच्छति । "ततस्तु सुकरत्वात सुखमेव परम्फलम् तच्चानतिशयत्वेन स्वर्गात्मकमिति स्थितम्" ॥

रात्रिसत्रन्याय । रात्रिसत्रस्यार्थवादिकफलकत्वाधिकरणम् ।

**सू० क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ ८ ॥**

'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती' ति श्रुतम् ॥ रात्रिशब्देन ज्योतिर्गौरित्यादिव्यायोर्ध्वाद्दिवतानि सौत्यानि कर्माण्युच्यन्ते तदिदं रात्रिसत्रं स्वर्गार्थं ? मुत प्रतिष्ठार्थं ? मिति संशय, तदर्थञ्च प्रतिप्रतिष्ठन्तीति किमयम्फलविधि ? रुतार्थवाद ? इति 'अपापश्लोकश्च तत्र वर्तमानापदेशत । फलविध्यसमर्थत्वात्तदेवार्थवादता ॥ १ ॥ अनादिष्टफलत्वेन तस्मात्स्वर्गफलार्थता । निर्देशात्तु प्रतिष्ठैव फलत्वेनात्र गम्यते ॥ जुहूवच्चैव कर्मैतद्विराकाङ्क्षम्फलं प्रति । कल्पनीयं फलं तत्र विना सोऽध्याहृतेर्वचः ॥ स्वर्गस्याध्याहारे तत्स्वरूपस्तस्य च शुभकर्मसम्बन्ध फलत्वञ्च कल्प्यते प्रतिष्ठायास्तु स्वरूपमेवश्रावणत्वञ्च कर्मफलत्वसिद्ध्यर्थं सततया विपरिणाममात्रं लघीयः, उपयन्तीत्यपि वर्तमानापदेशो विधिरूपेण विपरिणम्यते । यच्छन्दस्य व्यवहितान्वयः, तदयमर्थं ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति, एवं हि धर्ममात्रकल्पनाल्लाघवमितरथा तु सम्बन्धस्यैवार्थवादत्वात्सकल एव विध्युद्देशोऽप्रतिपन्नफलविशिष्टः कल्पनीयः, स्वर्गकामा एता रात्रीरुपेयुरिति कल्पितोऽप्यसौ प्रतिष्ठार्थवादो न मुख्यः सङ्ग

पयोर्वा साधनत्वेन चोदितानि यदेकमेव तथाविधं फलं जनयन्ति नाने-कम्। इतरथा सकृदेव यावदिष्टफलं सिद्धमिति न काम्यमेकद्भूमं पुनः प्रयुज्येत, दृश्यते च पुनः प्रयोगः तथेहाप्येकमेव युगपत्फलम्, न च साहि-त्येनैवात्र कामानां फलत्वमेकैकस्येति वाच्यम्। साहित्यस्याविवक्षितत्वा-दित्युक्तम्। अतः पर्यायेण कामः॥

समानमधिकरणम्। सू० योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् ॥ १२ ॥

इदानीमैहिकामुष्मिकत्वं फलानाश्चिन्त्यते। स्वर्गः सर्वदाऽऽमुष्मिक एव वृष्टिरविचारी वैरज्ञानफलस्य पुत्रपशुब्रह्मवर्चसादेरैहिकमेव काम-नावशात्, पश्वादयस्तु किमैहिका आमुष्मिका? उत अनियताः?, तत्र "प्रतिग्रहादिषु दृष्टं पश्वादेः कारणान्तरम्। देहारम्भकतैवातश्चित्रादेः फलहेतुता। पश्वादिस्वरूपस्य प्रतिग्रहाद्युपायान्तरदर्शनाददृष्टानपेक्षत्वाद् देहस्य तु मातापितृसंयोगमात्रेणानुत्पत्तेः कारणान्तरानपेक्षणात् विशिष्ट-फलोपभोगार्हशरीरारम्भकत्वमेव चित्रादेः पश्वादिहेतुत्वमित्यामुष्मिका-ण्येव पश्वादीनीति प्राप्तेऽभिधीयते "साध्यत्वमेव पश्वादेः शब्देन प्रति-पाद्यते। अमुत्र चेह चेत्येवंवाचित्वशब्दो नियामकः। देहारम्भमुपत्यस्य फलानामप्रमाणकम्। विपाकः कर्मणां येषाम्प्राग् देहविनिपाततः। प्राप्य-स्तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे॥ देहमुत्पत्तिकारकं च पश्वादि-कारणद्वयम्, तद्गुणभाव्यकारि च, तत्रैव हि कारणं शब्दस्येति तस्माद-नियमः॥

मैत्रावरुणादीनां वचना-दङ्गताधिकरणम्। सू० समवाये चोदनासंयोगस्यार्थव-त्त्वात् ॥ १३ ॥

"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति किमङ्गयोरनयोः सम्बन्धो-ऽयं वाजपेयाङ्गत्वेन बृहस्पतिसवस्य? उत कालार्थः? अथवा वाजपेयोत्तर-कालत्वं बृहस्पतिसवस्योपदिश्यत इति संशये। "उभयोर्थो वाजपेयस्य बृहस्प

तिसवस्य च । अज्ञातफलयोर्नैवमियोऽर्गाङ्गत्वसम्भवः । न च कर्मान्तरं युक्तं लक्षणा हि तथा भवेत् । तत्रामत्ययेन कालस्तु श्रुत्यैवोक्तो न लक्षणा । प्रसिद्धस्य" तावद्बृहस्पतिसवस्य पुरोधाप्रादिफलार्थत्वात वाजपेयाङ्गत्वम्, तद्धर्मककर्मान्तरविधौ तु बृहस्पतिसव—शब्दो धर्मलक्षणार्थः स्यात्, कालविधौ तु तस्य स्वार्थत्वात् न काचिल्लक्षणा । तस्मात्प्रसिद्धस्य बृहस्पतिसवस्य वाजपेयपूर्वकत्व विधीयत इति प्राप्ते ब्रूमः "वाजपेयश्रुतेरेव स्याद्त्यन्तपरार्थता । तत्प्रक्रिया च बाध्येत न च दूरगतं प्रति । कालः शक्य उपादातुङ्काले कर्म हि चोद्यते । काले च चोद्यमानं तत्कर्मानिपरिवर्तनात् । प्रसिद्धात्कर्मणो भिन्नमनिर्ज्ञातप्रयोजनम् ॥ वाजपेयाङ्गभावेन वाक्येनैव विधीयते । वाजपेयप्रयोगं यथोक्तनिर्वेश्य न तावत्येव कृती स्यात् इदमपरमङ्गत्तस्य परचात्कर्तव्यमिति । एवञ्च वाजपेये किञ्चिद्विधानाभावाद्व्युदासप्रदेशोऽन्यथा त्वसावत्यन्तपरार्थः स्यात्कालोपलक्षणार्थत्वात् वाजपेयप्रकरणञ्च बाध्येत, स्थिते च कर्मान्तरत्वे धर्मलक्षणाऽपि मासाग्निहोत्रवद्दोषः ॥

वैमृधादेः पौर्णमास्याद्यङ्गताऽधिकरणम् । सू० उभयार्थमिति चेत् ॥ १४ ॥

"संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती"ति क्रिम्पौर्णमास्याः वैमृधस्य चाङ्गप्रयोजनसम्बन्धः पौर्णमास्यङ्ग वैमृधः? उत कालार्थः संयोगः? तस्मिन्काले क्रियमाणः प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गमिति संशये । संस्थासंयोगात्संस्थितस्य पुनरङ्गासम्भवात् । नाङ्गप्रयोजनसम्बन्धः, कालार्थस्तु संयोगः प्रकरणाविशेषादुभयार्थमिति प्राप्ते उच्यते 'पौर्णमास्यां हि संयुक्तो वाक्येनानेन वमृधः । तस्य प्रकरणेऽपि तद्ग्रासंयुक्तगोचरम् । यत्तु संस्थितायां नाङ्गं सम्भवतीति तदुभयाङ्गत्वेऽपि तुल्यम्, न चामावास्याङ्गमेवेदमिति युक्तं प्रकरणाविशेषादिति त्वयैवोक्तम् । अतो यद्वार्यपौर्णमासिकन्तन्त्रयोः साधारणं विहितं तद्युक्तं पौर्णमासीं समाप्य पुनरिदमङ्गङ्कर्तव्यमिति वाक्यार्थः, तथा च वाक्यशेषः "वैमृधः पूर्णमासे नु निर्वाप्यो भवति तेन पूर्णमासः सेन्द्रोभवती"ति इन्द्राभावेन पौर्णमास्या वैगुण्यमाशङ्क्य तत्समाधानार्थतान्दर्शयन्पौर्णमास्यङ्गत्वन्दर्शयति ॥

अनुयाजादीनामाग्निमारुतोर्ध्वकालताधिकरणम्।

सू० अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन सम्बन्धात् ॥ १५ ॥

आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्यत्रापि कालार्थत्वेन संयोगस्यात्यन्तपारार्थ्यं स्यात् इत्यङ्गप्रयोजनसम्बन्धं मत्वा तस्योत्तरम् आग्निमारुतस्य सोमार्थत्वेनोपदिष्टस्य अनुयाजानाञ्च पश्वर्थतया अतिदिष्टानामविपरिवर्तमानत्वान्न कर्माङ्गत्वम्। तेषान्तु निर्ज्ञातप्रयोजनानामङ्गाङ्गित्वासम्भवात् कालार्थः संयोगः ॥

सोमादीनां दर्शपूर्णमासोत्तरकालताधिकरणम्।

सू० उत्पत्तिकालविषये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ १६ ॥

ज्योतिष्टोमे श्रूयते "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"ति। तत्र दर्शपूर्णमास-शब्दस्यात्यन्तपारार्थ्यपरिहारायाङ्गप्रयोजनसम्बन्ध एव न्याय्यः, नैवम् ॥ "दर्शोपलक्षिते काले सोमयागो विधीयते। स च प्रकृत एवेति न कर्मान्तरसम्भवः। दर्शोत्तरकालमनुपादेय उत्पाद्यमानोऽपि सोमः "सन्निधौ त्वविभागादि"ति न्यायात् न कर्मान्तरम्। प्रकृतश्चासौ फलार्थत्वाच्च दर्शाङ्गता प्रतिपद्यते। अतो न तावत्सोमस्य दर्शाङ्गत्वम्। नापि दर्शादेः सोमाङ्गत्वम् अविधीयमानत्वात् न ह्यविधीयमानमङ्गं भवति। न चात्र दर्शपूर्णमासौ विधीयेते विधायकाभावात्, दर्शोत्तरकाले हि सोमस्य विधिः न दर्शस्य, न चाकृतयोर्दर्शपूर्णमासयोस्तदुत्तरकाले सोमः शक्यते कर्तुमिति, अर्थात्तयोरपि विधिः स्यात् विध्यन्तरविहितयोस्तु तयोर्लाभान्नानुपपत्तिः। तदुत्तरकाले तु सोमश्चोद्यमानोऽपि सन्निधेर्न कर्मान्तरमित्युक्तम्। तस्मात्सोमस्यायं कालविधिः ॥

वैश्वानरेष्टेः पुत्रगतफलकत्वाधिकरणम्।

सू० फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥ १७ ॥

"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" इति विधायाम्नायते "यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती"ति। तदिदं पूतादिकं रात्रिसत्रप्रतिष्ठावत् फलमिति स्थितम्,

तत्किमिष्टिकर्तुः फलं पितुः ? उत पुत्रस्ये? ति विचारे अन्यफले कर्मण्यन्यस्य प्रेरणासम्भवात्पितुरेव प्रैयत्वादाख्यानगतात् स्वात्मनेपदाद्दर्शितसाध्यकर्मफलानामाधातृगामित्वनियमात्पितुरेव फलम् । नैतदेव "येनैव वाक्यशेषेण फलमेतत्प्रकल्प्यते । तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा" । "यस्मिन् जाते निर्वपति स पूतो भवती"ति स्पष्टम्पुत्रगामित्वम् । पुत्रफलमपि पितुरभिलषितमेवेति विधेरात्मनेपदस्य चाविरोधः, एव वा इयमेव वैश्वानरीया चिन्त्यते किं जननानन्तरमेव कर्तव्या? उत कृते जातकर्मणी? ति निमित्तानन्तरं नैमित्तिकमुपसम्प्राप्त विना कारणेन नातिक्रमितव्यम् यतोऽनन्तरमेव स्यात्, सत्यम्, इह त्वस्ति कारणम्पुत्रफलार्थं हीदङ्कर्म तस्य च कृते जातकर्मणि स्तनप्राशन न पुनः प्राक्, अकृते हि जातकर्मणि इष्टिनिरूप्यमाणस्तनप्राशनमुत्कर्षेत् ततः कुमारविपत्तिप्रसङ्गात् इष्टिरेवेयमनर्थिका स्यात्, तस्मात्कृते जातकर्मणि कर्तव्या । पुनश्चिन्त्यते किं जातकर्मानन्तरमनन्तरे द्वादशाह एव कर्तव्या? उताशौचापगमे स्वकाले वा ऽऽगत इति "निमित्तानन्तरप्राप्ता प्रयोजनविरोधतः । उत्कृष्टा तदभावात्तु पुनर्नोत्क्रष्टुमर्हति । शौचाङ्गेन विनाऽप्येषा कर्त्तव्या च निमित्ततः ॥ अपि वाऽप्येकदेशे स्यादिति षष्ठे हि वक्ष्यते" । उच्यते "निमित्तस्वरसात्प्राप्तिर्या नाथत्सा निवारिता । प्रयोजनविरोधेन तस्मादङ्गोपसङ्ग्रहः" । निमित्तानन्तर्यं तावत्प्रयोजनविरोधादेव बाधितमित्युत्कर्षेऽपि उत्कृष्टा वैदवैगुण्याय शौचकालप्रतीक्षया । आशौचापगमे दौर्णमास्यादिकाले कर्तव्या ॥

होत्रामयपाद्यङ्गानां स्वकालकर्तव्यताऽधिकरणम् ।

**सू॰ प्रधानेनाभिसंयोगादङ्गानामुख्यकालत्वम् ॥ १८ ॥**

"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति वाजपेयाङ्गत्वेन चोद्यमानो बृहस्पतिसवः किम्प्रधानकाले शरदि तेन सहैकप्रयोगः कर्तव्यः । उतातिदेशप्राप्ते स्वकाले वसन्ते? इति संशयः, तत्र "साङ्गस्य हि प्रधानस्य विधानं देशकालयोः । अङ्गान्तरवदस्यापि तदङ्गत्वात्सह क्रिया । न हि वाजपेयः शरदि कर्तव्यश्चोद्यते किन्तु वाजपेयकर्तृको [illegible]: फलार्थी

सीयते, एवं साधनेऽवगते स्वाराज्ये च फले भावनामात्रविधियुक्तादाख्यातात्प्रतिपाद्यमपेक्षितमिति तन्मात्रपरमाख्यानं, केवलप्रत्ययप्रयोगासम्भवात्तु यत्र क्वचन धात्वनुपादानेऽपि कश्चिद्येन यागायागसमुदाये यच्चिदनुवादभूतः प्रयुज्यते, तत्र सर्वथा फलान्वयात्प्राधान्यम् उच्यते "धात्वर्थानाम्फलैर्योगो न नाम्नामिति हि स्थितम् । यच्चित्तु यागमेवाह यत्नेऽस्तिन फलान्वयः ॥ राजसूयपदं चापि यत्येऽप्यधिकारयतः । यागनामैव तेनात्र यागानां स्यात्प्रधानता । इतरत्तु फलवत्सन्निधानात्तदङ्गम्भवति ॥

विदेवनस्य क्रत्वाऽऽङ्गसूयाङ्गताधिकरणम् ।

## सू० मध्यस्थं यस्य तन्मध्ये ॥ २ ॥

स्थितमयागानामङ्गत्वम्, तत्र विदेवनाद्योऽभिषेचनीयात्प्रसोमयागविध्यनन्तरमाम्नातास्तदीयमाहेन्द्रस्तोत्रकाले ऽपकृष्टाः माहेन्द्रस्तोत्रमत्यभिषिच्यत इति, अथ विदेवनादीनामभिषेकात्मानामपकर्षे इति ते इमे अभिषेचनीयाङ्गं ? उत राजसूयाङ्गं ? मिति सन्देहे कथम्भावगृहीतप्राङ्गाङ्गमध्यपातादथान्तरप्रकरणेनाभिषेचनीयाङ्गतामाशङ्क्मानस्योत्तरम्, तत्र "तत्र प्रयोजनापेक्षाक्रमता यत्र चोदना । विदेवनादिसन्नातु न मध्ये प्रकृतौ विधि ।" अभिषेचनीयानन्तर विहिता प्रयोजनापेक्षा, सविधिप्राप्ताभिषेचनीयाङ्गत्वबाधेन प्रकरणाद्राजसूयाङ्गताश्रीताः नापकर्षसमये भूयः प्रयोजनमपेक्षन्ते येनावान्तरप्रकरणविषयता प्रतिपद्येरन्, तस्माद्राजसूयाङ्गम ॥

सौम्यादीनामुपसत्कालकत्वाधिकरणम् ।

## सू० प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ३ ॥

राजसूये एवं "सौम्यञ्चरुम्यभृदंविशो"ति विधाय श्रूयते । "पुरस्तादुपसदां सौम्येन प्रचरन्ती"ति । किमयञ्चरूपसदामङ्गम् ? अङ्गप्रयोजनसम्बन्धोऽयम् ? उत यागान्तरवत्फलार्थः कालार्थोऽयं संयोग ? इति चिन्त्यते "तत्र प्रकरणापेक्षात्सामान्यवचनादयम् । स्वाराज्ये विनियुज्येत साक्षादुपसदङ्गता । न हि सौम्येनेति स्वशब्देन तृतीयान्तेन पष्ठीनिर्दिष्टोपसदङ्गत्वेन विनियुज्यमानः सौम्यः प्रकरणापेक्षया सामान्येन राजसूयवाक्येन फल-

एव यद्वाणा'मिति प्रशस्तवचनो ज्येष्ठ–शब्दो नित्यश्च प्रशस्तो न चञ्चलः अथवा प्राथम्यनिमित्त ज्येष्ठवित्यश्च सर्वयं पाठक्रमात् यद्वान्तरेभ्यः प्रथमह् एव क्रियमाणो भवति ज्येष्ठः, नैमित्तिकस्तूपजाते निमित्ते क्रियमाणो न नियोगतः ज्येष्ठः स्यात् । "तस्मादुभयरूप. स्याच्च त्वेवविन्य एव सः । न तु नैमित्तिको यस्मान्निमित्तस्याश्रुतत्वतः । न ह्यन्तरायो निमित्तत्वेन श्रूयते यदि–शब्दाद्यभावात् यच्छब्दस्य चाकर्तृसमानाधिकरणस्य तत्प्रतिपादकत्वाभावात् सर्वदाद्यमात्रमन्तरायश्रवणमिति नित्य एव स्यात् ॥

वैश्वानरस्य नैमित्तिकत्वाधिकरणम् ।

**सू० वैश्वानरश्च नित्यः स्यान्नित्यैः समानसङ्ख्यत्वात् ॥ ६ ॥**

"यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामिगर्भो विपद्यते तादृगेव तदार्तिमार्च्छेद्वैश्वानरं द्वादशकपालमुरस्तात् निर्वपे"दिति, अत्रापि पूर्ववदर्थवादमात्र संवत्सराभरणमिति नित्यता मन्यते । यच्छब्दस्तु कर्तृसमभिव्याहृतो निमित्ततां संवत्सराभरणस्य प्रतिपादयति निमित्तिकतैव स्थिता ॥

षष्ठ्याश्चितेर्नैमित्तिकत्वाधिकरणम् ।

**सू० षट्चितिः पूर्ववत्त्वात्स्यात् ॥ ७ ॥**

"योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्ति अथ षष्ठीं चितिं चिनुते प्रतिष्ठित्या' इति किमियं षष्ठीचितिर्नित्यार् सवाग्नि' षट्चितिक ? उत पञ्चचितिक एव ? इदन्तु चयनान्तरमेकचितिकम् अप्रतिष्ठायान्निमित्ते विधीयते तत्र "पूरणप्रत्ययो न स्यात्षट्सङ्ख्यापूरणाद्विना । पञ्चभिः सहिता चैषा पूरयेत्ता न केवला । न हि केवला चितिः षष्ठीति शक्या वक्तुम् । तस्मान्नित्य एवाग्निः षट्चितिक, नैवम् । "यच्छब्दोऽप्रतिष्ठाया. स्पष्टमाह निमित्तताम् । अभिधानक्रियापेक्ष षट्सङ्ख्या पूरणम्भवेत् । नित्याः पञ्चचितयः प्रागभिहिताः ततः परमियं नैमित्तिक्यभिधीयते इत्यभिधानापेक्ष षष्ठीत्वमुपपन्नमिति न यच्छब्दावगतनिमित्तापह्नव शक्यते कर्तुमिति नैमित्तिकीयम् ॥

पिण्डपितृयज्ञस्यानङ्गता अधिकरणम् ।

**सू॰ पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ ८ ॥**

"अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती"ति अनारभ्याधीतः पितृयज्ञ क्रत्वर्थः ? उत पुरुषार्थः ? इति संशये कर्मवचनेनामावास्या-शब्देन समभिव्याहारात्तदङ्गत्वम् । यद्यपि कालस्यापि साधारणोऽयं शब्दस्तथापि फलकल्पनापरिहाराय कर्मवाचितैवाङ्गीक्रियते, तस्मात् क्रत्वर्थ एवायमाहिताग्नि. अनाहिताग्नेरप्यनाहिताग्निना कार्यं इति विहित', तस्य क्रत्वभावात्तु पुरुषार्थ तथा च भगवता मनुना ' न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः इति वदता दर्शाङ्गत्वं प्रदर्शितम । अनङ्गं हि तेन विना क्रियते तस्मादङ्गं "नैव साधारण्येऽपि सामानाधिकरण्यम.। कालवाचित्वमेव स्यात्तस्यापेक्षत्व कर्मणि' । यद्यपि साधारणोऽमावास्या-शब्द तथाप्यपरान्हसामानाधिकरण्यलिप्सया कालवाचित्वमध्यवसीयते न चायमतीव साधारण काले हि निरपेक्षोऽयङ्कालवचनापेक्षया तु कर्मणि वर्तते ॥ तस्मात्कर्मसमभिव्याहाराभावादनङ्गम् । मनुवचनस्य त्वयमर्थं श्राद्ध-शब्देन मासि मासि श्राद्धमुच्यते । दर्श-शब्देनाप्यमावास्याकाल तदयमर्थ अमावास्यायामेवाहिताग्नि श्राद्धङ्कुर्यान्न तेन विना अर्थान्निवापरपक्षादि तु क्रियमाणोऽपि पितृन्प्रीणातीति स्मृत्यन्तरवशादन्येद्यह स्तु कुर्यादिति एष च स्मृत्यन्तरमनाहिताग्निविषयम्भविष्यति तस्मिद् पितृयज्ञस्यानङ्गत्वम् ॥

रशनाया पश्वङ्गता धिकरणम् ।

**सू॰ पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ ९ ॥**

"आश्विनङ्ग्रहङ्गृहीत्वा त्रिवृता यूप परिवीय आग्नेय सवनीयम्पशुमुपाकरोती"ति येय सवनीयस्याङ्गभूता रशना सा किं पशुबन्धनार्थं ? उत यूपसंस्कारार्थं ? इति संशये "यूपार्था सत्यदृष्टार्था दृष्टार्था पशुबन्धने यतपक्रमकालेन पश्वङ्गं रशना भवेत्' । न हि यूपस्य रशना किञ्चिदुपकरोति यो यस्यनपक्रमणाद्दृष्टार्थो भवति दृष्टार्था तेन त्रिवृत्परिवीतिपरिवृता काभिहिता रशना वाक्येन पशुयागाङ्गतया विधीयते त्रिरङ्गुल्या याग्ने

यमुपाकरोतीति, सा च दृष्टेनैव पश्वनपक्रमणेन तदङ्गतां प्रतिपद्यते या च त्रिवृच्छब्दे तृतीया या च यूपं परिव्ययतीति द्वितीया तत्सर्वं प्राप्तानुवादः । यूपे हि पशुबन्धस्य चोदकप्राप्तेः यश्च रशनया यूपे पशुम्बध्नाति सोऽवश्यं यूपे रशनां व्यापारयति, यश्च व्यापारयति स उच्यते तया यूपं परिव्ययतीति सकृत् अतोऽयमनुवाद इति पश्वर्था रशना चोदकप्राप्ता नान्या रशना ताभ्यामुभाभ्यां पशुर्बध्यते ततः पश्वर्था रशना तदर्थं च परिव्याणं यूपे तस्याः प्रतिमोचनम् । प्रतिमुक्ता हि सा नपक्रमणाय कल्पते । यूपोऽपि स्थाणुस्थानीयः तदर्थं एवेति सर्वमेव दृष्टार्थं भवति, तस्मात्पश्वर्थत्येव प्राप्ते ब्रूमः । "यदादृष्टार्थता यूपे स्याद्विवक्षितत्वता । यूपार्था सत्यपि त्वेषा दृष्टार्था द्वार्थसम्भवः । परिव्याणं हि यूपार्थं द्वितीयातोऽवगम्यते । रशना च परिव्याणशेषभूता तृतीयया । सर्वत्वाद्विपरीतं स्यात्पश्वर्था रशना यद । यूपार्था रशना तस्माद्यूवैव पशुबन्धनी । केचित्तु पूर्वपक्षेऽपि न पशुबन्धनार्था रशना यूपस्यैव परिव्याणं पशूपाकरणस्याद्युपकारकमिति पूर्वपक्षः, सिद्धान्तस्तु यूपसंस्कारार्थमित्येवमाहुः । तथा सति अनुष्ठानाविशेषाविप्रयोजना चिन्ता स्यात् पशुगणे स्वैरूपे सकृत्कृतमेव परिव्याणमद्यमाणविशेषत्वात्सर्वेषां सर्वेषामुपकुर्यादिति प्रति पशु रशना कार्येतिप्रयोजनच सिद्ध्येदित्यास्तां तावत् ॥

स्वरोः पश्वङ्गताधिकरणम् । सू० स्वरुश्चाप्येकदेशत्वात् ॥ १० ॥

"यूपस्य स्वरुङ्करोति स्वरुणा पशुमनक्ती"ति । किं यूपार्थः स्वरुः तस्य पश्वञ्जनं प्रतिपत्तिः ? उत पश्वर्थः ? तस्य यूपादुपादान? मिति सशये । यूपस्येति षष्ठ्या देवदत्तस्य गौरितिवत्तादर्थ्ये मन्यते "स्वरुणा पशुमित्येवं शेषशेषिविभक्तितः । स्वरोः पश्वञ्जनाङ्गत्वं पशोश्चापि प्रधानता यूपस्येत्यवयवव्यतिरेकजनिता षष्ठी न तादर्थ्यङ्गमयतीति पश्वर्थः स्वरुः ॥

आघारादीनामङ्गताधिकरणम् । सू० दर्शपूर्णमासयोरिज्याप्राधान्यविशेषात् ॥ ११ ॥

दर्शपूर्णमासयोः किं सर्वेषां यागानां प्राधान्यम् ? उताग्नेयादीनामेककालयोगिनामितरेषां तदङ्गत्वमिति चिन्त्यते "य एवं विद्वानित्येवं संयु-

कावनुवादकौ न विधायकावित्यनुवादस्य तु प्रयोजनमाग्नेयादीनामेव प्राधान्यसिद्धिरित्येतावत्स्थितं द्वितीये, अधुना तु तदेव प्रयोजनं सिध्यति नेति चिन्त्यते। तत्राख्यातानुसारित्वात्सन्नाया राजसूयवत्। तस्या विशेषतो वृत्तिः सर्वयागप्रधानता नामधेयत्वाद्वाख्यातानुसारि यत्राख्यातं तत्र वर्तते न तु यत्र नाम तत्राख्यातम् आख्यातस्य चाविशेषात्सर्वानेव रूपवतः प्रकृतान् यागान् उपादाय फले विनियुङ्क्ते, अतो नामाप्युक्तवं द्विवचनान्तप्रसिद्धरूपकं सर्वत्र वर्तत इति तस्याप्यनुवादेन समुदायद्वयसिद्धौ सर्वेषां प्राधान्यम्, उच्यते "यद्धि नामाप्रसिद्धार्थं तदाख्यातवशमन्वेत्। इदं पुनः प्रसिद्धार्थमाख्यातस्य विशेषणम् पौर्णमासी सा तत्कालद्वयसंयोगाद्यागे यद्यपि प्रसिद्धार्थं द्विवचनमपि च एव त्रिद्वानित्येव संयुक्तानुवादद्वयपरिकल्पितसमुदायद्वयाभिप्रायमप्रसिद्धार्थमेव। न तु दर्शशब्दस्याप्रसिद्धार्थत्व मन्वारम्भणीयावाक्यशेषे ह्यमावास्यापर्यायत्वेन प्रसिद्धार्थत्वात्। तदेव प्रसिद्धार्थं विशिष्टवाचिनामधेयं शक्नोत्याख्यातं सामान्यवचनं स्वविषये स्थापयितुमिति पञ्चानामेव प्राधान्यमितरेषां तु प्रकरणात्तदङ्गत्वम्॥

ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम्।

**सू० ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम्॥ १२॥**

दीक्षणीयाग्नीषोमीयादीष्टिपशुयागात् सोमयागस्य प्रकृत्य श्रूयते। "ज्योतिष्टोमेन स्वर्गकामो यजेत" तत्र चिन्त्यते किं सर्वयागानां फलसंबन्धेन प्राधान्यम्? उत सोमयागस्यैव इतरेषां तदङ्गत्वमिति 'तत्राख्याताविशेषेण सर्वयागप्रधानता। नामधेयं प्रसिद्धार्थमाख्यातं विशिनष्टि हि। ज्योतिराख्या न हि स्तोमाः प्रसिद्धाः कस्यचिद्यजे। तत्रायथार्थश्रुतिर्नामधेयस्य गम्यते। त्रिवृदादिषु तच्छब्दस्तुतिमात्रपरोदितः। न तु स्तोमाभिधेयत्वं ज्योतिःशब्दस्य तावता। वस्तुतः त्रिवृदादीनां ज्योतिःशब्दाभिधेयता। तथापि सर्वयागानां तत्सम्बन्धात्प्रधानता। स्तोमा हि सर्वयागानामङ्गं स्युरविशेषतः। सर्वेषां फलवत्त्वेन प्रक्रिया न विशिष्यते यतः प्रकरणात्स्तोमाः सर्वयागाङ्गतामियुः। सोमयागेन संयुक्ताः स्तोमाः सामर्थ्येन चेत् सह। बहवः स्तोत्रयोगोऽप्ये कालाधीनाः सहङ्गतिर्यतः। दृष्टोऽपि कृता-

यैस्यात्स्तोत्रस्य ग्रहणस्य च। स्तोत्राणि तावदाज्यैः स्तुवत इत्यादिवाक्यो-
त्पन्नानि प्रकरणात् यागाङ्गानि कृतार्थानि ग्रहणमप्यैन्द्रवायवादिवाक्यवि-
हितं सोमसंस्कारतया कृतार्थमेव, अतोऽत्र कालार्थ एव संयोगः "ग्रहं वा गृ-
हीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्या"दिति न त्वङ्गाङ्गिभावोऽङ्गत्वन्तु प्रक-
रणाविशेषात्सर्वयागान् प्रत्यवगम्यते, स्तोत्रीया संख्या च स्तोमशब्देनोच्यत
इति तत्सम्बन्धः सर्वेषामविशिष्टः। "तेनाख्याताविशेषेण नाम्नश्चाप्यवि-
शिष्टतः प्राधान्यं सर्वयागानामिति प्राप्तेऽभिधीयते। ज्योतिष्टोमाभिधा-
नस्य यागस्यात्र फलं श्रुतम्। ज्योतिष्टोमपदञ्चेदं वाक्यशेषे निरुच्यते
ज्योतिष्टोमपदनिर्वचनार्थं ह्येतद्वचनम्, त्रिवृत्पञ्चदशः सप्तदश एकविंशः
एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा"इति। तदिह यदि त्रिवृदादि-
कस्तोत्रीयसङ्ख्याचतुष्टयस्य ज्योतिःशब्दो वाचकः यद्यपि न वाचकः सर्वथा
तावत्तत्सम्बन्धिनि यागे ज्योतिष्टोमपदं नामतया वर्तत इत्येतत्तावद्विस्पष्ट-
मवगतम् अतस्तत्सम्बन्धिन एव यागस्य फलमिदं नान्यस्य, न च दीक्षणी-
यादीनां फलवाक्यप्रवृत्तिवेलायां स्तोमसम्बन्धः प्रसिद्धो यागानां स्तोत्राणां
च निष्फलत्वाविशेषेणाङ्गाङ्गिभावानिष्पत्तेः, फलसम्बन्धोत्तरकालभाविप्रा-
करणिकस्तोमसम्बन्धाभिप्राये छेदनादिविधाविव यूपपदं ज्योतिष्टोमपद-
मित्याश्रयणीयं स्यात् तत्र प्रसिद्धनिर्दिष्टरूपः शब्दो बाध्येत सोमयाग-
स्यापि यद्यप्यनेनैव न्यायेनाङ्गाङ्गिभावः सम्बन्धः स्तोत्रैरसिद्ध एव तथापि
सोमग्रहणस्य स्तोत्रोपाकरणस्य च कालार्थोऽपि तावत्संयोगः प्रसिद्धः "ग्रहं
वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्या"दिति। तावता च सोम-
यागस्य स्तोमानाञ्च सम्बन्धमात्रं सिद्धम्। तन्मात्रनिमित्तश्च बहुव्रीहि-
रिति शक्यते ज्योतिष्टोमपदेन सोमयागोऽभिधातुमिति तद्विशेषितो
यजिस्तस्यैव फलसम्बन्धं करोति "प्रसिद्धरूपे सति सोमयागे न दीक्षणीया-
दिषु वर्तते, यत। ततः स एवेह फलान्वयेन प्रधानमन्ये तु तदङ्गभूताः॥

इति महामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपि-
कायां चतुर्थाध्यायस्य चतुर्थः पादः॥

अध्यायः समाप्तः॥

त्प्रथमद्वितीयादावप्यनियमः "प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात् । अन्यथा व्यवधानं स्यादनुज्ञाताधिकैरपि" । एकैकस्य हि पशोः पदार्था मिथः प्रत्यासन्नाः कर्तव्याः वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वचनावगतप्रवृत्तसाहित्यबलादन्यदीयैः षोडशभिः पदार्थैर्व्यवधिमनुजानाति नाधिकैः प्रवृत्त्या च क्रमनियमे तावद्भिरेव व्यवधानं भवति, अन्यथाऽधिकैरपि स्यात्तस्मात्प्रवृत्त्या नियमः ॥

क्रमस्य क्वचित्स्थानानुसारिताधिकरणम् ।

सू० स्थानाच्चोत्पत्तिसंयोगात् ॥ ९ ॥

साद्यस्क्रे "सह पशूनालभेत" इति श्रुतं साहित्यं च सवनीयस्थाने इति स्थितम्, तत्रोपाकरणादीनां प्रतिपशु भेदे किं नियमः क्रमस्य उताग्नीषोमीयस्य? प्रथममुपाकरणं? अथवा सवनीयस्ये? ति नियामकाभावादनियमः प्रकृतिदर्शनाद्वा अग्नीषोमीयस्य प्राथम्ये प्राप्ते सवनीयस्येत्याह "आश्विनग्रहणेनासौ पर्युपस्थाप्यते यतः । ततश्चलितं स्थानाच्चोपस्थाप्येत केनचित्" । अग्नीषोमीयप्रणयनानन्तरं ह्यग्नीषोमीयस्य स्थानं स तेनोपस्थितोऽपि सहालम्भवचनेन तस्मात्स्थानाच्चलितत्वादननुष्ठितोऽत्र तु न किञ्चित्तस्योपस्थापकमस्ति, सवनीयः स्वस्थानादस्खलितः सन् आश्विनग्रहणादुपस्थितत्वात्तदनन्तरमुपाक्रियते, ततः साहित्यवचनादितरोपाकरणम् अतः सवनीयस्यैव प्राथम्यम्, इतरयोस्तु मिथः क्रमेऽनियम एव तयोरुपस्थापने विशेषाभावात् । अथवा प्रकृतिदृष्टपौर्वापर्यमात्रमसति बाधकेऽनुग्रहीतव्यमित्याग्नीषोमीयमुपाकृत्यानुबन्ध्योपाकरणम् ॥

अङ्गक्रमस्य मुख्यक्रमानुसारिताधिकरणम् ।

सू० मुख्यक्रमेण चाङ्गानां[2] तदर्थत्वात् ॥ [illegible]

"सारस्वतौ भवतः" इति यागद्वयं विहितं स्त्रीपुंसदेवत्यम् 'एतद्वै दैव्यं मिथुनमि'ति वाक्यशेषात्, तत्र स्त्रीदेवत्यस्य प्रथममनुष्ठानं ततः पुंदेवत्यस्य याज्यानुवाक्यापाठक्रमात्, तत्र चोदकप्राप्तो निर्वापः किमनियमेन कर्तव्य? उत स्त्रीदेवत्यं निरूप्य ततः पुंदेवत्य? मिति नियमकार-

१ उपस्थान इति पाठान्तरम् ।
२ याङ्गानामिति पा ।

कल्प्यस्तु प्रयोगवचनाश्रयः क्रमः, कल्पना चाकाङ्क्षाधीना निराकाङ्क्षाश्चेह पदार्था इति न कल्पनं सम्भवति ॥

विकृतौ क्वचित् प्रकृतिधर्मातिदेशाधिकरणम् ।

सू० विकृतिः प्रकृतिधर्मत्वात्तत्कालः स्याद्यथाशिष्टम् ॥ ११ ॥

चातुर्मास्येषु साकमेधस्तृतीयं पर्व तत्र श्रूयते "अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेन्मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सायमो[1]दनमिति, किमेता द्व्यहकाला इष्टयः? उत सद्यस्काला? इति तत्रातिदेशात्सर्वासां प्राप्नोति द्व्यहकालता । प्रातःश्रुतेर्विरोधश्च नामावास्याश्रुतेरिव । 'य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा' इति वचनं सामगा[2]नि कर्माणि अमावास्याकालं प्रत्युपाददानं द्वयोरह्नोः सत्कालासम्भवाद्युक्तं यदाऽतिदेशिकं द्व्यहकालत्वं बाधते प्रातरादिश्रुतिस्तु अहर्द्वयेऽपि प्रातःकालसम्भवादतिदेशाविरोधिनी, न तद्बाधितुमुत्सहते । तस्माद्द्व्यहतन्त्रेषु प्रातरादिषु प्रक्रम्य श्वस्तनेषु प्रातरादिषु समापनीया इति प्राप्ते ब्रूमः, 'साङ्गं प्राप्तिमित कर्म प्रातःकाले विधीयते । स चाविशेषात्सन्देहः सत्यमेको भविष्यति चिकीर्षितार्थेन हि कालो विधीयते सर्वाङ्गप्रधानयुक्ता च भावना चिकीर्षिता नैकदेशमात्रम्, अतो य एवैकः प्रातरादिकालः प्रयोगाय सम्पन्नः, स एव सर्वप्रक्रियायाः सम्पूर्णायाः प्रारम्भावसानाय प्रक्रमस्याविशेषात्सम्पूर्ण एव सर्वाङ्गयुक्तप्रधानप्रयोगो भवति न प्रातर्द्वयस्यावकाशः, तस्मादुपदेशात्सद्यस्काला ॥

अनुयाजाद्युत्कर्षापकर्षाधिकरणम् ।

सू० अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ १२ ॥

अग्निषोमीये पशौ प्रकृतौ हविरासादनोत्तरकाले प्राप्तानां प्रयाजानामपकर्षः श्रुतः 'शिष्टन्त पशु प्रयजन्ती'ति तथोत्कर्षः 'सवनीयेऽनूयाजानाम् आश्विनग्रहणादूर्ध्वमनुयाजैश्चरन्ती'ति तत्र किं श्रुतमात्रनिवृत्तः

---

1. सायमिति" इति पा. ।
2. साङ्गानि इति पा. ।

मुत्कर्षापकर्षौ ? उत तदन्तस्योत्कर्षः तदन्तापकर्ष इति संशये "श्रुतोत्कर्षापकर्षाभ्यां वचनस्योपपत्तितः । न तदन्तनदादीनां भवेतामप्रमाणकौ । प्रधानसंनिधिरेवं बाधितो न भविष्यति । कर्तृपूर्वपदार्थानामेवं प्राप्तेऽभिधीयते । पूर्वमेवोपस्थितं कार्यमुत्तरं कर्मचोदकात् । प्राप्तं तदन्यथाभावे क्रमलोपाद्विलुप्यते ॥ अनूयाजोपस्थितात्तदुत्तरकालं सूक्तवाकादयः कर्तव्याः अनुयाजेषूत्कृष्टेष्वनुत्कृष्टा, पूर्वं क्रियमाणा विगुणा एवमाघारोत्तरकाले कर्तव्याः प्रयाजाः केवला अपकृष्यमाणाः क्रमलोपाद्दुष्येयुः तस्मात्तदानीनामुत्कर्षस्तदन्तानां चापकर्षः ॥

प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभावित्वाधिकरणम् ।

**सू० प्रवृत्त्या कृतकालानाम् ॥ १६ ॥**

प्रातरनुवाकोपेयं होत्रे दत्त्वाऽनन्तरं प्रतिप्रस्थाता सवनीयान्निर्वपस्येति प्रेष्यतीति विधायाऽनन्तरं प्रवर्ग्यहोमादयः सौमिकाः पदार्थाः पठितास्तत्र वैष्णवाग्निर्वापस्तावत्तदैव कर्तव्यः तदनन्तरं सौमिकाः पदार्थाः कर्तव्याः आग्नीदग्नीन्विहरबर्हिस्तृणीहि पुरोडाशानलङ्कुर्वित्येतत्प्रैषपर्यन्तास्तत ऐष्टिकाः प्रोक्षणादयः ? उत प्रोक्षणादीन् प्रागलङ्करणात्कृत्वा ततः सौमिका इति निर्वापः प्रतिप्रस्थातृकर्तृत्वादाध्वर्यो. प्रोक्षणमुपस्थापयति सौमिकानामपि निर्वापव्यवहितानां नास्त्युपस्थापकं, तस्मादनियमः, उच्यते "निर्वापेऽध्वर्योरपि कर्तृत्वमस्ति प्रयोजकत्वात्, अतोऽसौ प्रोक्षणादीन् उपस्थापयति, सन्ति तावत्कर्तव्याः ततः सौमिकाः ॥

छिन्नयूपकर्षमाणापकर्षाधिकरणम् ।

**सू० असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ १७ ॥**

ज्योतिष्टोमे अग्नीषोमीयवपायनात्परतो यूपच्छेदनं प्रत्यक्षमाम्नातं तद्वीयताम् यूपं छिनत्तीत्यपकृष्यमाणमग्नीषोमीयवपायनादीन् अपकर्षति? उत नेति संशये प्रयाजवदाघारादीनपकर्षतीति प्राप्ते उच्यते "सौमिकेन पदार्थेन पाशुकस्य न हि क्रमः । अङ्गं तदपकर्षेण सौमिकेनापकृष्यते" । आघारोत्तरकालत्वं प्रयाजादीनामङ्गं तस्मादायातीति युक्तं यत्तदपकर्षे आघारोऽपकृष्यते पाशुकस्य तु यूपच्छेदनस्य न सौमि[illegible]

ऽग्निहोत्रमुत्कर्षेति ने?ति सशय', यद्यपि चात्र भिन्नप्रयोगयो सान्तपनी याग्निहोत्रयोर्न मिथः क्रमोऽङ्गं तथापि साध्ङ्काले द्वयोः सविपतितयोरवश्य भाविनि पौर्वापर्ये सान्तपनीया क्रत्वा क्रियमाणस्य चाग्निहोत्रस्य काला-तिपत्तिप्रसङ्गे सति कि न्याय्यमिति युक्ता चिन्ता, तत्र सान्तपनीया ताव-त्स्वकाल मध्यन्दिनमतिपत्त्यैव तस्या कश्चिदुभयथाऽपि न विशेष', अग्नि-होत्रस्य तस्मिन्काले क्रियमाणस्य प्रयाणलोप स्यात् उत्कर्ष तु काल लोप , तत्र कस्यानुग्रह ? कस्य लोप इति चिन्त्यते तत्र मुख्यत्वात्प्रयाण-मानुग्रहे साङ्गप्रयोगावधारणोत्तरकालप्राप्तेः कालस्य जघन्यत्वेन बाध इति प्राप्ते उच्यते कालस्यानुपादेयत्वेन निमित्तविशेषणत्वात्तस्मिन्प्राप्त मग्निहोत्र किञ्चिदङ्गमपहायापि कर्त्तव्य तस्मादग्निहोत्र हुत्वा सान्तप नीया समापनीया ॥

उत्कर्षानुरोधेन षोड शयुत्कर्ष निराकरणम् ।

सू॰ षोडशी चोक्थसयोगात् ॥ १८ ॥

ज्योतिष्टोमे षोडशिन प्रकृत्याऽऽमनन्ति न पराञ्चमुक्थेभ्यो निर्गृह्णाति षोडशिनमिति तथदा दैवाद्ग्रयानामुत्कर्षो भवति कि तदा षोडश्यु त्कृष्यते नेति सशय , "तच्च नोत्कर्षेण युक्त स्तोत्रकालोपसङ्ग्रहात् । उत्क-र्षेणैव हायेत स्वकालात्स्तोत्रमस्य हि । यदि हि षोडशियहणाभ्यास उत्कृष्येत तत प्रधानकालत्वादङ्गाना यह वा गृहीत्वा समस वा तृतीय स्तोत्रमुपाकुर्यादिति वचनात् तदङ्गभूत स्तोत्रमप्युत्कृष्येत तत्र 'समया-ध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकरोतीति विहितः कालोबाध्येत । नन्वनु-त्कर्षपक्षे ऽप्युक्थ्यपरभावोबाध्येत, बाध्यता क्रममात्र हि तत्कालस्तु बली-यानित्युक्तं तस्मादनुत्कर्ष उच्यते-"क्रमो ऽपि तु प्रधानाङ्गभूत * स्याद्बल-वानसौ । कालस्तोत्राङ्गभूतत्वाद्दुर्बलो बाधमर्हं' ति । न पराञ्चमुक्थेभ्य इति वचनात् षोडशियागाभ्यासस्योक्थ्यपरभावोऽङ्ग सोऽनुत्कृष्यमाणे प्रधानाङ्ग सङ्बाध्येत,न चैतद्युक्तमतोऽवरमङ्गभूतस्तोत्राङ्गस्यैव कालस्य बाध इत्यनुत्कर्ष ॥

इति शास्त्रदीपिकाया पञ्चमाध्यायस्य प्रथमः पाद. ॥ १ ॥

---

* विहितकालस्तु यदीयानिति पाठान्तरम् ।

## अथ पञ्चमाऽध्याये द्वितीयः पाद आरभ्यते ।

---

पदार्थानुसमयन्याय । वाजपेयपशूनां सर्वेषामेको-पाकरणादिधर्मानुष्ठानाधिकरणम् ।

सू० सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥

वाजपेये प्राजापत्याः पशवो वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्येतस्मिन्काले विहिताः सह प्रयोक्तव्याः तेषामारादुपकारकाणां तन्त्रद्रव्यसंस्कारास्तूपाकरणनियोजनादयः प्रतिपशुभेदेन कर्तव्याः ते किमेकैकस्य कार्त्स्न्येन कृत्वा ततोऽपरस्य कर्तव्याः ? किं वोपाकरणं सर्वेषां कृत्वा ततो नियोजनमिति तत्र एकैको हि पशुः स्वाङ्गान्यव्यवेतान्यपेक्षते । 'वा एकोऽप्येवमेवात काण्डानुसमयो भवेत् । प्रयोगवचनावगतसाहित्यबलेन ह्येकैकस्य पशोर्धर्माः सश्लिष्टाः कर्तव्याः प्रकृतौ चोपाकरणादीनामानन्तर्यं कृतम् इहापि प्रतिकर्मावसायिना चोदकेन प्रतिपशु प्राप्यते यत एकस्योपाकरणादिकं सर्वं गुणकाण्डं कृत्वा ततोऽपरस्य कर्तव्य, वाचनिकं तु साहित्यमारादुपकारकत्वात्वादप्युपपद्यम् उच्यते—' वचनेनैककालत्वं पशूनामिह चोदितम् । न तत्प्रयोगवचनात् चोदकाद्वापि बाध्यते । कार्त्स्निकं प्रयोगवचननिबन्धनं साहित्यं चोदकं चानुमानतः प्रत्यक्षवचनेन तु वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्येककालप्रयोगः पशूनामवगम्यते यतो यस्मिन्नेव क्षणे एकस्योपाकरणं कर्तव्यमापतति तस्मिन्नेवापरस्योपाकरणं वक्तव्यं सदृशक्षणतया केवलं न क्रियते द्वितीयक्षणे न कश्चिद्गुणं च क्षणान्तरं नोपाक्रियेत यतः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादि' कर्तव्य एव दर्शपूर्णमासादिषु अनेकप्रधानसमवाये पदार्थानुसमय एव न्याय्यो न काण्डानुसमय इति स्थितम् यत्र प्रधानविरोधो भवति पदार्थानुसमये तत्र काण्डानुसमय एवेति यथाऽश्वप्रतिग्रहेष्ट्या शते सहस्रे वा पुरोडाशेषु श्रपयमाणेषु यदि सर्वेषामधिश्रयणं कृत्वा ऽऽद्यस्योद्वासनं क्रियेत तत स दह्येत तस्मात् तत्र प्रधानविरोधे पदार्थानुसमयः ।

मुष्टिकपालादीनां समुदायानुसमयाधिकरणम् ।

**सू० मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ २ ॥**

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः पदार्थानुसमये स्थिते संशयः किमेकैकेन मुष्टिनाऽनुसमयः? उत चतुर्भिर्मुष्टिभिरिति, यद्येकैको मुष्टिः पृथक् पदार्थस्तत एकैकेनाऽनुसमयः । अथ चतुर्मुष्टिनिर्वाप एकः पदार्थस्तर्हि चतुर्मुष्टिभिरिति, "प्रतिमुष्टि यतीभावः पर्ययस्यन् हि दृश्यते । मुष्टिना मुष्टिरेवातोऽनुसमयो न संशयः" उच्यते—"अङ्गत्वं चोदनागम्यं पदार्थस्त्वङ्गमेव नः । चतुर्णां चेह मुष्टीनां निर्वापः शास्त्रचोदितः अङ्गपर्यायो हि पदार्थशब्दस्तेन ययोः प्रधानयोः सहानुष्ठानं तयोर्यदङ्गं तदेकस्य कृत्वाऽपरस्य कर्तव्यं चतुरो मुष्टीन्निर्वपतीति शास्त्राच्चतुर्मुष्टिनिर्वापोऽङ्गम् एकैकस्तु मुष्टिस्तदवयवो न पदार्थस्तस्या विधानात् पदार्थेन चानुसमयो न तदवयवैरतश्चतुर्भिरनुसमयः, एवं कपालोपधानेऽपि नैकैकेनानुसमयः किन्तु आग्नेयस्य कपालानि सर्वाण्युपधायाग्नीषोमीयस्योपधानम्, एवं द्विर्हविषोऽवद्यतीत्यत्रापि नैकावधानेनानुसमयः एवमाञ्जनादिष्वपि योज्यम् ॥

अवदानस्य प्रदानान्तानुसमयाधिकरणम् ।

**सू० संयुक्ते तु प्रक्रमात्तदन्तः स्यादितरस्य तदर्थत्वात् ॥ ३ ॥**

दर्शपूर्णमासयोर्द्विर्हविषोऽवद्यतीति श्रुतं तत्र नैकेनाऽवदानेनानुसमय इति स्थितमिदानीं तु किं द्वाभ्यामवदानाभ्यामनुसमयो? ऽथवाऽवदानादि प्रदानान्तेनेति चिन्त्यते तत्र "वचनेन द्विसंख्याकमवदानं विधीयते । तावानेकः पदार्थोऽतस्तावताऽनुसमीयते नैवं होमविधेरर्थात् अवदाने प्रापिते सति विशेषमात्रं हविषो द्विरित्यत्र विधीयते । चतुरवत्तं जुहोतीत्यत्रतस्य होमो विधीयते, न चाकृत्वाऽवदानमवत्तहोमसम्भव इत्यर्थप्राप्तमवदानं न विधातव्यं द्विर्हविषोऽवद्यतीत्यर्थप्राप्तस्यावदानस्य विशेषमात्रस्य विधानं हविषो द्विरिति यद्यपि विधीयते तथाऽपि दृष्टार्थत्वाच्चतुरवत्तं जुहोतीत्यस्याश्रयत्वेनैव विधेयं न स्वातन्त्र्येण अतोऽवदानादिप्रदानान्तेनानुसमयः ॥

अञ्जनादेः परिव्याणान्ता-
नुसमयाधिकरणम् ।

**सू° वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ४ ॥**

अग्नीषोमीये पशौ यूपधर्मा अञ्जनमुच्छ्रयणं समानं परिव्याणमिति यूपगणे चोदकप्राप्ताः किमेकैकशोऽनुसमेतव्याः? उताञ्जनादिना परिव्याणान्तेनानुसमयः इति संशये पूर्वेण न्यायेन पदार्थानुसमयः। नन्वञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेदिति प्रकृतावनवसर्गश्चोदकेनेह प्राप्तः कथमेकैकशोऽनुसमीयमाने शक्यते कर्तुम् एवं मन्यते प्रकृतावार्थिकोऽनवसर्गः यजमानेनाध्वर्योः साहाय्यमाचरताऽनुष्ठितस्तदनुवादमात्रं वचनं, न चार्थिकं चोदकः प्रतिदिशति अतः पदार्थानुसमय नैव 'नियोगतोऽप्राप्तेरनुत्सर्गो विधीयते वाक्यं चार्थवदेव स्याद्वादमात्र त्वनर्थकं गणेऽपि चोदकेनात्र प्राप्यतेऽनवसर्जनम्। तेनाञ्जनादिसंघोऽत्र सङ्घेनानुसमीयते ॥

दैवताद्यवदानेषु पदार्थानुस-
मयाधिकरणम् ।

**सू° पशुगणे तस्य तस्यापवर्जयेत्पश्वेकत्वात् ॥ ५ ॥**

अग्नीषोमीये पशाववदानानन्तरं प्रदाने प्राप्ते वचनमिदमाम्नायते 'दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यति सौविष्टकृतान्यवदाय न तावत्येव होतव्यम् ऐडान्यवद्यतीति तदेकतेषु पशुगणेषु विचार्यते किमेकस्य पशोर्दैवतसौविष्टकृतैडान्यवदायापरस्यापि अवदातव्यम्? उत सर्वेषां दैवतानि अवदाय ततः सौविष्टकृतानि ततः ऐडानीति, तत्र 'प्रकृतौ दैवतादीनामानन्तर्यमिहापि तत्। एकैकस्य पशोः कार्यं काण्डानुसमयस्ततः। यद्येकैकस्य पशोर्दैवतान्यवदीयेरन् ततः प्रथमस्य पशोर्दैवतसौविष्टकृतानन्तर्यं चोदकप्राप्तं तद्बाध्येत, तस्मात्काण्डानुसमयः, नैव पश्वैक्यात्प्रकृतावर्थाद्धानन्तर्यमनुष्ठितम् इह त्वनेकसाहित्यात्स जात्यानुसमीयते यावन्तः पदार्थाः कर्तव्यास्ते मिथः संश्लिष्टाः कर्तव्या इत्येतावत्प्रकृतौ विवक्षितं तत्रैकत्वात्पशोर्दैवतसौविष्टकृतानन्तर्यमर्थात्सञ्जातं न तु तदिह प्राप्यते, क्रतुसाहित्यसम्पत्तये समानजातीये समानजातीयानामनुसमयो दैवतैर्दैवतानामित्येवं कर्तव्यः ॥

नानाबीजेष्टौ उलूखलादीनां तन्त्रताधिकरणम् ।

सू० नानाबीजेष्वेकमुलूखलं विभवात् ॥ ६ ॥

राजसूये नानाबीजेष्टिः अग्नये गृहपतये ऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुमित्यादि तत्र प्रकृतितः प्राप्त-मुलूखलं किं तन्त्रम् ? उत भिन्नम् ? इति विचारे, फलविचारश्चायम् अधिकरण-शरीरं तु किं कृष्णाजिनास्तरणोलूखलाधिवर्तनबीजावापाऽवघातपराव-पनविवेचनफलीकरणानि पृथक् पदार्थत्वादेकैकशोऽनुसमेतव्यानि ? उत कृ-ष्णाजिनास्तरणादिफलीकरणान्त एकः पदार्थस्तावता वानुसमयः ? इति 'तत्र नानापदार्थत्वं विधिभेदेन मन्यते । तण्डुलीकरणाशत्यादपृथक्त्वं तु गम्यते" यद्यपि कृष्णाजिनमधस्ताद्ग्रीवं स्तृणाति शूर्पेण विविनक्ति इति विधिभेदस्तथाऽपि तण्डुलभावनावयवत्वेन तद्विधानं न स्वातन्त्र्येणादृष्टा-र्थत्वप्रसङ्गादेका चासौ तण्डुलभावना कृष्णाजिनास्तरणादिफलीकरण-पर्यन्तम्पतता इति तावानेकः पदार्थ इति तावताऽनुसमयः, सयुक्ते तु सूत्रक्रमादित्यत्र चतुरवत्तचोदनयाऽर्थप्राप्तावदाने संख्यामात्रं द्विर्हं-विष इति विधीयते न तु द्वित्वविशिष्टमवदानमित्येव पदार्थत्वं निरा-कृतम्, इह तु सत्यपि विधिभेदेऽवयवत्वेन विधानादनन्यत्वमुच्यते । यत्तु यत्र सत्यपि विधिभेदेऽन्यत्वं नास्तीत्युक्तं तदिह सिद्धमेवोक्तमित्यन-वद्यम् ॥

अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम् ।

सू० विकारे त्वनुयाजानां पात्रभे-दोऽर्थभेदात्स्यात् ॥ ७ ॥

दर्शपूर्णमासयोरष्टावुपभृति गृह्णातीति प्रयाजानुयाजार्थं चतुर्गृहीते तद्द्वयमेकस्यामुपभृति युगपद्गृहीतं तथैव पशौ प्राप्तं तत्रानुयाजानां द्रव्य-विकारः श्रूयते "पृषदाज्येनानुयाजान् यजतीति प्रयाजेऽज्यन्त्वविकृतमेव तत्र द्वयोः सङ्करेऽवश्यं भाविनि चिन्त्यते किं कालभेदेन तस्यामेवोपभृति द्वयं ग्रहीतव्यम् ? उत तस्मिन्नेव काले पात्रभेदेनेति तत्र "पदार्थत्वात्क्रतुत्वाच्च पात्रैकत्वस्य संग्रहः । गुणत्वात्पाठकल्पत्वात् क्रममात्रं तु बाध्यते" अष्टा

ध्रुवप्रभृति गृह्णातीति श्रुतमेवास्त्वं पदार्थैश्च क्रमश्च पदार्थानामनुग्रहः पाठक्रमस्य च, तत्र एकस्मिन्नेव पात्रे प्रयाजाज्यं गृहीत्वा प्रयाजेषु हुतेषु पश्चात्पृषदाज्यं ग्रहीतव्यमित्येव प्राप्ते उच्यते उभयोर्ग्रहणाद्गृत्यात्पात्रैक्यस्य क्रमस्य च । विकृतौ चानुमानेन प्राप्तेस्तुल्यं बलाबलम् एव चाविशेषे सति प्रयाजाज्यग्रहणेनोपस्थितस्यानुयाजपृषदाज्यग्रहणस्याकरणे न किञ्चित् कारणमस्तीति तदैव पात्रान्तरमुपादाय ग्रहीतव्यम् ॥

नारिष्ठहोमस्योपहोमपूर्वत्वाधिकरणम् ।

सू० प्रकृतौ पूर्वोक्तत्वादपूर्वमन्ते स्यान्न त्वचोदितस्य शेषाम्नानम् ॥ ८ ॥

अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदिति नक्षत्रेष्टिं विधायोपहोमा विहिताः 'सोऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति' प्रकृतौ च प्रधानानन्तरं नारिष्ठहोमास्ते चोदकेनात्र प्राप्तास्तत्र संशयः, किमुपहोमान् हुत्वा ततो नारिष्ठहोमाः विपरीतं वेति 'तत्र प्रत्यक्षपाठेन प्रधानानन्तर्यश्रुतेः । उपहोमाननुष्ठाय नारिष्ठानामनुष्ठिति' उच्यते कृतोपकारापेक्षा विकृतिः प्राकृतं पुरः । गृह्णाति वैकृतं पश्चात्तदाकाङ्क्षा यथोक्तता । प्रकारापेक्षा हि विकृतिभावना प्रत्यक्षश्रुतमपि सन्निहितमकॢप्तोपकारं परित्यज्य प्राकृतं प्रकारमुत्पादकपदार्थविशिष्टं प्रथमं गृहीत्वा पश्चात्तद्विध्यन्तात्तद्वयोजनापेक्षावशेन वैकृतं गृह्णाति, तेन यत्र प्राकृतवैकृतयोरेकस्थानपतितयोः क्रमापेक्षा तत्राकृतिक्रमानुसारेण प्राकृतं कृत्वा वैकृतं कर्तव्यम् । न च प्रत्यक्षपाठविरोधः प्रधानवाक्यशेषेण प्रकृतिवच्छब्देन प्रापितात् प्राकृतात्पश्चादेव वैकृतं पठितं भवति, तस्मान्नारिष्ठान्कृत्वा पश्चादुपहोमाः कार्याः ॥

विदेवनादीनामभिषेकपूर्वत्वाधिकरणम् ।

सू० कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगान् न्यायमात्रमितरत् ॥ ९ ॥

राजसूयेऽभिषेचनीयं सोमयागं विधायानन्तरं विदेवनादयोऽभिषेकान्ताः पदार्था विहितास्तत्राभिषेकोऽभिषेचनीयप्राकृताङ्गमध्येऽपकृष्टो

माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यत इति सोऽपकृष्यमाणः प्राचो विदे-
वनादीनपकर्षति ने?ति संशयः, तत्र अपूर्वोऽप्यभिषेकोऽतो न तदन्तापक-
र्षं करोति वेदिवत्तस्मात्तन्मात्रमपकृष्यते तथाऽपूर्वमित्यत्र व्यव-
स्थितम्, अपूर्वः पदार्थोऽपकृष्यमाणो न प्राचामपकर्षाय कल्पत इति तेन
यथा पूर्वेद्युरमावास्यायां वेदिं करोतीति वेदिमात्रापकर्षोऽक्लृप्तक्रमत्वात्
पूर्वेषां तथाऽत्राप्यभिषेकस्यैवापकर्षोऽन्ये त्वन्ते तु बादरायण इति न्यायाद-
भिषेचनीयसकलप्राकृताङ्गोत्तरकाले कर्तव्या इति प्राप्तेऽभिधीयते "अभिषे-
केण पूर्वेषाङ्क्रमः प्रत्यक्षपाठतः । परस्य प्राकृताङ्गेष्वस्त्वनुमानेन गम्यते । य-
द्यप्यत्राप्रकृतिपूर्वत्वेन प्रयाजादिवैलक्षण्यादपकर्षावस्थायां वेदिवत् क्लृप्तः
क्रमस्तथाऽप्यत्रैव क्रमकल्पनायामभिषेकपूर्वभावित्वं विदेवनादीनां प्रत्य-
क्षपाठनिमित्तमभिषेचनीयप्राकृताङ्गोत्तरकालता तु तेषामनुमानात्, तच्च
दुर्बलमतः प्रत्यक्षपाठाद्विदेवनादीनामभिषेकात्पूर्वानुष्ठानात्तदन्तापकर्षः ॥

सावित्रहोमादीनां दीक्ष-
णीयपूर्वप्रयोगाधिकरणम् ।

**सू० प्राकृताच्च पुरस्ताद्यत् ॥ १० ॥**

अग्नौ सावित्रहोमोपासम्भरणाद्यपूर्वपदार्थान् विधाय पश्चाद्दी-
क्षणीयादयः प्राकृताः सगुणाः श्रुताः, तत्र दीक्षणीयादीन् कृत्वा सावि-
त्रादयः? उत विपरीत वे?ति संदेहः तत्र "प्रकृतेः पूर्वविज्ञानात्प्राकृतानां
पुरस्क्रिया पश्चात्तु वैकृतानां स्याद्बादरायणदर्शनात् । दीक्षणीयादि-
पुन श्रवणात्तु गुणार्थत्वाच्च पश्चादनुष्ठानन्दीक्षणीयादीनाङ्गमयति गुणानां
परतन्त्रत्वात् यत्र गुणी तत्र तेषां विधानम् अतः प्रकृतात्पूर्वानुष्ठानम्
इष्यते "गुणार्थं श्रूयमाणानामपि प्रत्यक्षपाठतः । पश्चादवगतेस्तेषां युक्ता
पश्चादनुष्ठितिः, गुणवाक्येपि कीर्त्यमानानां दीक्षणीयादीनां तत्र ताव-
दवगतिर्ज्ञायते, सा च प्रत्यक्षपाठनिमित्ता गुणगुणिनोः समानसंस्थानत्वा-
त्तत्रैव गुणिनामनुष्ठानं गमयतीत्यानुमानिकपाठनिमित्तं पूर्वानुष्ठानम-
नादरणीयम् ।

पात्रमाणसंस्काराणां सन्नयति
वैकृतात्पूर्वभावित्वाधिकरणम् ।

**सू० सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥ ११ ॥**

तत्रैव दीक्षणीयायाश्चानन्तरं हस्तप्रतिमोचनाद्याम्नानम्, प्रकृतौ च दीक्षणीयानन्तरं दीक्षितसंस्काराः, तदिह हस्तप्रतिमोचनादि कृत्वा दीक्षितसंस्काराः कार्याः ? विपरीतं वेति तत्र प्रत्यक्षपाठेन दीक्षणीयायाश्चानन्तरं हस्तादिक्रममनुष्ठेय पश्चाद्दीक्षितसंस्कृतिः उच्यते दीक्षा दीक्षितसंस्कारानुपस्थापयति क्रमात् । तेषामुपस्थितानां च नाऽक्रियाहेतुरस्ति न । प्रकृतिवत्क्रमस्थेनानन्तरमुपस्थितान् दीक्षितसंस्कारान् कृत्वा पश्चात्क्रियमाणस्य हस्तप्रतिमोचनादेः पश्चात्पाठोपपत्तौ नावश्यमनन्तरानुष्ठानमनन्तरपाठो ह्यवश्यं पठितव्याऽप्युपपन्नो नानन्तर्यं गमयति सावित्रहोमादेः पश्चादनुष्ठाने पूर्वं न पाठः स्यादिति विशेषः ॥

इति शास्त्रदीपिकायां पञ्चमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

॥ अथ पञ्चमाध्यायस्य तृतीयः पाद आरभ्यते ॥

---

प्रयाजादीनामेकादशा दिसंख्यायाः सर्वप्रयाजा धिकरणम् ।

सू० विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥

“एकादश प्रयाजान् यजति पशुपसद इति प्राकृतानां संख्याविवृद्धिर्विकृतौ श्रूयते, सा किं प्रत्येकं भवति ? उत सर्वसमुदाये ? इति चिन्त्यते तत्रोद्दिश्य प्रयाजादिं संख्या तस्योपदिश्यते । उद्देश्यानां च साहित्यं वि- वक्ष्यते न विवक्षितं तस्मात्प्रतिप्रयाजं पशुपसद च संख्या स्यादिति प्राप्ते उच्यते “प्रयाजादिस्वरूपे हि नेयं संख्या विधीयते । प्रयाजस्यात्मयोगे तु तद्विते सोपदिश्यते । न ह्येकैकस्य समुदितानां वा स्वरूपेण संख्याऽन्वयः सम्भवत्येकस्य पञ्चानां चैकादशत्वासम्भवात्, अतः संख्यान्वयसिद्ध्यै प्रयाजाः स्वप्रयोगं लक्षयन्ति, ते च न लक्षयन्तस्तत्राभिधानात्सहावगता- स्तथैव लक्षयन्ति, संख्या चेयमनेकवृत्तिस्वभावा समस्तलक्षितप्रयोगगताऽपि शक्नोति सर्वेषां प्रयाजानामुपकर्तुम्, अतः सर्वेषामावृत्तिः स्यात् ।

प्रयाजादीनां त्रिरभ्यासमुपमर्दं स्वस्थानावृत्त्यधिकरणम् ।

सू० स्वस्थानात्तु विवृद्धिः स्यात्कृतानुपूर्व्यत्वात् ॥ २ ॥

षडुपसदः इत्यत्र सर्वेषामादितो संख्येत्युक्तम्, अतस्त्रिषूपसत्सु त्रिरभ्यासः, तत्र किं दण्डकलितवदावृत्तिः? उत स्वस्थानविवृद्धिरिति चिन्तायाम् आवृत्तिन्यायानां लोके त्रिरनुवाकः पठ्यतामित्यादौ दण्डकलितवदावृत्तिदर्शनादिहापि तथा स्यात्, अतः सर्वाः सकृत्कृत्वा पुनः स्यादावृत्तिः क्रिया । स्वस्थानात्तु विवृद्धिरेव, क्रमबाधोऽन्यथा भवेत् तृतीयां कृत्वा प्रथमां क्रियमाणायां प्राकृतक्रमबाधः स्यात्, अतस्तदबाधाय स्वे स्वे स्थाने द्विर्द्विरभ्यसितव्याः ॥

सामिधेनीषु आगन्तुकानामन्ते निवेशाधिकरणम् ।

सू० समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ३ ॥

एकविंशतिमनुब्रूयादिति सामिधेनीविवृद्धिश्रुतावागमे कर्तव्ये सति आगम्यमानानामृचां देशश्चिन्त्यते, किमन्ते निवेशः? अथवा समिध्यमानवतीं समिद्धवतीं चान्तरा? उत धाय्याशब्दोक्तास्तासामध्ये अन्यास्तु आगन्तवोऽन्ते इति तत्रान्ते शब्दरूपक इति न्यायात्सर्वासां प्राकृतीनामन्ते स्युरित्युपक्रममात्रेण प्रथमः पक्षः, एवं ते समिध्यमानवती यसौ समिद्धवती तदन्तरा तद्धाय्या इति धाय्यानामाकाशत्वेन स्तवनं द्यावापृथिवीसंस्तुतयोः समिध्यमानसमिद्धवत्योर्मध्ये तासां विधानमनुमापयति सर्वास्वागन्तवोऽधीयमानतया धाय्या इति सर्वासामन्तर्मध्ये निवेश इति द्वितीयः पक्षः । सिद्धान्तस्तु न धीयमानमात्रवचनो धाय्याशब्दः स्तुतशस्त्रार्थतया धीयमानास्वपि तच्छब्दाभावात्, अतो यत्रैव धाय्याशब्दप्रयोगो वेदे दृष्टः पृथुपाजवत्यौ धाय्ये इत्यादिस्ता एव धाय्या न त्वागन्तुकमात्रं, अतस्तासामेव तन्मध्ये अन्यासां त्वागन्तूनामन्त एव निवेशः एव च वैधातथ्यायां यथाप्यागेध्वकायां यत्नेवैतिशत्त्रिनेत्येतस्यास्त्रिष्टुभोऽन्ते

निवेशात् त्रिष्टुभा परिदधातीत्यादिदर्शनमुपपन्नं भवति, तस्मात् धाय्यादिकानामन्त एव निवेशः ।

बहिष्पवमाने आगन्तूनां पर्यासात्प्राक्त्वाधिकरणम् ।

सू० स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ४ ॥

ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचास्तेषु तृतीयोऽनुष्टुप्पर्यासस्तत्र विवृद्धस्तोमकेषु क्रतुषु पर्यासस्यागमेन संख्यापूरणं क्रियते तत्रागम्यमानानामृचामन्ते निवेशः प्राप्तः प्राक्तनात् पर्यासात् ? इति संशयः तत्र प्रत्यक्षपाठेन द्वादशाहे दृश्यमानां प्राक्पर्यासाद्विनिविष्टत्वादन्यत्राप्यनुमीयते । द्वादशाहे पाष्ठिके द्वितीयेऽहनि त्रिवृत्स्तोमके प्रकृतौ स्तोत्रीयानुष्टुपौ पठित्वा तत आगन्तवोऽनुष्टुभस्य ऋचः पठिताः ततः पश्चात्प्राकृतः पर्यासः पठितः, तदनेन पाठेन प्राक्पर्यासादागन्तूनां निवेशदर्शनात् अन्यत्रापि सर्वत्र सर्वेषामागन्तूनां तत्रैव निवेश इति सामान्यतो दृष्टमात्रेण पूर्वपक्षमतिभाः पर्यास-शब्दश्चान्तवचनो लोके वेदे च प्रसिद्धः तेन पर्यासेनान्तोपयोग इत्येवमादि तत्रागन्तवोऽन्ते स्युः पर्यासमाख्यायाः प्राकृतस्य तृचस्य बाधेन यतोऽपि प्राक्पर्यासान्निवेशः, उच्यते नेदृशेनानुमानेन शास्त्रार्थोऽध्यवसीयते । समाख्या प्रकृतावेव चरितार्थेति साध्यते । अन्ते निवेशमागन्तोर्न्यायप्राप्तं न बाधते द्वादशाहविकारेऽपि केवलानां दृश्यमानां प्राक्पर्यासान्निवेशः स्यादतिदेशविरोधेनात् ॥ अन्ये त्वागन्तवोऽन्ते स्युर्द्वादशाहपदर्शनात् ॥

सर्वेषामागन्तूनां सामसु अन्ते निवेशाधिकरणम् ।

सू० अन्ते तूत्तरयोर्दध्यात् ॥ ५ ॥

त्रिवृत्स्तोमकेष्वेव क्रतुषु तयोर्माध्यन्दिनार्भवपवमानयोः समामनो दृश्यते तत्रागम्यमानानां साम्नां क्रियमाणे तृचे निवेशोऽयञ्च गायत्री बृहत्यनुष्टुप्स्विति तत्रागन्तुत्वादन्ते निवेशः । यत्तु "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् चात्र ह्येवावपन्त्यत एवोद्वपन्तीति तत्त्ववि-

धिष्ण्यस्थाद्ययाक्रयं चिन्त्येयमिति न अपूर्वत्वात्तु वचनमेवेदमनारभ्याधीतं सर्वयज्ञविषयमतो गायत्र्यादिष्वेव निवेशः । अथवा नैवात्र विचारः पूर्वोक्त-वहिष्पवमानवदुदाहरणमात्रमिदं वहिष्पवमान एवान्ते निवेशः उत्तरयोस्तु गायत्र्यादिष्वेव निवेशो वचनादिति ॥

ग्रहेष्टकादीनां क्रत्वनियमे पक्षाऽधिकरणम् ।

**सू॰ ग्रहेष्टकमौपानुवाक्यं सवनचिति-शेषः स्यात् ॥ ६ ॥**

'अंशुं गृह्णाति अदाभ्यं गृह्णाति विश्चिणीरुपदधाति वज्रिणीरुप-दधाती'त्यनारभ्याधीतं ग्रहेष्टकं किं सवनचितिशेषः, अतश्च प्रतिसवनं प्रतिचिति चावर्तनीय? उत यागाङ्गं सकृदेव कर्त्तव्यमिति सन्देहे ग्रहै-रिष्टकाभिश्च सवनानां चितीनां चारम्भदर्शनात् तादर्थ्यं मन्यते पूर्वपक्ष-वादी न निष्फलत्वात्सवनचितीनां फलवज्ज्योतिष्टोमाङ्गत्वं ग्रहाणामि-ष्टकादीनाञ्च फलवदङ्गत्वं युक्तम् । इष्टकाभिरग्निं चिनुत इति वाक्य-निरूपिताग्न्यङ्गत्वम् ॥

चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् ।

**सू॰ अन्ते स्युरव्यवायात् ॥ ७ ॥**

स्थिते सकृदनुष्ठाने क्रमश्चिन्त्यते—किं चित्रिण्यादीनामुत्तमाया-मुपधानम्? उत मध्यमायाम्? इति "क्लृप्तक्रमाव्यवायार्थमन्तेऽनारभ्यचोदि-ता। यां कामयेतेति वाक्यन्तु विधये न भवत्यलं सर्वासामिष्टकानां पठितेन क्लृप्तेन वा ब्राह्मणेन तद्वत्त्वात्सर्वासां च मध्यमायामुपधानासम्भवात् यासां मध्यमायामुपधानं प्राप्तं तदनुवादमात्रमिदं यां कामयेत ब्राह्म-णवतीमिष्टकामभिज्ञानीयात्तां मध्यमायां चितौ"इति न तु विधायकम्, अतः क्लृप्तक्रमाणां प्राकरणिकीनामव्यवायार्थमनारभ्याधीतानामुत्तमायां निवेश—उच्यते' वचनान्मध्यमायामप्युपधानप्राप्तेश्चोदिता । ज्ञानातिरथि-पूर्वोऽयं सन्धि वर्तते यतः ॥ वाक्यं चार्थवदेव स्याद्वादमात्रं त्वनर्थकं चित्रि-ण्यादेर्निवेशोऽतो मध्यमायां चितौ भवेत् ॥

लोकम्पृणायाः पूर्वे चित्रि-ण्याद्युपधानाधिकरणम् ।

**सू॰ प्राग्लोकम्पृणायास्तस्याः सम्पूर-णार्थत्वात् ॥ ८ ॥**

स्विन मध्यमायां निवेशः इति, तत्रापि किं प्राकरणिकानामन्ते चित्रिण्यादीनां निवेशः ? । अथवा लोकम्पृणाया प्राग् ? इति तत्राऽऽवापार्थ-मन्ते स्वलोकम्पृणायास्तु यद्देवास्येन यच्छिद्रं तदेतया पूरयति लोकम्पृणा छिद्रं पृणेहि इत्यृग्वाचार्थत्वं तच्चित्यन्तरेऽपि सावकाशं न हि सा मध्यमायामवैरूपया मन्त्रमात्रस्य प्रत्यवविधानादिष्टकायास्तु कल्प्यं विधानम-तश्चित्यन्तरेऽपि सावकाशत्वेन न न्यायप्राप्तः चित्रिण्यादीनामन्ते निवेशः शक्यते बाधितुमित्यन्ते निवेशः, नैवं चित्रिण्युपमस्य वचनस्य सावकाश-त्वेन न्यायमात्रेण सङ्कोचासम्भवात् मध्यमायामपि चितावन्ते लोकम्पृणा भवेत् पूरणार्थेति तस्याः प्राक् चित्रिण्यादीनां निवेशनम् ॥

इष्टिसंस्कृतानामग्निहो-त्राद्यनुष्ठानाधिकरणम् ।

सू० संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ ९ ॥

आधानप्रकरणे पवमानहवींषि विहितानि तानि चाग्न्याधानाद्विप्रकृष्यन्ते द्वादशसु रात्रिष्वनुनिर्वपेदित्यादिभिस्तत्राग्निहोत्रादीनि किमाधानानन्तरमेव प्रवर्तन्ते ? उत तेषु कृतेष्विति विचारे कर्तव्यानाहवनीयस्य निष्पन्नत्वादाधानमात्रस्य तन्निरपेक्षस्य तदुत्पादकत्वात् पवमानहविर्भिस्तु निष्पन्नस्यैवाहवनीयस्य संस्कारमात्रं क्रियते पूर्वमेव त्वाहवनीयादयो निष्पन्ना निष्पन्नेषु तेषु अग्निसंस्कारकर्मभिरिति प्राप्ते उच्यते न निरपेक्षमाधानमग्नीनामुत्पादकं पवमानहविषामपि तदुत्पादकत्वात्, न च विकल्पस्तेषामाधानोत्तरकाले विधानात्, अतः समुच्चितानां तदुत्पादकत्वान्न तेभ्यः प्रागाहवनीयनिर्वृत्तिः, यदाऽप्याधानाद् पवमानहवींषि तदाऽप्यनङ्गेन प्रधानेन साध्याग्निनिष्पत्तेरुत्तरकालमेवाग्निनिष्पत्तिः । यत्तूक्तं निष्पन्नस्यैवाग्नेः संस्कारमात्रं हविर्भिरिति तथाऽप्यसंस्कृतस्याहवनीयकार्यायोग्यत्वात्तेन विना निष्पन्नस्याप्यग्नेरग्निहोत्रादिकार्यासमर्थत्वात् तदुत्तरकाल एव कर्मणां प्रवृत्तिः ॥

अग्निचिद्वर्ज्यादिव्रतानां कर्मानुष्ठानाधिकरणम् ।

सू० सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ १० ॥

अग्निचिद्व्रतानि "वर्षति न धावे"दित्यादीनि चयनानन्तरमेव भवन्ति? क्रत्वन्ते वेति संशये "धात्वर्थश्चयनं भूतं निमित्तं तदनन्तरम्। व्रतान्यतः प्रवर्त्तेरन्नाहिताग्नितादिवत्। नैवम्भावनाया निमित्तत्वं धातुस्तदुपसर्जनम्। तस्याश्च फलनिर्वृत्त्या निर्वृत्तिरुपलक्ष्यते। न ह्यत्र चयनस्य स्वरूपनिर्वृत्तिर्निमित्तं तत्करणिका त्वग्निकर्मिका भावना भूता निमित्तं तस्याश्चाग्न्युपकारो भाव्यः, सोऽपि च क्रतुं साधयतोऽग्नेर्धारणं, तच्चा क्रतुसमाप्तेर्विततं न ततः प्राग् निर्वृत्तं भवति तन्निर्वृत्त्या च विना न भावनानिर्वृत्तिः फलापवर्गित्वाद्भावनानामाधानस्य त्वग्निरदृष्टं भाव्यं, तच्चानन्तरमेव निर्वृत्तमिति विशेषः ॥

दीक्षाया इष्टिसिद्धताधिकरणम् ।

सू० परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसम्बन्धात् ॥ ११ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इतीष्टिः दण्डेन दीक्षयतीत्यादि च श्रूयते तत्र किं सर्वैर्दीक्षितो भवत्युतेष्ट्यैव? दण्डादीनि तु तदभिव्यञ्जनानीति सर्वेषां तादर्थ्यावगमाददृष्टार्थता चैकप्रयोगविधिसम्बन्धात्समुच्चयसिद्धेः सर्वान्ते दीक्षितत्वम् इति प्राप्तेऽभिधीयते "निर्वपे"दित्येव च ह्यनेन दीक्षार्थेष्टिर्विधीयते। दण्डादि स्वक्रियारूपं तदभिव्यञ्जनतयोच्यते। दीक्षिष्यमाण इति लृट् क्रियार्थायां क्रियायामुपपदे विधीयते तेन दीक्षार्थत्वमिष्टेर्दीक्षा च क्रत्वङ्गभूतयमनियमसमूहस्तं करिष्यमाणस्य पुरुषस्य दीक्षिष्यमाणशब्दनिर्दिष्टस्य संस्कारार्थेष्टिः, सा च निर्वपेदित्यवगम्यते तद्धि दण्डादिष्वश्रवणमन्यथा नोपपद्यते ततो नैरपेक्ष्यं बाध्येत तत्तु व्यञ्जनतयाऽप्युपपन्नं न निर्वपेच्छ्रुतिं बाधितुं क्षमते। किञ्च दण्डादीनि द्रव्यरूपाणि नोदासीनानि संस्कारं जनयन्ति, न चैषामाश्रयभूतेतिकर्तव्यताभूता वा काचित् क्रिया श्रूयतेऽतः कथं दण्डादिभिः संस्कारो जन्यते इति न ज्ञायते, अभिव्यक्तिस्तु दृष्टत्वात्समागान्तरदृष्टसंयोगादिधर्मेणैव शक्यते सम्पादयितुं तस्मादिष्ट्यन्त एव दीक्षितस्याभिव्यञ्जनमात्रार्था दण्डादय इतीष्ट्यन्त एव दीक्षितधर्माः प्रवर्त्तेरन् ॥

सर्वेषामेकानेकस्तोमकानाम ग्निष्टोमपूर्वकत्वाधिकरणम् । सू० एकस्तोमे वा क्रतुसंयोगात् ॥१५॥

पूर्वोक्तपेणेदमारभ्यते—न सर्वनिर्देशः किं त्वेकस्तोमानां त्रिवृदग्निष्टोम' पञ्चदश उक्थ्य सप्तदश उक्थ्यः एकविंशः षोडशीत्यादीनामेव, कुतः वाक्यशेषात् यो वै त्रिवृदन्य यज्ञक्रतुमापद्यते इत्यारभ्याविशेषश्रवणं वाक्यशेषेण विशेषे स्थाप्यते न त्वेवमन्य—शब्देन ह्यविशेषः प्रतीयते, वाक्यशेषस्तु संयोगमात्रेणैवोपपद्यते, "यो वै त्रिवृदन्य यज्ञक्रतुमापद्यते स तं दीपयती"ति विनापि व्याप्त्या संयोगमात्रेण त्रिवृदादीनामेकस्तोमकेष्वपि दीपकत्वं सम्भवतीत्यविशेषात्सर्वेषाद इति स्थितम् ॥

इति शास्त्रदीपिकायां पञ्चमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## ॥ अथ पञ्चमाध्यायस्य चतुर्थः पाद आरभ्यते ॥

पाठक्रमापेक्षया श्रुत्यर्थ योर्बलवत्त्वाधिकरणम् । सू० क्रमको योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

किं श्रुत्यर्थाभ्यां तुल्यबलं पाठ? उत दुर्बल? इति चिन्त्यते? तत्राश्विनो दशमो गृह्यते इति श्रुत किमाश्विनस्य पाठक्रमात् ?तृतीयस्थाने ग्रहणं? मुत श्रुतिबलाद्दशम? इति तथाऽग्निहोत्रं जुहोति यवागूं पचतीति किं पाठवशाद् हुत्वा पक्तव्यमुतार्थवशाद्विपर्यय? इति सामान्यविशेषादनियम मन्वानस्योक्तिः "क्रमे श्रुत्यैव विहिते पाठतः कोऽनुकल्पयेत् । प्रयोजनविरोधे वा कः पाठमनुरुध्यते । हुत्वा हि पवमानस्य भवेद् द्रव्यमनर्थकम् । प.करणेन यवागूश्च तां पक्त्वा जुहुयादतः ॥

मुख्यक्रमेणाग्नेयस्य पूर्वम वदानाद्यनुष्ठानाधिकरणम् । सू० अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥

दर्शपूर्णमासयोः साचाय्यधर्मा' पूर्वं प्रवर्तन्ते पश्चादाग्नेयधर्मा. प्रदान त्वाग्नेयस्य प्रथम पश्चात्सं चाय्य, तत्र किमुभयत्रदान प्रयाज-

---

(१) न सर्वातिदेश इति पा

मस्तीति तस्याप्युत्कर्षः कृत्स्नोत्कर्षात्सोमपूर्वत्वमेव विप्रस्य क्षत्रियवैश्य-
योरिव फलकल्पद्वयमिति पूर्वः पक्षः, अत्र सिद्धान्त्येकदेश्याह कर्मान्तरमिदं
पौर्णमासीधर्मकं तन्नामकं वा विधीयते, एवं धात्वर्थविधिर्भवति, अस्तु-
तस्य चोत्कर्षः कल्पितो न भवति, न त्वेतत्कर्मान्तरं विशिष्टविधिगौर-
वापत्तेरनेकार्थकल्पना धर्मलक्षणा वाऽयुक्ता, प्रकरणात्तु पौर्णमास्या
एवायं कालविधिस्तत्संयोगात् दर्शस्यापि तदुत्कर्षे एव इत्येवमपर्यवसि-
तेऽधिकरणेऽनन्तरोक्तोपजीवनेन पूर्वपक्षं वक्तुं चिन्तान्तरं क्रियते, सोमेन
यक्ष्यमाणोऽग्निमादधीत नर्तुं पृच्छेन्न नक्षत्रमिति किमयमृतुनक्षत्रातिक्रम
आधानस्य ? उत सोमस्ये ? ति प्रकरणादाधानस्येति प्राप्ते वचनान्तरेणास्या-
मेव शाखायां यदहर्वैनमित्यादिना आधानकालानादरस्योक्तत्वात्सोम-
काल एवायं, यद्यपि शतपथेऽपहतपाप्मानो वा ऋतवोऽसौ खलु वाव आ-
दित्य उद्यन्नेषां पाप्मानमपहन्ति तस्माद्यदा चैनं श्रद्धा चोपनमेत् अथा-
दधीतायजेतेत्युक्तं तथाऽप्यस्यां शाखायामविहित इति तत्पर एवायं
सोमेनाधानानन्तरं यक्ष्यमाण आदधीत तथा कुर्वंस्तु सोमस्तु नक्षत्रं च
सपदादिकं नाद्रियेत इति स्थितादुत्तरं न कृत्स्नोत्कर्षः पौर्णमासीमात्र-
श्रवणात्, यत्तु नैकदेशात् फलमिति समुदायादेव मिलितात्फलमित्यत्रोक्तः
तस्मात्कृत्स्नोत्कर्षाभावात् ब्राह्मणस्याप्युभौ कल्पौ। सिद्धान्तस्तु एकयोग
एतत्कृत्स्नोत्कर्षो विप्रस्यापि द्वौ कल्पाविति। यत्तु पौर्णमास्युत्कर्ष इति
तत्र ब्रूमहे, न सकलपौर्णमास्युत्कर्षः किन्तु यदः—यच्छब्दपरामृष्टमग्नीषो-
मीयमेव हि हविरुत्कृष्यते अन्यत्तु यथाप्राप्तमवस्थितं तन्मात्ररहितत्वेन
विप्रस्यापि पुरा भवेत्। तेन तस्याप्युभावेव कल्पौ क्षत्रियवैश्यवत्।

• आज्यस्य सोमादनुत्कर्षाधिकरणम्।

सू० पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ ५ ॥

स्थितमग्नीषोमीयस्योत्कर्ष इति स किं पुरोडाशस्य ? उताज्यस्या-
पी ? ति चिन्तायां "तत्राग्नीषोमभिसम्बन्धादाज्यस्यापीति मन्यते। विष्णुप्र-
जापतिभ्यां तु सोमात्प्रागपि तद्भवेत्, यद्यप्यग्नीषोमौ प्रष्टुमर्हौ यजमा-

तस्याऽपि नान्यमुत्कर्षमर्हति, स हि प्रागपि विष्णुं प्रजापतिं वा यक्ष्यति तस्मान्नास्योत्कर्षः ॥

विकृतावामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् ।

**सू० विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ ६ ॥**

विकृतयो द्व्यहकालाः ? सद्यस्काला वा ? इति संशये प्रकृतिवद् द्व्यहकालाः न च वचनविरोधः प्रकृताविव, प्रकृतौ हि "पौर्णमास्यां पौर्णमास्या यजेतेति श्रावणिकं कालं वचनान्तरवशादेकदेशेन योजयित्वा द्व्यहकालत्वमेवाश्रितं, तथा विकृतावपि य इष्ट्या पशुनेत्यादिविहितकालैकदेश एव स्यात् द्व्यहकालस्य प्रकृतितः प्राप्तत्वात्, वचनं त्विदं व्यवस्थानिवृत्त्यर्थं प्रकृतितो हि पौर्णमासीविकाराणाममावास्याविकाराणां च प्रकृत्येव कालव्यवस्थायां प्राप्तायामव्यवस्थार्थं य इष्ट्या पशुनेत्यादिवचनं सम्भवति च द्वयोरपि प्रकृतिविकृत्योर्द्व्यहकालत्वमेकस्यां चतुर्दश्यामुपक्रमसम्भवादतो द्व्यहकालाः, उच्यते "न प्रत्यक्षश्रुतः कालः सङ्कोचं चोदकाद् व्रजेत् । सद्योयुक्ता विकृतिः पञ्चदश्यामतो भवेत् ॥

सोमात्सान्नाय्याग्नीषोमीयोत्कर्षाधिकरणम् ।

**सू० सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत् ॥ ७ ॥**

"नासोमयाजी सन्नयेदाग्नेयो वै ब्राह्मणः"इति वचनाभ्यां सान्नाय्याग्नीषोमीययोः सोमोत्तरकालत्व तद्विकाराणामप्यतिदेशात् तथात्वमिति सूत्रद्वयोद्दिष्टत्वात् ॥

सोमविकाराणां दर्शपूर्णमासात्पूर्वं कर्तव्यताधिकरणम् ।

**सू० तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ ८ ॥**

इष्टिपूर्वत्वं सोमपूर्वत्वं चोभयमस्तीत्युक्तम्, अतः प्रकृतिवत्सोमविकाराणामपीष्टेः प्रागूर्ध्वं च प्रसङ्गे प्राप्ते, न त्वेवं, न हीष्टेः प्रागनुष्ठानं सोमस्याहत्य चोदितम् । आधानानन्तरीयतया तु सत्त्वात् प्राक्तनमर्थत आधानानन्तरत्वं च विकृतीनां न सिद्ध्यति । ज्योतिष्टोमादूर्ध्वकालत्वात् द्वयोरपि तदसम्भवात् । एष वाव प्रथमो यज्ञानामित्यनेन वचनेन ज्योति-

ष्टोमानन्तरकालत्वाद्विकृतीनां नाधानानन्तर्यं सम्भवति, एकरवायमनन्तरकालो न द्वाभ्यां प्रकृतिविकृतिभ्यामवरोद्धुं शक्यः, प्रत्यक्षवचनात्तु प्रकृत्या संगृहीत इति न विकृतेः सम्भवति तदसम्भवाच्च न विकृतयः प्राग्भावमिच्छेलभन्ते, न चाहत्यप्रकृतावेिष्टेः प्राकृत्वमुक्तं यदतिदिश्येत इष्टयुत्तरकालत्वं तु साक्षादुक्तं प्रकृताविति तदेव विकृतिष्वतिदिश्यते। अतः सोमविकाराणां दर्शादेः परतः क्रिया। एवं निरूपिता सम्यक् पञ्चमाध्याक्रमस्थितिः॥

इति श्रीमहामहोपाध्यायश्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां पञ्चमोऽध्यायः समाप्तः॥ ५॥

---

## अथ षष्ठोऽध्याय आरभ्यते॥

---

अधिकारन्यायः, यागादिक्रियायां स्वर्गफलसाधनताऽधिकरणम्।

**सू० द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः॥ १॥**

"भेदादिलक्षणैरेवमनुष्ठेये निरूपिते।
कोऽनेनाधिक्रियेतेति साम्प्रतं सम्प्रधार्यते॥
तद्रूपोद्वारकृपेण ताऽ[1]चदेतद्विचार्यते।
कर्मभिः पुरुषः कर्ता किमधिक्रियते न वा"॥

सत्यधिकारे कस्य कुत्राधिकार इति चिन्तयितुं लक्षणमारब्धव्यमिति तत्सिद्ध्यर्थमधिकारसद्भावः प्रथमं प्रतिपाद्यते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "चित्रया यजेत पशुकाम" इत्यादिषु किं पुरुषस्याधिकारः स्वाम्यं कर्मजन्यफलभोक्तृत्वमस्ति न वे? ति चिन्त्यते तदर्थमिदं विचार्यते—येयं प्रत्ययोपात्ता भावना तस्यां किं धात्वर्थ एव भाव्यः प्रधानं स्वर्गादि तु साधनतया गुणभूतम्?। उत काम्यमानत्वेनोपात्तः स्वर्गादिरेव भाव्यस्तत्साधनं च धात्वर्थः? इति ततोऽप्येतद्विवेक्तव्यं योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः सम्बन्धस्तत्र किं क्रिया प्रधानतः पुरुषो गुणतस्ततो विपरीतं वेति, यदि गुणतः पुरुषस्तस्य गुणभाव क्रियातेर्पासद्रुमनूद्य स्वर्गादिद्रव्यं साधनत्वेन विधीयते काम

---

(१) स्वादयेतद्विचार्यते इति पा-।

यतिश्च साधनकामनानुवादः, तदयमर्थः स्वर्गं साधनत्वेन कामयमानो यजेत–स्वर्गेण यागं कुर्यादित्यर्थः । यद्वा स्वर्गकामनैव समुद्रमनोध्यानवत् गुणभूतकर्तृविशेषणं सती यागाङ्गमुपदिश्यत इति द्वे[1]धा पूर्वः पक्षः । अथ प्रधानत्वे पुरुषस्तस्यात्मार्था स्वर्गादिगोचरा प्रवृत्तिः प्रत्ययेन विधीयते साधनतया च याग उपदिश्यते स्वर्गकामो यागेन कुर्यादात्मार्थां प्रवृत्ति-मिति स्वर्गकामस्यात्मार्था प्रवृत्तिः स्वर्गविषयैवेति स्वर्गभावनैवानेन प्रका-रेणोपदिष्टा, तदयमर्थः स्वर्गं [illegible] प्राप्तुमिच्छति स यागेन कुर्यादभिलषित स्वर्गश्च तस्याभिलषित इति स्वर्गं भावयेत यागेनेत्युक्तं भवति, स्वर्ग-कामोदाहरणे तु प्रथमः पूर्वपक्षोपयिकत्वादिदमपि चिन्त्यते स्वर्गशब्दो द्रव्यवचनः प्रीतिवचनो वेति, प्रीतिवचनत्वे तु तस्याः साधनत्वासम्भवा-दत्यन्तानालम्बनः प्रथमः पूर्वपक्षः स्यादिति तत्र पूर्वः पक्षः ।

धात्वर्थस्यैव भाव्यत्वं यद्युक्त्या प्रतीयते ।
स्वर्गादेः खलु वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥
भूतं च स्वर्गपश्वादि द्रव्यं भाव्याय कर्मणे ।
उपदेश्यं न भूताय भा[2]व्यकर्मोपदेशनम् ॥

स्वर्गशब्दश्चन्दनादिषु प्रयोगाद् द्रव्यवचन इति न साधनत्वा-सम्भवः पश्वादेस्त्वसन्दिग्धमेव द्रव्यवचनत्वम् । अथवा स्वर्गादिकामनैव यागाङ्गमिति सर्वथा याग एव भाव्यो न तेनान्यत्फलमस्ति च फलेऽधि-काराभावादनारम्भणीयमधिकारलक्षणम् । न चैवमफले कर्मणि कः प्रव-र्तेत, मा प्रवर्तिष्ट किं न छिन्नं, नैतावता शक्यं फलमुपगन्तुम् अफलस्य च कर्मणो धर्मत्वं [illegible] भवतीत्येतदपि भवतु तथा च 'चोदनालक्षणो-ऽर्थो धर्मः' इत्येतदपि प्रत्यु[3]द्धृतं स्यादित्येतदपि सत्यं तदधीनं च सकलं शास्त्रमिति सकलशास्त्रविषयोऽयमधिकरणमारब्धं विधिरपि पुरुषं प्रवर्त-यति न तु फलवत्तां गमयति, न च प्रवर्तितोऽपि कश्चिदफले प्रवर्तत इति व्यर्थ एव विधिरिति प्राप्तेऽभिधीयते ।

(१) त्रेधेत्य पा० ।
(२) भव्यकर्मोपदेशनमिति पा० ।
(३) प्रत्युक्तं स्यादिति पा० ।

"यद्दृष्टुनेर्वैलीयस्या विधिश्रुत्या हि भावना ।
चवरुद्धा न यागादिभाव्यमालम्बितुं क्षमा ॥
स्वर्गादिः कामनायोगात्फलत्वेनैव गम्यते ।
स्वारस्यात्पुरुषाणां हि कामना फलगोचरा ॥"

लिङादयो विधिं भावनां चाभिदधति तेन प्रकृत्युपात्तयागसम्बन्धात्पूर्वमेव विधिसम्बन्धो भावनायाः प्रतीयते प्रवर्तनारूपस्य विधेः, प्रवृत्तिरूपस्य[1] व्यापारः प्रवर्तना तद्योगिता चापुरुषार्थभाव्यायां भावनायां न सम्भवतीति यागातिक्रमेण पुरुषार्थस्यैव भाव्यत्वं विधिश्रुतिबलादध्यवसीयते कश्च पुनरसौ प्रवर्तनारूपो व्यापारः? शब्दस्येति ब्रूमः तस्य सन्निहितत्वादन्यस्य चाप्रतीतेः, यद्यपि चास्याचेतनत्वादाज्ञादिव्यापारासम्भवः तथापि योऽस्य व्यापारः सम्भवति तस्यैव यथा प्रवर्तनारूपत्वं सम्पद्यते तथा यतितव्यम् अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः, तत्र यदि भाव्यांशे पुरुषार्थं उपनीयते ततस्तत्प्रतिपादनं प्रवृत्तिहेतुर्भवति नान्यथा तेन शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं सम्पादयितुं तद्विषयभूताया भावनायाः पुरुषार्थभाव्यत्वं निश्चीयते स्वर्गादिश्च कामनायोगात् भाव्यतया गम्यते, भाव्यविषया हि मुख्यरूपेण कामना साधनेषु तु तत्सम्बन्धनिमित्ता गौणी, न चात्र गौणार्थत्वे प्रमाणमस्ति, तस्माद्विधिश्रुतेः कामनायोगाच्च स्वर्गपश्वादीनामेव भाव्यत्वं, यागश्च तत्र साधनं भौतिवचनः स्वर्गशब्दस्तामनभिधाय तद्विशिष्टद्रव्याभिधानासम्भवात् द्रव्यस्वरूपमात्रेणा[2] प्रयोगादतः स्वर्गादिकामस्य पुरुषस्य तद्भावना यागादिविशिष्टा विधीयते, यद्यपि च स्व कामस्यार्थान्तरविषयापि प्रवृत्तिः शेषत्वेन सम्भवति तथापि पुरुषान्तरशेषत्वस्यापि सम्भवात्स्वर्गकामस्य कदाचित्फलान्तरमनिच्छतस्तच्छेषित्वासम्भवाच स्वर्गकामार्थप्रवृत्तित्वेन निर्दिश्यते, यैव हि स्वर्गकामेषु शेषत्वेनानुस्यूता पुरुषान्तरेभ्यश्च व्यावृत्ता स्वर्गार्था प्रवृत्तिः सैव स्वर्गकामप्रवृत्तिरित्येवं विशेषणं

१ प्रवृत्तिहेतुश्च इति पा० ।
२ द्रव्यस्वरूपमात्रे चाप्रयोगादिति पा० ।

सहते, अत स्वर्गकामार्थश्रुत्युपदेशात्तत्साधनत्वेनैव विहितो यागः स्वर्गसाधनत्वेनैव विहितो भवति फलसाधने च कर्मणि फलभागिनः पुरुषस्य सिद्धोऽधिकार इति लक्षणमाख्येयम् ॥

यागादिषु मनुष्यस्यैवाधिकाराधिकरणम् ।

**सू॰ फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ २ ॥**

सिद्धेऽधिकारे स किमनुष्ठानसमर्थानामसमर्थानाम अन्धबधिरपङ्गुमूकादीनां तिरश्चामपि ? किं वा समर्थानां मनुष्याणामेवे ? ति संशयः, तत्र यदि यथाधिकारमङ्गविनियोगस्तत सर्वेषामपि, अथ यथाविनियोगमधिकारस्तदा समस्तानुष्ठानसमर्थानामेवेति "तत्र प्रधानवाक्येन सर्वेषामधिकारधीर्जायते । तद्विरोधेनाङ्गवाक्यानामुपवर्णनम्, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति प्रधानवाक्येन सर्वेषां स्वर्गकामानामधिकारे अवगते तदनुसारीणि चाङ्गवाक्यानि न तत्सङ्कोचायालम्, अतश्चक्षुष्मतामन्धानां चाज्यावेक्षणविधिरचक्षुष्मतस्तु विध्यभावात्तद्रहितमेव फलसाधनम्, एवं बधिरस्य वा श्रवणहीनस्य मूकस्य मन्त्रोच्चारणरहितं पङ्गोश्च विष्णुक्रमरहितमिति सर्वसामर्थ्यिनामशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकारः, स्यादेवमर्थिनां, तिरश्चां तु साम्परायिकफलकामनाऽभावात्कथमधिकाराशङ्का तेषामपि चतुर्दश्युपवासादिदर्शनादस्त्येवादृष्टार्थितेति मन्यते । अत्रोच्यते 'नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना । यतोऽसमर्थस्तच्छून्यं कर्म कृत्वाऽधिकारभाक् ॥ पुरुषम्प्रति विधीयमानमसमर्थे अन्यविहितत्वादनङ्गमेवेति तद्रहितमेव कर्माविगुणं समग्रं फलं साधयेत् 'क्रतुं प्रति विधिस्तेषां ताद्रूप्यं तस्य शक्नुयात् । कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया न हि त्वदभिमतवदङ्गवाक्यानि पुरुषे सम्बध्यन्ते प्रधानवाक्यशेषत्वात्तेषां, तत्प्रयुक्तेन तु प्रधानवाक्येन तदङ्गेन युक्तं क्रतुं पुरुषे प्रयुज्यमानोऽसमर्थानपहाय समर्थान् प्रति विज्ञा[१]प्यते, अतोऽन्धस्य क्रतुरेव अविहितोऽन स्यादाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यं, न च प्रधानवाक्यविरोधात्सर्वाधि

१ विज्ञाप्यते इति पा० ।

कारनिश्चयः विशेषाभावाद्धि सर्वाधिकारः स्यादस्ति चात्र विशेषोऽङ्गोपसंहारसामर्थ्यम्, अतः समर्थानामेवाधिकारः । यत्र तु प्रधानवाक्यविरोधो यावज्जीवादौ तत्र भवत्येव यथाशक्ति प्रयोगादपि फलमिति वक्ष्यते, तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलं, तिरश्चां तु प्रधानमात्रे ऽप्यसामर्थ्यान्न क्वचिदधिकारः, ऋषीणां त्वनादौ संसारे पूर्वपूर्वभृग्वादिवरणसम्भवात् अस्त्येवाधिकार इति, अप्युदाहरणमनादेयं, देवतानां त्वात्मोद्देशेन त्यागासम्भवाद्विग्रहाभावाच्चाशक्तेरनधिकारः ॥

यागादिषु स्त्रीपुंसयोरुभयोरधिकाराधिकरणम् ।

सू० लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ३ ॥

इदानीं किं पुंस एवाधिकारः? उत स्त्रिया अपी?ति संशयः, "तत्र पुंल्लिङ्गनिर्देशात्पुंस एवाधिकारिता । प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम्" विभक्त्यर्थस्य हि संख्याया ग्रहाधिकरणे ऽविवक्षितत्वमुक्तं, लिङ्गं तु प्रातिपदिकार्थः ग्रहवत् विवक्षितम्" अद्रव्योऽपि फलकामो विवक्षितलिङ्गः पुमानेव स्यात् अद्रव्यत्वाच्च स्त्रिया द्रव्यत्यागात्मकयागानुष्ठानासम्भवादननुष्ठाने चाधिकारासम्भवादनधिकारः, तथा भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः इति स्मरणादतः पुंस एवाधिकारः, उच्यते "प्रकृत्यर्थो ऽपि सत्येसदुद्देश्यस्य विशेषणं संख्यया तुल्यनीतित्वाच्च विवक्षां प्रपद्यते" ग्रहस्योद्देश्यत्वाद्धि विवक्षितो न प्रातिपदिकार्थत्वाल्लिङ्गं तु प्रातिपदिकार्थो ऽप्युद्देश्यविशेषणत्वादविवक्षितं वाक्यभेदप्रसङ्गात् अनपेक्षितपरिच्छेदत्वाच्चोद्दिश्यमानस्य, न चायं प्रातिपदिकार्थो विभक्तिविकाराणां टाबादीनां चान्वयव्यतिरेकाभ्यां लिङ्गाभिधायित्वात् अतः संख्यावदविवक्षितमिति स्त्रिया अप्यधिकारः, न चाद्रव्यत्वमस्याः, कर्तनादिभिर्धनसम्भवात्, पित्रादि दत्तसम्भवाच्च दायादिसम्भवात् पुत्राभावे दुहितेत्यादिस्मरणात् पत्याऽर्जितस्य चोभयसाधारणत्वात् "धर्मे चार्थे च कामे च नातिचरितव्या पाणिग्रहणात्तु सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहे चेत्यादिवचनात् ये यज्ञपत्नीं ऋद्धिमित्यादिमन्त्रवर्णेभ्यश्च स्पष्टः

बुद्धिर्भवति तथाऽप्याहत्य स्त्रीणामध्ययनप्रतिषेधादविदुषी स्त्री न शक्ता मन्त्रोच्चारणं कर्तुं न च तदन्यथाऽनुपपत्त्या तस्या अपि विद्वत्ता सम्पादयितुं शक्यते सपत्नविद्येन पुंसा तेषामनुष्ठानसिद्धेरतः पुमानेव कर्ता ॥

यागे शूद्रस्यानधिकाराधिकरणम् ।

सू० चातुर्वर्ण्यमविशेषात् ॥ ७ ॥

किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः ? उतापशूद्राणां त्रयाणाम् ? इति तदर्थमिदं विचार्यते किं कामश्रुतिप्रयुक्तं विद्यार्जनम् ? उत स्वाध्यायविधिसिद्धविद्योपजीवित्वं कामश्रुतेः ? इति द्विधा चात्र पूर्वं पक्ष एकस्तावत्स्वाध्यायाध्ययनं क्रत्वनुष्ठानज्ञानोपयिकतया विहितं क्रत्वङ्गं क्रतुविधिभिरेव प्रयाजादिवत्प्रयुज्यते अतश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाश्चतुर्णामध्ययनं प्रयुञ्जते, तत्र त्रयाणां वसन्ते ब्राह्मणमुपनयीतेत्यादिभिरुपनयनसंस्कारोऽध्ययनाङ्गत्वेन विहितश्चतुर्थेषु विध्यभावादनुपनीत एवाधीत्य विद्वान् लब्ध्वाऽधिक्रियत इति, द्वितीयस्तु न क्रत्वङ्गमध्ययनं श्रुत्याद्यभावादक्षरग्रहणादिदृष्टकार्यपरम्परया वाक्यार्थज्ञानं वा यद्वत ज्ञानस्यानुष्ठानोपयिकत्वेन स्वयमेव फलत्वोपपत्तेस्तत्रैवाध्ययनं स्वविधिना विनियुज्यते । तद्द्वारेण क्रतौ तेनाधानमिवाध्ययनं ज्ञानाङ्गं न क्रत्वङ्गम् अतस्तेन विनापि क्रतूनामवैगुण्यादनधीतवेद एव शूद्र उपकृष्ट वचनादनुसिद्धमधिक्रियते, अतश्चाविशेषेण चतुरोऽप्यधिकुर्वाणास्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनं न प्रयुञ्जते शूद्रस्य त्वन्यतः सिद्धविद्यत्वाभावात्तदर्जनमपि प्रयुञ्जते, यतो यद्यपि स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान्क्रमशो वचनाचार्यसमीपमानीता इत्येव प्रयोजनमपेक्षमाणा ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वंस्तेषामेवाध्ययनं विधत्ते न शूद्रस्य, तथाऽप्यसावविहितेनैवाध्ययनेनोपायान्तरेण वा विद्यां लब्ध्वाऽधिक्रियेतेति 'सत्यमध्ययनं नाङ्गं तत्कृता त्वङ्गमर्थधीः । तद्रुत कतमो लब्ध्वा न तुर्यस्याविपत्ति नाम ॥ क्रतुविधयोऽन्यथाऽनुपपत्त्या विद्यार्जनमाक्षिपन्ति, यदा तु स्वाध्यायविधिविहिताध्ययनोपात्तविद्यान् द्विजन्मनो लभन्ते तदा तैरेव लब्धात्मानोऽनुपपत्तिभयात्

न चतुर्थस्य विद्यामाप्तिपन्ति, यदा चैवं विहितोपायसिद्धज्ञानवत एव विषयोऽधिकुर्वन्ति तदा तदेव ज्ञानमकर्मकालोपात्तमपि अग्निवत्क्रतूना-मङ्गमिति तच्छून्यस्य स्याच्छन्दोन विद्यामर्जयतोऽपि न सिध्यत्यधिकारः, मन्त्रवत्सु च अनधीतवेदस्य कुतोऽधिकारः कुतस्तरां चानर्याग्निसाध्येषु तस्मात्त्रयाणामधिकारः ॥

त्रयाणां निर्धनस्याप्यधिकाराधिकरणम् ।

**सू॰ त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥**

किं त्रयाणामपि मध्ये द्रव्यवत एवाधिकारः? उताद्रव्येऽपि? कर्मार्थेन द्रव्यमर्जयित्वाऽनुतिष्ठत्यधिक्रियत इति संशये पुरुषार्थोपात्त-द्रव्यवतां लाभाचाद्रव्यस्य तदर्जनं क्रतुभिराक्षिप्यते, अतो विदुषामिव द्रव्यवतामधिकारः, नैतत्तुल्यं विद्या हि सत्यत्वविधिसिद्धा त्रयाणामिति तैरेवोपपन्नाः क्रतवो न शूद्रस्य ताविपन्तीति युक्तं, द्रव्यार्जनं तु सर्वपुरुषाणां द्रव्यकार्यैरपाक्षिप्यं तत्राविशेषात् भोजनादिवत्, क्रतूनामपि तदाक्षेपकत्वं न बाध्यते, अतोऽद्रव्योऽपि द्रव्यमर्जयित्वा कुर्यात् ॥

अपि त्वङ्गहीनस्याप्यधिकाराधिकरणम् ।

**सू॰ अङ्गहीनश्च तद्धर्मा ॥ ९ ॥**

अङ्गहीनोऽपि द्रव्यहीनवत्तत्प्रतिसमाधानेन कुर्यात् द्रव्यहानिर्वह्नि-रङ्गमधिकार व्यरांत्सीत् अङ्गहानिस्त्वनारकं विरुणद्धीति विशेषाशङ्का, अथवा द्रव्यहीनवदङ्गहीनस्य सिद्धमेवाधिकारमुत्तरविवक्षयाऽनुवदतीत्य-पौनरुक्त्यम् ॥

अप्रतिसमाधेयाङ्गवैकल्यस्य कामनाधिकाराधिकरणम् ।

**सू॰ उत्पत्तौ नित्यसंयोगात् ॥ १० ॥**

यस्य त्वप्रतिसमाधेयमङ्गवैकल्यं स न कथंचिच्छक्नोति कर्तुमिति न काम्येष्वधिक्रियते, नित्येषु स्वाहिताग्निश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एव ॥

दर्शपूर्णमासयोः आर्षेयस्य वाधिकाराधिकरणम् ।

**सू॰ अत्रार्षेयस्य हानं स्यात् ॥ ११ ॥**

दर्शपूर्णमासयोरार्षेयं वृणीत इति विधाय पुनः श्रुतम् 'एकं वृणीते

उद्देश्यपरत्वादविवक्षितमिति कश्चित् प्रधानभूतामुद्दिश्य गुणत्वेन विधौ प्रमाने कर्म प्रतिप्रधानावृत्तेरेकैकस्य स्वफलं साधयतीति प्रतिभाति तथा ऽप्याख्यातोपात्तस्य कर्तृबहुत्वस्योपात्तनाधिकरणन्यायेन विवक्षितत्वा त्सहत्वकामिभिः कर्तव्यं न चैकस्मिन्कर्मणि बहूनां प्रत्येकं कर्तृत्वं सम्भ वति एकेन कृतेन परस्य कर्तृत्वायोगात् अतः समुदितानां व्यासज्यकर्तृत्व कर्तृगामि च फलम् । अतस्तदपि समुदायस्यैव सदवस्तु समुदायिनः प्राप्नुवन्तीत्यवयवकामानामधिकार इति प्राप्तेऽभिधीयते "समुदायस्य कर्तृत्वं यद्यपि स्यात्तथाऽपि तु प्रत्येकमधिकारित्वात्तस्यैव फलं प्राप्नुयुः ॥ यद्यप्याऽवगम्यते तत्तथैवाङ्गीकर्तव्यम् इह चाधिकारावस्थाया साहित्यस्या विवक्षितत्वात्प्रत्येकमधिकारः प्रतीयते, कर्तृत्वं च सहमानानामत सहत्वप युक्तं कर्म प्रत्येकं फलं साधयतीति स्वीकर्तव्यं, न चैवमन्यस्याकर्तृगा मित्वं नैवेह व्यासज्यवृत्ति कर्तृत्वं प्रत्येकवृत्ति फलमिति प्रकारभेदमात्र कर्तृत्वमपि चैतेषां प्रत्येकमवगम्यते "कर्तृगामि बहुत्वं हि द्रव्याणामन्यथा भवेत् ॥ कर्तृबहुत्वं साक्षादभिधीयते न कर्माश्रयद्रव्यबहुत्वं व्यासज्य वर्तिनि च कर्तृत्वे कर्तृ॥॥ बहुत्वं स्यात् किन्तु द्रव्यमात्रस्य तत्र कर्तृ बहुत्वाभिधानमनवकाशं स्यात्सम्भवति च सर्वदा प्रत्येकं युगपत् कर्तृत्वं पर्याये हि विरोधः स्यात्, एकेन कृते परस्य कर्तृत्वायोगात् न यौगपद्येन तस्मात्प्रत्येकमधिकारिणः ॥

दर्शादौ कर्तृसंख्यानियमाधिकरणम् ।

सू० प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ २ ॥

दर्शपूर्णमासादिषु किमेको द्वौ बहवो वा कर्तारः ? उत एक एवेति संशये, तदर्थं च किमाख्यातोपात्ता कर्तृसङ्ख्या विवक्षिता ? नेति चिन्त्यते "तत्र फलार्थिनं समुद्दिश्य कर्मणामुपदेशनात्। उद्देश्यगामिनी सङ्ख्या यद्वच्च विवक्षिता ॥ यस्मात यद्यपि कामपदगता सङ्ख्या उद्देश्यगतत्वात् गतलिङ्गवत् ग्रहैकत्ववच्चाविवक्षिता तथाऽप्याख्यातोपात्ता सङ्ख्या विधी यमानक्रियाऽऽश्रितगुणभूतकर्तृगामित्वाद्विवक्षितेति तदनन्तरमविधेय

त्वात् क्रियायाः यागेन स्वर्गं प्राप्नुयादित्येतावदुच्यते नानुष्ठानं न[1] त्वर्थं-प्राप्तं, स्वर्गप्राप्तौ च पुंसः प्रधानत्वादविवक्षिता सङ्ख्या, यदि स्वर्गं कुर्यादित्युच्येत तदा अन्यस्यापि स्वर्गः स्यात् न कर्तुः, यद्यपि स्वर्गं कुर्यादित्युच्यते तथाऽप्यविधेयैव क्रिया, यो हि यदिच्छति स तत्करोतीत्येवं फलकामस्य फलविषया क्रिया प्राप्तैव तां प्रत्ययेनानूद्य प्रकृत्यर्थो यागादिः करणं विधीयते, प्रत्ययार्थश्च कर्तृसङ्ख्या तेनासावनुवाद्यगतत्वादविवक्षिता, न ह्येकेन प्रत्ययेन फलकामस्य रागप्राप्तां फलभावनामुद्दिशता कर्तृसङ्ख्या भावनां यागं वा प्रत्युपादातुं शक्यते वैरूप्यप्रसङ्गात् । अथ मतं यद्यपि फलक्रिया प्राप्तैव तथाऽपि यागक्रियाया अप्राप्तत्वेन विधेयत्वात्तद्विशेषणभूता सङ्ख्या विधेयगतत्वाद्विवक्षितेति तदप्ययुक्तं यद्यपि यागानुरक्ता क्रिया न प्राप्ता तथाऽपि क्रियास्वरूपं तावत्प्राप्तमेव तत्र विशिष्टक्रियाविषयोऽपि विधिः श्रूयमाणः प्राप्ताप्राप्तविवेकेन यागानुरागमात्रपरो भवति, न हि फलक्रियातः क्रियान्तरं यागेनानुरज्यते, सा चेत्प्राप्तैव तद्विशेषणं च सङ्ख्या न साक्षाद्यागगता प्रत्ययार्थत्वात् तस्मादविवक्षितेति । अत्राभिधीयते "रागप्राप्ता फलप्राप्तिर्न सा शब्देन चोद्यते । प्रत्ययश्च क्रियावाची न प्राप्तिं प्रतिपादयेत् ॥ प्रतिपद्यविशेषाच्च नाकर्तुः फलसङ्गतिः । विधेश्चैवमतोऽन्यस्य न फलप्राप्तिसम्भवः ॥ स्वर्गादिकाममुद्दिश्य क्रियैवेह विधीयते । यागादियुक्त्या सङ्ख्या च तद्गतत्वाद्विवक्षिता ॥ फलक्रियानियोगेन न हि पुंसां फलार्थिनाम् । रागप्राप्ता यतो नैषा शब्देन तु विधीयते ॥ अर्थिपदेन तावदर्थितामात्रमुच्यते न प्रवृत्तिराख्यातमपि यच्छब्दाद्युपबन्धाभावात् यागादिविशिष्टभावनाविधिपरमेव स्वरसादवगम्यते, ततश्च स्वर्गो मे स्यादित्येवं यः कामयते स तं यागेन भावयेदिति भावनैव सर्वविशेषणविशिष्टा फलोपायत्वेन कामिनो विधीयते, न चावश्यमर्थिनस्तद्विषया प्रवृत्तिः प्राप्ता येन तद्बलात्तत्र उत्तार्थे विधियोगाद्यनुरागमात्रपरत्वेनैव व्यवस्थाप्येत, न च फलकामः प्राग-

---

१ तदर्थप्राप्तमिति पा॰

वचनादिदं जानाति प्रवृत्तस्य मे स्वर्गः सिद्ध्यति न त्वप्रवृत्तस्य दैवात्का-
रणान्तराद्वेति तद्ज्ञानात्स्वर्गप्राप्तिमभिलषंस्तद्विषयप्रवृत्त्यप्रवृत्त्योर्मध्यस्थ
उदास्ते, यदा तु वचनमस्य यागादिविशिष्टं व्यापारं विधत्ते तदा तस्ये-
ष्टितोपायतां विधिप्रामाण्यादवगम्य तत्र प्रवर्तते तस्माद्विधेयैव भावना
यागादिविशिष्टा सङ्ख्या च तद्विशेषणमिति विवक्षितैव, लिङ्गं तु काम-
पदगतमुद्देश्यविशेषणत्वादविवक्षितमिति विशेषः । ये तु स्वर्गकामस्यानु-
ष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते यद्वैवासौ यथैवैतत्कर्तव्यमिति
"स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदा" इत्यादिभाष्यवार्तिकवचनानुग्र-
हणात् भावनाया अविधानमाहुस्तेषामनूद्यमानविशेषणस्याविवक्षितत्वा-
दिदमधिकरणं विरुध्यते, सर्वेष्वप्येषु च क्रियामविधाय गुणमात्रविधानात्
चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येतेत्येवमनेकगुणविधानं क्वचिदपि न
स्यात् ततश्च रेवतीषु वारवन्तीयं कृत्वा पशुकामो यजेतेत्यादिषु प्राप्त-
भावनोद्देशेन यागस्य रेवतीवारवन्तीयसम्बन्धस्य च विधानात् गुणविधि-
प्रसङ्गे वाक्यभेदः स्यात्, न च यागविशिष्टस्य गुणानां येन तस्यैकस्य विशि-
ष्टस्य विधानाद्वाक्यभेदः परिह्रियेत सर्वथा भावनागामित्वात्, यथोक्त-
धात्वर्थकारकाणामरुणैकहायन्यादिवत्परस्परेणासम्बन्धः भावनासम्बद्धा-
नामुत्तरकालं परस्परोपकारित्वमिति सप्तमनवमाध्याययोर्वक्ष्यतीति, तस्माद्भा-
वनाविधिपक्ष एवानेकगुणविधानं प्रस्तुतं चाधिकरणं समर्थनीयं यथाह
यदा हि भावनारूढं विधित्वं भावनार्थत्वेनैव गृह्यते तदार्थाद्विशेषण-
विधौ सत्यवाक्यभेदः यदा तु तद्विशेषणार्थं तदाऽनेकविशेषणयोगे सति
यदर्थं विधित्वं तस्यैवैकस्य विधानं नेतरस्येति वाक्यभेदः स्यादिति
अल्पं चेदमुच्यते सर्वत्र भावनाविध्यभिधानात्तस्माद्यद्वैवासौ यथैतत्कर्तव्यं
स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदेत्यादिभाष्यस्वरूपप्राप्त्यभिप्रायं न
भावनाविधिप्राप्त्यमिति व्याख्येयम् । अतो भावनाया विधेयत्वात्तद्विशेषणभूता
कर्तृसङ्ख्योपादेयगतत्वाद्विवक्षितेति सिद्धम् ॥

आरब्धकाम्यकर्मणोऽपि समाप्तिनियमाधिकरणम्।

सू० प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात् ॥ ३ ॥

काम्यकर्मसामार्थ्येन प्रक्रान्तं वीतायां फलेच्छायाम् अवाप्ते वा फले किं नियोगतः समापनीयं नेति चिन्त्यते "तत्राभीप्सितसिद्ध्यर्थं साधनेषु प्रवर्तते । सिद्धे तस्मिंस्तदिच्छायां वीतायां किं प्रवर्तते ॥ यदि मन्येत न फलार्थं कर्म किन्तु फलकामनायां निमित्ते कर्मैव कर्तव्यं, तस्य हि भाव्यता पदश्रुत्यैवावगम्यते वाक्य स्वकामस्य तच्च दुर्बलं न चोपक्रममात्रेण चोदितं कृतं भवति समाप्तेः शास्त्रार्थत्वात्, न च पूर्वाधिकरणोक्तरीत्या नित्यानित्यसंयोगविरोधः काम्यानां नित्यत्वाभावात् अतः कामे निवृत्ते निवृत्तेऽपि तन्निमित्तं कर्म कर्तव्यमिति, नैतदेव न ह्यपुरुषार्थं कर्म भाव्यं भवतीत्युक्तं, न च फलान्तरं कल्पयितुं शक्यं श्रुतहान्यश्रुतकल्पनयोरन्याय्यत्वात्, शिष्टविगर्हणन्तु अनृतवादभ्रान्ति निमित्तं न च परमार्थतोऽनृतमस्ति शास्त्रार्थस्य सङ्कल्पितत्वाविवृत्तायां च कामनायामशास्त्रार्थत्वात्तस्मादसमापनीयमिति प्राप्ते ब्रूमः "न हि सम्भावनामात्राद्भ्रान्तिः कल्पयितुं क्षमा । सर्वस्मृतिषु तुल्यत्वादप्रामाण्यप्रसञ्जनात् तथा च निन्दावचनं प्रायश्चित्तं च युज्यते, तस्मात्क्रतुमुपक्रान्तं नियोगेन समापयेत्, तैत्तिरीया हि समामनन्ति 'देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत न देवताभ्य आवृश्च्यत" इति ।

प्रारब्धनैमित्तिककर्मणः समाप्तेर्नियमाधिकरणम् ।

सू० लोके कर्माणि वेदवत् ततोऽधिपुरुषज्ञानम् ॥ ४ ॥

स्वगृहकर्मादि प्रक्रान्तं किमवश्यं समाप्यं नेति संशये तेषामपि शास्त्रीयत्वात् विहितमुपक्रान्तं नियमेन समापनीयमिति श्रुतिकल्पनाद्देवताभ्यो वा एष आवृश्च्यत इति देवताश्रयव्यापारमात्रस्य अवश्यसमापनीयत्वावगमात् गृहादीनामपि प्रक्रान्तानामावश्यकं समापनमिति प्राप्तेऽभिधीयते "प्रमाणादेव हि प्राप्तिर्दृष्टार्थेषु गृहादिषु । तेन शास्त्रं न कल्प्येत पुरुषार्था हि देवता पुरुषार्था हि देवता गृहप्रदेशेषु निर्दिश्यते न तु गृहकर्मदेवतार्थं तस्मान्न समापननियमः ॥

प्रवृत्त एव हि तदभावे नियोक्तुं शक्यते नान्यः सत्यमेवं तथापि न नियो-ज्यविशेषणत्वे भरणस्य प्रमाणमस्ति यदि ह्येतावतैव नियोज्यविशेषण-त्वमाश्रीयते ततः सर्वत्र जीवनं शक्तिश्च नियोज्यविशेषणे स्यातां, ततश्च तदवच्छिन्नस्य नियोज्यस्य लब्धत्वाद्विश्वजिदादौ स्वर्गकामादेरकल्पनं स्यात्, तत्र यत्किञ्चित्केन चिदुच्यते प्रयुक्तिलाघवाय फलकल्पनमिति तद्वि-षेधाधिकारेष्वपि समानमित्यास्तां तावत् ॥

गुर्वनुगमनादीनामुपनयनो-त्तरकालकर्तव्यताधिकरणम्।

सू० तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ ६ ॥

स्मार्ता यमनियमाः प्राङ्मुखोऽभुञ्जीत उदङ्मुखो मूत्रं कुर्यादि-त्येवमादयः किं जननप्रभृति प्रवर्तन्ते जातो यदा शक्नुयात्तदेत्यर्थः? उतोपन-यनप्रभृतीति संशयेऽनग्निसाध्यत्वादमन्त्रसाध्यत्वाच्चैषां शक्तमात्राधि-कारत्वे प्राप्ते ब्रूमः उपनयनप्रभृति स्युरिति कुतः स्मरणात् स्मरन्ति हि उपन-यनादिर्नियम इति तस्मादुपनीताधिकारः ॥

अग्निहोत्रन्यायः। अग्निहो-त्रादियावज्जीवकर्मणां स्व-कालकर्तव्यताधिकरणम्।

सू० अभ्यासोऽकर्मशेषत्वात्पुरुषार्थो विधीयते ॥ ७ ॥

"यावज्जीवमग्निहोत्रं जुहोतीति यावज्जीवं दर्शपूर्णमासाभ्यां यजे-तेति श्रूयते तत्र संशयः किं सातत्येनानुष्ठानम्? उत सायं प्रातरग्निहोत्रं पौर्णमास्यमावास्ययोश्च दर्शपूर्णमासाविति संशयः तत्र जीवने निमित्ते कर्मविधानान्नैमित्तिके चासम्भावितात्त्यागेऽप्यवैगुण्यात्कालस्य चाङ्गत्वा-त्तल्लोपेन सन्ततानुष्ठानं न्याय्यमिति प्राप्ते ब्रूमः "अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत्कृतः। अनुपादेयरूपत्वात्तस्मिन्कर्मविधिर्यतः ॥ यद्धि प्रयोगविधिवशादुपादेयं तद्धि यथाशक्त्युपलभ्यते कालस्य पुनरनुपादेयत्वा-द्येया हि। तत्र वचनव्यक्तिरस्मिन्काले प्राप्ते कर्मकर्तव्यमिति ततश्चार्था-त्तत्कालमेव जीवनं निमित्तमिति न कालान्तरानुष्ठानमेतेनाग्निविद्ध व्या-ख्याते, तयोरप्यध्ययनाधानविधिसिद्धयोः स्वीकरणात्प्रयोगविधिनाऽननु-

प्ताप्यत्वादेषा वचनव्यक्तिरिति भवति विद्वांश्चाधिक्रियेतेति प्रत्यक्षमेव विद्या वतोऽधिकारश्रवणं "य एवं विद्वानग्निहोत्रं जुहोति" इति सर्वत्र श्रवणात्तस्मात्काले प्राप्ते विदुषोऽपि समस्ताङ्गान्तराणि यथासम्भवमुपसंहृत्यानुष्ठानम् ॥

अग्निहोत्रादिकर्मणां स्वकालावृत्त्या आवृत्त्यधिकरणम् ।

सू० तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥ ८ ॥

यदि कालशास्त्रानुरोधेन निमित्तसङ्कोचस्तत कालशास्त्रस्य सकृदनुष्ठानेन सम्पादितत्वात्तद्वशेन सकृदेव सायंप्रातःकालयोः पौर्णमास्यमावास्ययोश्च कृतः शास्त्रार्थ इति न पुनः पुनरनुष्ठानं स्यात्, नैव न हि कालशास्त्रवशाज्जीवनस्य निमित्तत्वं हीयते किन्तु तत्कालीनमेव जीवनं न कालान्तरोपस्थितत्वात्, ततश्च तादृशस्यैव जीवनस्य पुनः पुनरापत्तौ शास्त्रमपि पुनः पुनर्नैमित्तिके पुरुषं नियुङ्क्ते यथा निमित्तावृत्तावावृत्तिर्नैमित्तिकानाम् ॥

दर्शादौ भेदावृत्त्या होमावृत्त्यधिकरणम् ।

सू० तथाऽन्तःक्रतुसंयुक्तानि[1] ॥ ९ ॥

युक्तं नैमित्तिकेषु पुरुषार्थेषु निमित्तावृत्तावावृत्तिरिति, तत्र प्रत्यापत्तिफलमन्यदन्यच्च निष्पत्स्यते क्रत्वर्थेषु तु भेदेन होमादिषु क्रतूपकारस्यैव साध्यत्वात्सकृत्कृतेनैव तस्मिन्नेकस्मिन्प्रयोगे भेदानामावृत्तावपि न होमावृत्तिरिति विचिन्त्य मन्यमानस्योत्तरं क्रत्वर्थेष्वपि शास्त्रेण निमित्तावृत्तावावृत्त्यवगमाद्दाहकोऽनिमित्तस्यावृत्तेनैव होमेन सगुणः क्रतुः स्वफलाय पर्याप्नोतीति कल्पनादेषामपि निमित्तावृत्तावावृत्तिः ॥

गुर्वनुगमनादीनां प्रतिनिमित्तमावृत्त्यधिकरणम् ।

सू० आचाराद्गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् ॥ १० ॥

गुर्वनुगमनादीनामाचारप्रमाणकानां गुर्वागमनादिनिमित्तकानां किं निमित्तावृत्तावावृत्तिः स्यादुत नेति संशये तत्र दृष्टार्थो ह्येते यदनुगमनाभ्युत्था-

---

[1] प्रयुक्तानि इति पाठान्तरम् ।

नाभिवादनादिभिः प्रीतो गुरुः सम्यग् विद्यां ददातीति तत्र यथाऽनु-
ष्ठिते प्रीतिर्भवति तथा कर्तव्य सकृदसकृद्वा न त्ववश्यमावर्तनीयमिति
प्राप्तेऽभिधीयते "दृष्टार्थेष्वपि नियमादृष्टाभ्युपगमात्तस्य च शास्त्रप्रमाण-
कत्वात्तद्वशेन निमित्तावृत्तावावृत्तिः ॥

ब्रह्मचर्यविद्याप्रजऋणापाकरणस्य नित्यताधिकरणम्।

सू० ब्राह्मणस्य तु सोमविद्याप्रजमृण-
वाक्येन संयोगात् ॥ ११ ॥

"सोमेन यजेत" 'स्वाध्यायमधीयीत" "प्रजामुत्पादये"दिति श्रुतं
सोमविद्याप्रजं किं नित्यं ? मुतानित्यं ? मिति संशयः तत्र यावज्जीवादि
तुल्यनिर्देशाभावात् ज्योतिष्टोमेन स्वर्गकामो यजेतेति च फलश्रवणाद्वसन्ते
वसन्ते ज्योतिषा यजेतेति चास्य कालविधिपरत्वादध्ययनप्रजयोस्तु विश्व-
जिद्वत्स्वर्गकल्पनात्सप्तमे ब्रह्मवर्चसकाम इत्येवमादीनां चोपनयनगतानां
फलानामुपनयनस्याध्ययनाङ्गत्वेन स्वयम्फलानपेक्षत्वादध्ययनफलत्वमेव
न्याय्यम् । अतः फलकामाधिकारत्वमेवैषामिति प्राप्तेऽभिधीयते नित्यानीति
कुत "वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते । यावद्वसन्तं नियमः
सोमस्यातोऽवगम्यते ॥ यावद्वसन्तमभ्यासः काम्यस्यैवाथ वोच्यते यजेतेति
पदेनैव प्राप्नोत्यभ्यासलक्षणा ॥ तस्माद्वसन्ते निमित्ते विधानादागत आगते
वसन्ते नियमेन सोमः कर्तव्य इति नित्य, अध्ययनमप्यश्रुतफलमक्षरग्रह-
णादिना क्रमेण धर्माधर्मावबोधफलत्वात्तस्य चावश्यकत्वादावश्यकं ब्रह्म
वर्चसादिकं त्वध्ययनाङ्गभूतोपनयनाश्रितसप्तपर्णादिगुणफलत्वादध्ययन
फलमनाशङ्कनीयमेव, प्रजोत्पादनमपि अमृतानृणत्वफलश्रवणादनु 'त्वाद्य
तथा सुतानधीगच्छती"ति प्रत्यवायस्मरणान्नित्यमेव सोमविद्याप्रजम्,
ऋणश्रुतिरपि सोमादीनामावश्यकत्वं दर्शयति, न च तत्र ब्राह्मणग्रहणा-
त्तद्विषयमेवावश्यकत्वं त्रिधिवाक्येषु विशेषाश्रवणात् ब्राह्मणग्रहणस्यो-
पलक्षणार्थत्वादतस्त्रयाणामप्यावश्यकाः सोमादयः ॥

इति शास्त्रदीपिकायां षष्ठाध्यायस्य द्वितीयः पादः ॥ २ ॥

## अथ षष्ठाऽध्याये तृतीयः पाद आरभ्यते ॥

---

अथ नित्ये यथाशक्त्यङ्गानुष्ठाना-धिकरणम् ।

सू० सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥

"यावज्जीवमग्निहोत्रं जुहुयात्" यावज्जीवं "दर्शपूर्णमासाभ्यां यजेत" "वसन्ते ज्योतिषा यजेत" इति किमत्र सर्वाङ्गोपसंहारेणैवाधिकारः? उत यदा यावन्त्यङ्गानि शक्नोत्युपसंहर्तुं तदा तावद्भिरपि प्रधानं कुर्वन्नधिक्रियते? इति संशये, तत्र "समुच्चितानामङ्गानामित्यभ्यासेन सद्ग्रहः । सर्वाङ्गयुक्तमेवातः प्रधानं फलसाधनं" न चाफलसाधनेऽधिकारोऽस्ति अतो न हीनाङ्गस्य प्रयोगः उच्यते "नैमित्तिकं नियोगेन कर्तव्यमवगम्यते । निमित्तेन ततोऽशक्यहानेनापि प्रयुज्यते ॥ यावज्जीवोपबद्धं हि जीवनं धातुसम्बन्धविहितेन णमुल्प्रत्ययेन सम्बन्धान्तरासम्भवान्निमित्तत्वेन यागानुरक्तभावना प्रत्यवगम्यते दर्शपूर्णमासविशेषितश्च यजिः कालयोगिनामाग्नेयादीनामिव याचकोनाङ्गानां निमित्तस्य चैतद्रूपं यत्तस्मिन्सति नैमित्तिकमवश्यं कर्तव्यम्, अतः प्रधानानुरक्ता भावना स्वशास्त्रयुक्तनिमित्तवशादवश्यकर्तव्यत्वानुरोधेन यथासम्भवमङ्गानि गृह्णाति तावतैव शास्त्रवशात् फलसिद्धिरिति यथाशक्ति प्रयोगेणैवाधिकारः, स चाय न्यायस्तन्त्ररत्ने न्यायरत्नमालायां च प्रपञ्चितस्तीर्थोकार च निराकृतमित्युपरम्यते ॥

चतुर्थैकन्ये काम्यस्य नियमस्याधिकरणम् ।

सू० काम्येषु चैवमर्थित्वात् ॥ २ ॥

काम्यानि कर्माण्यैन्द्राग्नमेकादशकपालं निर्वपेदित्यादीन्युदाहरणं प्रस्तावेऽपि काम्यः प्रयोगः उदाहरणमेव, तत्रापि किं यथाशक्ति प्रयोगेणाप्यधिकारः? उत सर्वाङ्गोपसंहारेणेति? इति विचारः तत्रासत्यपि निमित्ते प्रज्ञाकामादिपदैरविशेषप्रतीतेरसमर्थानामप्यधिकार इति स्थितेऽपि नियताधिकरणे पूर्वाधिकरणोपजनिताङ्गलोपकानुप्रवृत्तिः काम्येष्वपि लोपं मन्यते

यत्रोच्यते प्रज्ञाकामादिशब्दाः समर्थेऽप्यविरुद्धाः, न च कामना निमित्त येनावश्यकत्व शाब्द स्यात् अङ्गानि तु शाब्दानि न शक्यन्ते बाधितुं नैमित्तिके पुनः शाब्दमावश्यकत्व प्रधानस्येति तदविरोधेनाङ्गानि यथाशक्ति क्रियन्त इति विशेष. ॥

द्रव्यभेदे पि कर्माभेदाधिकरणम् ।

सू॰ क्रियाणामाश्रयत्वाद् द्रव्यान्तरे विभागः स्यात्॥ ३॥

अतः परमतिप्रसङ्गनिराकरणेन नैमित्तिके स्थापितस्य यथाशक्ति प्रयोगस्य शेषत्वेन प्रतिनिधिविचारा प्रस्तोष्यन्ते तदुपोद्घातत्वेन त्विदं चिन्त्यते किं दर्शपूर्णमासादिषु नीवारादिद्रव्यान्तर क्रियमाण कर्मान्तरत्वमापादयति? उत द्रव्यान्तरेऽपि तदेव कर्म? ति यद्यन्यत्ततो न प्रतिनिधित्व तदेव तदा द्रव्यान्तर प्रतिनिधाय प्रयोक्तव्यं कर्म तत्र "द्रव्यस्यैव क्रिया नाम रूपं नार्थान्तरं तत• । तदात्मनश्च तद्भेदे न भवेद्विचता कथम् उच्यते "तदाऽऽत्मनोऽपि स्वस्त्यैव व्यतिरेकः क्रियात्मनि । जातिवद्गुणवच्चास्तस्तद्भेदेऽपि न भिद्यते" क्रियापि जात्यादिवद्व्यदलादिभेदेऽपि चलति यजति दर्शपूर्णमासावनुतिष्ठतीत्येवमेकबुद्धिवेदनीया न भेदं प्रतिपद्यते न ह्यत्यन्ताभिन्नत्व द्रव्यात् क्रियायाः येन तद्भेदाद्भेदः स्यात्, भेदोऽपि स्वस्येवानेकान्ताभ्युपगमात् अतो द्रव्यान्तरेऽपि क्रियाभेदाभावात्सिद्धः प्रतिनिधि॰ ॥

नित्यकर्मणोऽनित्यफलकर्मणश्च द्रव्यापचारे प्रतिनिधिना समापनाधिकरणम् ।

श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात् ॥ ४ ॥

दर्शपूर्णमासयोः श्रुतद्रव्यापचारे द्रव्यान्तरं प्रतिनिधाय प्रयोगः कर्तव्यो नेति विचारे न कर्तव्य इत्याह सर्वशक्त्यधिकरणे ह्यशक्त्यात्याग उक्त, न पुनरङ्गान्तरागमः, न च द्रव्यान्तरागमे प्रमाणमस्ति कर्मचोदना तावच्च द्रव्यं प्रयुङ्क्ते, यत्तु द्रव्यस्य प्रयोजक व्रीहिभिर्यजेतेति तद् व्रीहीणामेव प्रयोजकं नान्यस्यातो नान्यागम", स्यादेवं यदि व्रीहिशास्त्र द्रव्यस्य

(१) नैमित्तिकेष्वपीति ।

विधायकं स्यात्कर्मचोदनया त्वाक्षिप्तं द्रव्यं व्रीहिशास्त्रेण नियम्यते 'यदा त्वलाभात् व्रीहीणामुदास्ते व्रीहिचोदना । कर्मशास्त्रं तदा द्रव्यमन्यदाक्षिपति ध्रुवं' तस्मादस्ति प्रतिनिधिः ॥

देवतामन्त्रक्रियाणामप्रचारे प्रतिनिध्यभावाधिकरणम् ।

**सू० न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ ५ ॥**

देवताऽग्नीन्द्रादिः, अग्निराहवनीयादिः, शब्दो मन्त्रः, क्रिया प्रयाजादिः; यथाऽदृष्टार्थो दृष्टार्थेषु त्ववघातादिषु चास्त्येव प्रतिनिधिः नखनिर्भेदनादिभिरपि तत्कार्यसिद्धेः, तदेवं देवतादीनामपि विस्मरणादिनाऽप्रचारे किं देवतान्तरमग्न्यन्तरं शब्दान्तरं क्रियान्तरं च प्रतिनिधेयं? उत नेति पूर्वेण न्यायेन प्रतिनिधौ प्राप्ते ऽभिधीयते यत्र हि प्रतिनिधीयमानं मुख्यस्य कार्यं साधयति तत्र प्रतिनिधिर्न चेह तथा सम्भवति, देवता तावद्बुद्धिलक्षणा न चान्या नीयमाना देवता भवति, न चादेवताये सङ्कल्प्यमानो यागो भवति यतो न देवताकार्यमन्यतः सम्भवति तथाऽऽहवनीयादिरदृष्टार्थो विनाऽऽधानसंस्कारेण प्रक्षेपसम्भवात् न च तददृष्टमन्येन सिध्यतीति प्रमाणमस्ति लौकिकाग्निना तु पुरोडाशनिर्वृत्तिः प्रत्यक्षेणोपलभ्यते, मन्त्रस्तु यद्यपि प्रकाशनार्थत्वात् दृष्टार्थस्तथाऽपि तस्य ध्यानादिनाऽपि सिद्धेर्न मन्त्रान्तरं शब्दान्तरं वा प्रतिनिधेयम् अवश्यं हि तदर्थप्रकाशकं शब्दान्तरं प्रतिनिदधता पूर्वं तदर्थस्तु स्मर्तव्यः तस्मिंश्च स्मृते कृतकार्यत्वान्न शब्दान्तरं प्रतिनिधेयम् । ये तु मन्त्रनियमकृतमदृष्टं न तदन्येन सिध्यतीत्यप्रतिनिधिमाहुः तेषां व्रीह्यपचारेऽपि तत्कृतनियमस्यान्यथासिद्धेर्व्रीह्यन्तरप्रतिनिधिर्न सिध्येत् प्रयाजादिकार्यस्याप्यन्यतः सिद्ध्यभावान्नास्ति प्रतिनिधिः ॥

प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणम् ।

**सू० प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ ६ ॥**

'अयज्ञिया वै माषा वरका कोद्रवाः' इति प्रतिषिद्धयज्ञसाधनभा

(१) मन्त्रनियमकृतादृष्टमिति पा० ।

सख्योऽत्र गणः साक्षात् चोद्यते। चतुःसख्यैस्तु षडहैरनुमानेन गम्यते। चतुःसख्यास्तु षडहाः प्रत्यक्षेणैव चोदिताः। तस्मात्षडहविधान्तं शीघ्रमत्रावगम्यते ॥

संख्यागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम्।

**सू० संस्था गणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ४ ॥**

यतोऽक्थ्य भवति यतो'ऽतिरात्र भवति, इति श्रुत तत्र संशयः किं ज्योतिष्टोमस्य यतःशब्दोऽभ्यासः? उत द्वादशाहप्रकृतिः? इति तत्रोक्थ्यादिशब्दानां ज्योतिष्टोमनामत्वं मन्वानस्तमेव दूरस्थमप्यनूद्य यताभ्यास उपादेयो गुणो विधीयते इति मन्वानस्यैवाभ्यासमाह "सख्यानिमित्ता इत्येतेन कृतो कस्यापि वाचकाः। सविधभावतः सख्याविशिष्टगणचोदना। तस्माद्द्वादशाहविधान्तं ॥

यतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्राणयाधिकरणम्।

**सू० गणादुपचयस्तत्प्रकृतित्वात् ॥ ५ ॥**

'यतोक्थ्य भवती'त्यत्र द्वादशाहिको दशरात्रो दशकस्य प्रवर्तत इत्युक्त, तस्मिंश्च दशरात्रे ऽभितो द्वावग्निष्टोमौ तत्र यतोक्थ्ये प्रतिदशक द्वौ द्वावग्निष्टोमौ अक्थ्यसख्यया वर्द्धयितव्यौ तत्रागम्यमानेषूक्थ्यस्तोत्रेषु संशयः, किं द्वादशाहिकोक्थ्यस्तोत्रविकारास्तेषु हि केचिद्विशेषाः प्राकृतेभ्यः स्तोत्रेभ्यो विद्यन्ते? उत ज्योतिष्टोमोक्थ्यविकाराः? इति तत्र द्वादशाहविकारत्वादस्य गणस्य तदीयेषूक्थ्याहस्सु यान्युक्थ्यस्तोत्राणि तद्विकारत्वमेवास्मिन्नागन्तूनामुक्थ्यस्तोत्राणां युक्तं, नैतद्युक्तं ज्योतिष्टोमे ह्युक्थ्यस्तोत्राणामुत्पत्तिः, द्वादशाहे त्वतिदेशगतानां तेषामेव विशेषा विहिताः। यत्र चोत्पत्तिस्तत एवागमनं युक्तं न यत्रातिदिष्टानि, न हि भिक्षुर्भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके, तस्माज्ज्योतिष्टोमिकानामेवोक्थ्यादीनां प्रवृत्तिः ॥

---

१ यतातिरात्रमिति।

सिद्धे ऽतिदेशेऽधुनाऽतिदिष्टानां पदार्थानां मन्त्रसामसंस्काराणां द्वारान्तरसम्बन्धनिमित्तोऽन्यथाभावात्मक ऊहश्चिन्त्यते, तस्य चातिदिष्टविषयत्वादतिदेशोत्तरकालमारम्भः, अतिदेशाधीनत्वमेव दर्शयितुं प्रामाण्यसिद्धमपूर्वप्रयुक्तत्वं धर्माणामनेन सूत्रेण स्मारयति, यदि प्रयुक्तत्वे हि पारिप्लवा धर्माः सर्वत्रोपदिष्टा नान्यथा कर्तुं शक्यन्ते, अपूर्वप्रयुक्तत्वे तु प्रतिक्रतु व्यवस्थिता धर्माः. वक्ष्यमाणन्यायेन कार्यमुखेनातिदिष्टा पुनरूहं भजन्ते, तस्मादूहविचारस्याऽपूर्वप्रयुक्तिः स्मारिता तदीयौ पूर्वोत्तरपक्षौ तथैव प्रदर्शिताविति नेह प्रदर्श्येते, तथाऽन्यदिह चिन्त्यते किमवघातमन्त्रादयो विवक्षितव्रीह्यभ्यादिद्वारा ऽपूर्वस्योपकुर्वन्ति ? उताविवक्षिततत्स्वरूपाः साधनविशेषमात्रद्वारेति[1], स्वरूपविवक्षायां हि तदभावादवघातादिलोपो न स्यात्, अविवक्षितत्वे तु नीवारादावपि साधनविशेषसद्भावात्सिध्यत्यूहः । ननु साधनस्यापि दार्शपौर्णमासिकस्य द्वारत्वात् विकृतौ च तदभावात्कथमूहः, यस्यापूर्वस्यावघातेन कृत्स्नव्रीहिसाधनं नीवारमिति चेत्तदा तस्यैवावघात्यसाध्यत्वात् धर्मसङ्करः स्यात्, तथाऽन्यस्यापि प्रदेयसाधनं स्यात् । यथाग्नेयादिद्वारभेदेन साधनस्य भेदाद् व्यवस्था, ततो विकृतौ तद्द्वाराभावादवघातादेरप्रवृत्तिः, उच्यते—अवहन्तेरेवं कुर्यादिति शास्त्रार्थः साधनप्रयुक्तिपक्षे तद्वत्कुर्यादित्यतिदेशे अवहन्ते कुर्यादित्यर्थो भवति तस्मात्सिध्यति विकृतावघातः, तेन यस्यापूर्वस्यावघातोऽङ्गमित्यादिकल्पनाशास्त्रमनपेक्षं, यदि च धर्मसाङ्कर्यं च स्यादित्याशङ्का तावत् एव प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यत्रागमे एव सुधरणमित्यत्राप्यवहन्ति स्वरूपं स्वर्गस्वरूपस्य संस्कारमन्त्रयोरपूर्वार्थयोरुद्देश्यतापूर्वसम्बन्धिविधेय इति तुल्यो विचारः, तत्र व्रीह्यादीनां तुलानामविवक्षाकारणाभावात्तद्द्वारेणैवापूर्वार्थत्वं, साधनरूपस्यावर्जनीयत्वादन्यथाऽवघातादेरानर्थक्यात्तन्मात्रपेक्षविवक्षितमिति सिद्धान्तः, तदेतदिह संक्षिप्तमुपरितनैस्त्रिभिरधिकरणैः प्रपञ्चयिष्यते, सेयं द्वितीयस्य वर्णकस्यैका व्याख्या, तथाऽन्यापि

---

१ व्रीह्यादिद्वारेति पाठान्तरम् ।

सप्तमाद्ये हि यज्ञार्थत्वेऽपि धर्माणामपूर्वविशेषनिमित्ततामात्रेण[1] व्यव-स्थासिद्धेर्नैकान्ततोऽपूर्वार्थत्वं व्युत्पादनीयमिह त्वपूर्वार्थत्वमन्तरेणोहा-सिद्धेरपूर्वार्थत्वमुपपाद्यते, यज्ञस्वरूपार्थत्वे हि तुल्यन्यायत्वादवघाता-दीनां व्रीह्यादिस्वरूपार्थत्वं स्यात्तदभावाच्च नीवारादावूहो न स्यादिति तस्यैवापरा व्याख्या सप्तमाद्ये साधारण्येनापूर्वार्थत्वमिह त्वारादुपकार-काणामपूर्वार्थत्वमुच्यते। स्यात्सन्निपातिनान्तु श्रुत्यादिसंयुक्तद्रव्याद्यर्थ-त्वावगमात् न तत्प्रयुक्तत्वमित्याशङ्क्य तेषामपि व्रीह्यादिस्वरूपपर्यवसा-यिनामानर्थक्यात्तद्द्वारेणापूर्वार्थतेति प्रतिपाद्यते, तदेतेषु त्रिष्वपि पक्षेषु यथैत्यादिभाष्यन्तत्रत्य एवास्माभिर्व्याख्यातम्। अथवाऽन्यामित्यादिना-भाष्येण पुनर्वैयर्थ्यकान्तमारभ्य तदुच्यते सप्तमाद्ये ऽपूर्वार्थत्वं सिद्धम्, इह तु किमपूर्वार्थानां धर्माणां यज्ञोनिमित्तम्? । उतानिमित्तमयापूर्वमेवे? ति चिन्त्यते। बन्यनिमित्ता प्रवृत्ति कादाचित्कत्वात् येन विचार एव न स्यात्तत्रापूर्वस्यासाध्यत्वान्निमित्तता न युक्ता, तस्माद्यज्ञ एव निमित्तं तत्तु-ल्यन्यायत्वाच्चावघातादीनामपि व्रीह्यादिस्वरूपमेव निमित्तमिति तद-भावान्नीवारादिषु न स्यादिति प्राप्त ब्रूमः "यज्ञस्यार्थनिमित्तत्वं न केन-चिद्विहोच्यते। अपूर्वस्यापि तच्चोक्तमयोग्यस्य निमित्तता। साध्यं हि साध-नानुष्ठानेऽनिमित्तम् अनिष्पन्नमपि मनसि साध्यतया विपरिवर्तमानं, तस्मादपूर्वार्था धर्मास्तन्निमित्ताश्च विकृत्यपूर्वमपि तेषां धर्माणामतिदेशेन साध्यमवगतं तत्साधनभूतनीवारादिद्वारेणावघातादीननुष्ठापयतीति सिध्यत्यूहः ॥

संस्कारस्यापूर्वप्रयुक्तत्वाधिकरणम्। सू० संस्कारे प्रयुज्यमानानां तादर्थ्या-त्तत्प्रयुक्तं स्यात् ॥ २ ॥

पूर्वाधिकरणे धर्माणाम् अपूर्वार्थत्वं सप्तमाद्यसिद्धं स्मारितं, तत एव च द्रव्यसंस्कारो ऽपि तत्प्रयुक्त इति संक्षेपतः प्रतिज्ञामात्रेणोक्तम्, इदानीं तु तदेव श्रुत्यादिविरोधात्र सम्भवतीत्याशङ्क्योपपाद्यते तत्रेह

१ निष्टतामात्रेणेति पा॰

वाक्यसंयुक्ताना फलदेवतयोश्चेत्यत्र लिङ्गसंयुक्ताना द्रव्यसंख्याहेतुसमुदाय
मित्यत्र श्रुतिसंयुक्तानामपूर्वार्थत्वम्प्रतिपाद्यते दर्शपूर्णमासयोः श्रूयते
'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' प्रोक्षिताभ्यां दृषदुपलाभ्यां पिन
ष्टी ति तत्र प्रोक्षित–शब्देन विशेषणप्रधानेन तृतीयान्तेनान्यसाधनभूत
योरुलूखलमुसलयोर्दृषदुपलयोश्च संस्कारत्वं गम्यमानं प्रोक्षणं यत्तयोः सा
धनत्वार्थमित्यविवादम्। इदन्तु चिन्त्यते यत्तयोर्हन्तिपिषिसाधनत्वं तदर्थं
तत्प्रोक्षणं हन्तिपिष्यर्थं? उत यदपूर्वसाधनत्वं तदर्थत्वादपूर्वार्थं? मिति
तत्र "अवहन्तिश्रुतेस्तावदवघातः प्रतीयते । तत्साधनत्वमेवातस्तृतीया
तोऽवगम्यते ॥ सामानाधिकरण्याच्च प्रोक्षणं तद्विशेषणम् । एवं हन्त्यर्थता
पूर्वोक्तस्य प्रक्रियावशात्' । न च वाक्यसंयुक्तस्य प्रकरणमीष्टे हन्तिपिषि
द्वारेणापूर्वार्थत्वादुभयमविरुद्धमिति चेत् उभयान्वयासम्भवात् हि प्रकर
णाधीनत्वमात्रेण प्रकृतार्थता सम्भवति, किं तर्हि प्रकृतेनैकवाक्यतां
कल्पयित्वा, न चावहन्तिपदेन प्रधानवाक्येन च युगपदेकवाक्यता सम्भवति
तत्रान्यतरेऽवहात्ये प्रकरणं बाधित्वा हन्तिनैवान्वयमध्यवस्यामः, न च
प्रोक्षणस्यानर्थक्यं हन्तेरपूर्वार्थत्वात्तदर्थमपि प्रोक्षणमपूर्वस्योपकरोत्येव
यथाऽऽधानमग्निद्वारेण क्रतूनामुपकारकमपि क्रतुविधिभिर्न गृह्यते तथा
प्रोक्षणमपूर्वार्थं हन्तेरङ्गमपि तत्स्वरूपपर्यवसायित्वेन विधीयमानं न
क्रतुविधिैकवाक्यतां गच्छति । यत्र प्रधानवाक्यशेषभूतं तदेव विकृतिष्व
तिदिश्यते ततश्चावघातः क्लृप्तत्वादतिदिश्यते न प्रोक्षणमक्लृप्तत्वात्
अवघातस्तु गच्छंस्तदङ्गभूतं प्रोक्षणमपकर्षतीति कृत्वा विकृतिषु प्रोक्षण
मनुष्ठीयते, नखनिर्भिन्नेषु तु चरोऽवघाताभावात् प्रोक्षणस्याकर्षकमस्तीति
न तेषु प्रोक्षणमूहितव्यम् । यद्यप्यवघातद्वारेण क्रत्वङ्गम्प्रोक्षणं तथाऽपि
तत्स्वरूपमेव द्वारमिति तदभावात्तेषु नास्ति प्रोक्षणमिति सिद्धोऽभिधी-
यते। "अवघातावसाय सत्यपेक्ष्य स्यादनर्थकम्। विनापि प्रोक्षणं हन्तिरूप
निष्पत्तिदर्शनात्। तद्द्वारेण स्वपूर्वार्थं भवच्चानर्थकं भवेत् ॥ न हि तेन विना
तस्य निष्पत्तिरवगम्यते । तेनावघातमात्रेण प्रयोजनानवाप्तेर्वाक्यसंयुक्त
मप्यवघातमतिक्रम्यापूर्वार्थता प्रकरणादर्थ्यते न च तदेकवाक्यतामन्तरेण

तादर्थ्ये सम्भवति । न च हन्तिनाऽपूर्वेण च पृथक् पृथगेकवाक्यता संभवति प्रोक्षिताभ्यां हन्ति प्रोक्षिताभ्यामपूर्वं भावयेदिति वाक्यं हि तथा भिद्येत तस्मादेवं द्रष्टव्यं हन्तेर्द्वे रूपे हन्तिरूपं तण्डुलनिर्वृत्तिप्रणाड्या चापूर्वजननव्यापारविशेषता, तत्र वाक्यात्प्रोक्षणं प्रति प्राधान्यमापद्यमानोऽवघातः प्रोक्षणस्य स्वरूपस्यान्यथाऽपि सम्भवात्तेनात्मना प्राधान्यासम्भवादपूर्वजननव्यापारात्मना प्राधान्यं प्रतिपद्यते तद्रूपस्य विना प्रोक्षणेन निष्पत्त्यनवगमात्तत्स्वरूपप्रतिपत्तिपरश्च हन्ति-शब्दः, एवमुलूखलमुसलयोरपि द्रष्टव्यं स्वरूपं हन्तिसाधनरूपं च विनापि प्रोक्षणं सम्भवतीति तयोर्हन्तिशब्दावगतापूर्वव्यापारविशेषं प्रति साधनत्वं तेनात्मना प्रोक्षणसंस्कार्यत्वं गम्यते, तदेवं वाक्यार्थः, येन व्यापारेण तण्डुलनिर्वृत्तिप्रणाड्याऽपूर्वं क्रियते तं व्यापारम्प्रोक्षितेन साधनेन कुर्यादिति तत्र नखनिर्भिन्ने चरौ दलनस्यावघातवत्तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वजननव्यापारत्वाच्चलनाख्य तत्साधनत्वात् प्रोक्षणं सिध्यति । नन्वेवमवहन्ति-शब्द उलूखलमुसलशब्दौ च लक्षणाश्रयाः स्युः सत्यम्, वानर्थक्याद्वरं लक्षणा, तस्मादपूर्वप्रयुक्तं प्रोक्षणम् । अथ "यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूया"दिति श्रुतः स्वरविशेष. किं ज्योतिष्टोमापूर्वप्रयुक्तः? उत दीक्षणीयापूर्वप्रयुक्त? इति विचारः, "तत्र फलवत्परमापूर्वं तच्छेषत्वं सतो भवेत् । स्वापूर्वं क्रतुशेषत्वाच्च स्वयं फलवदुच्यते ॥ फलवच्छेषता युक्ता न तु निष्फलशेषता, । तस्मात्तत्साधने रूपे स्वरभेदो विधीयते ॥ उच्यते । प्रथमाश्रीयमाणे हि भवेल्लक्षितलक्षणा । स्वापूर्वं लक्षणामात्रं तस्मात्तच्छेषताऽवर तच्छेषत्वेऽपि धर्मस्यानानर्थक्यं प्रसज्यते । तस्याप्यदृष्टरूपत्वात्फलापूर्वोपयोगतः । फलवत्परमापूर्वोपयोगित्वाद्यजमानसंस्काररूपं दीक्षणीयापूर्वं फलवदेव न तादर्थ्येऽप्यानर्थक्यम् । अदृष्टरूपत्वाच्च तद्रूपस्य विना धर्मावघातादिवत्सिद्ध्यनवगमात्सम्भवति प्रयोजकत्वमिति तादर्थ्यमेव युक्तं, दीक्षणीया हि केनात्मना धर्मे गृह्णातीत्यपेक्षायां स्वापूर्वसाधनत्वं शीघ्रं गम्यते, तद्द्वारन्तु परमापूर्वसाधनत्वं विलम्बितं, तस्मादवान्तरापूर्वप्रयुक्ता एवं जातीयकाः, एतेन प्रोक्षणावहननामुपधानादीनान्तज्जन्यव्रीह्यादि-

समवेतापूर्वप्रयुक्तत्वं व्याख्यातम् । आरादुपकारकप्रयाजाद्यङ्गानां तदपूर्व-
प्रयुक्तत्वं 'संस्कारोऽपि ह्यदृष्टत्वादपूर्वमिति गीयते ॥ प्रयाजापूर्वप्रसक्त्या
तूभयं स्यात्प्रयोजकम्' ॥

फलदेवतासम्बद्धधर्माणामपूर्वप्रयुक्तताधिकरणम् ।

सू० फलदेवतयोश्च ॥ ३ ॥

"अगन्म सुवः सुवरगन्म" "अग्नेरहमुज्जितिमनूज्जेषम्" इति दर्श-
पूर्णमासप्रकरणपठितौ मन्त्रौ किं स्वर्गस्वरूपाग्निस्वरूपप्रयुक्तौ ? उत यद्दर्श-
पूर्णमासापूर्वसाध्यं स्वरूपं फलस्याग्नेश्च तदीयदेवतास्वरूपं तत्प्रकाशकौ
सन्तौ मन्त्रावपूर्वप्रयुक्ताविति "तत्र स्वर्गादिशेषस्य मन्त्रलिङ्गेन मन्त्रयोः ।
फलस्यादृष्टरूपत्वात्प्रधानत्वाच्च सर्वतः ॥ आम्नायैर्याच्यमानस्य फलदा-
यित्वसम्भवात् । तादर्थ्यमेव मन्त्रस्य युक्तं नापूर्वशेषता ॥ सत्यं, फलस्य
सर्वस्मात्प्राधान्यं न तु तावता । मन्त्रस्तद्रूपशेषः स्याद्दानर्थक्यप्रसङ्गतः' ॥ न
हि मन्त्रेण प्रकाशितमात्रं फलं भवतीति प्रमाणमस्ति, येन क्रतुमतिलङ्घ्य
स्वर्गार्थत्वं तावन्मन्त्रस्याशङ्क्य प्रकरणाम्नानात्सम्भवत्यनुपेयम्.[1] संस्कार-
द्वारेण फलार्थं स्यात्, ततश्च क्रत्वपूर्वप्रयुक्ततामेवापद्यते, न हि क्रत्वङ्गत्व-
मपूर्वातिलङ्घनेन फलं प्रत्येव युक्तम् । एवमग्न्यादेरपि फलदायित्वे सत्यपि
मन्त्रेण प्रकाशितमात्रात्फललाभो नियमात्तत्क्रत्वेवेति क्रत्वङ्गत्वेनैव प्रका-
श्यत्वमङ्गीकर्तव्यं, तस्मादेव क्रतौ मन्त्रप्रकाशितफलदेवतं क्रतु स्वापूर्वं
साधयतीति, ततश्च विकृतौ फलान्तरदेवतान्तरत्वादगन्म सुवरित्यादि
सूर्यस्याहमुज्जितिमनूज्जेषमित्यूहनीयस्तथा हि प्रकृतिवत्प्रयुक्तं भवतीति ॥

धर्माणामदेवताप्रयुक्तत्वाधिकरणम् ।

सू० देवता वा प्रयोजयेदतिथिवद्भोजनस्य
तदर्थत्वात् ॥ ४ ॥

अत्र तावत्फलदायित्वेऽपि न देवतायाः प्रयोजकत्वं स्वरूपेणोक्तम्, इदानीं तु नाम्ना फलदायित्वं, नापि प्राधान्यमिति प्रतिपाद्यते,
सर्वं पूर्वाक्षेपेणेदमारभ्यते ऽपूर्वापह्नवात्तदिदैर्वतद्विचार्यते किं यागो

---

१ मिथ्यतेति पा ।

२ संस्कारद्वारेण वर्तत ।

देवताराधनार्थं अस्याश्चाराधिताया' फलम्? उतापूर्वद्वारं यागस्य साध-
नत्व? मिति, तत्र "इन्द्रादेः सम्प्रदानत्वात्कर्मणोऽपि प्रधानता। यागः
पूजा तदङ्गं स्यादतिथेर्भोजनं यथा ॥ कर्मकारकं हि क्रिययेप्सिततमत्वप्रधान-
न्तेनापि व्याप्यमानं सम्प्रदानं ततोऽपि प्रधानं सम्प्रदानं च देवता, तस्मात्प्र
धानं यागश्च देवतापूजा, सा च लोके पूज्यमानार्था अतिथिभोजनादिवत्,
अतो देवताराधनार्थो यागः, सा चाराधिता फलमाराधयित्रे ददातीति
युक्तम्। एवञ्च लौकिकप्रसिद्धपदार्थस्वभावो नातिक्रान्तो भवति, अवश्यं
च यागस्यापि फलसाधनत्वे केनचिद् द्वारेणाश्रयितव्यं स्वरूपस्य भङ्गुरत्वा-
त्तत्र रात्रिसत्रन्यायेन वाक्यशेषमन्त्रवर्णाद्यवगता देवतातृप्तिरेव द्वारमिति
कल्पयितुं युक्तं, न त्वत्यन्ताप्रतीतापूर्वकल्पनं, श्रूयते हि "तृप्त एवैनमिन्द्रः
प्रजया पशुभिस्तर्पयती'ति "दधत्पोषं रयिं मयि' इति, शब्दगम्यत्वाच्च
देवताप्रसादस्य, स एवापूर्वं तद्गुणो प्रयोजकं फलसाधनं चेत्येवं प्राप्ते ब्रूमः
"यागस्यैव पदश्रुत्या फलसाधनतेष्यते। देवतायाश्च तादर्थ्यं तन्निर्वृत्त्युपयो
गतः ॥ यागश्च साध्यरूपत्वात्साधनत्वेन देवताम्। गृह्णाति सिद्धरूपा च
देवता तस्य साधनम्" ॥ प्रत्ययाभिहिता हि भावना पुरुषार्थभाव्यमपेक्ष-
माणा पदगतमपि यागमयोग्यत्वादुपेत्य वाक्यादुपनीतं स्वर्गादि गृही
त्वा तस्य साधनमाकाङ्क्षन्ती समानपदश्रुत्युपनीतं यागमविरोधात्करणत्वे-
न गृहीत्वा इत्थम्भावापेक्षाया द्रव्यदेवतभूतं भव्ययागनिर्वर्तनसमर्थं ताद-
र्थ्येन गृह्णती देवता यागार्थो करोति, न च यागगतं देवतायाः फलार्थत्वं
येन तदाराधनाय यागविधिः स्यादेव शब्देन तावत् यागात्फलं गम्यते
यत्त्वतिथिवदित्युक्तं युक्तं तत्र प्रमाणान्तराद्भोजनस्य तादर्थ्यावगमात्, अपि
च तत्रापि नातिथिर्भोजयितुः फलं ददाति प्रीयमाणोऽपि न ह्यसौ स्व-
र्गादिप्रदानायेष्टे तस्माद् यागवद्भोजनादेव फलम्, एवं विशिष्टसम्प्रदानक-
दानेऽपि तथा यागेऽपि, यद्यपि देवता विग्रहवती प्रतिगृह्य भुक्त्वा तृप्यति
प्रसीदति च तथापि यागादेव फलं विग्रहवती चानित्या स्यात्ततश्च नित्य-
वेदविषयत्वं न स्यात्, सत्यपि विग्रहे प्रत्तस्य हविषो देवताया भोगः प्र
त्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुं, न चाभुञ्जाना प्रसीदतीति युक्तम्, अत

एवावत्तिपक्षा पूर्वत्यागेन देवताप्रसादादेव फलमित्येतदपि निरस्तं, न हि तस्याः प्रसादः सम्भवतीत्युक्तं, यत्तस्या यागसाधनद्वारा फलनिर्वर्त्युपयोगित्वं तदभिप्रायादेव देवतायाः फलदातृत्ववादाः, सेनापतिना ग्रामो दत्त इत्यादिवत् तत्तन्मन्त्रार्थवादेतिहासपुराणेष्वपि देवतानामपि तपश्चरणाद्यनुष्ठानवत्स्वास्वादिमत्त्वतश्च समीहितसिद्ध्यनुकीर्तनात्कर्मण एव फलं गम्यते, । मन्दधियस्तु मन्त्रार्थवादस्यार्थमजानाना भ्राम्यन्तु नाम, किञ्च लोष्ठमण्डूकादीनां निरवयवाचेतनानां चौषधिवनस्पतीनामश्वानां गवां च हनुहस्तानामश्वत्थपाषाणाश्च कृष्णाश्वेतादीनामश्ववरितानां चेन्द्रादत्तस्करणादीनां देवतात्वेन होमेषु श्रूयमाणानां को नाम फलदातृत्वं श्रद्दधीत । किञ्च सैवाग्निहोत्रदेवता दध्ना पूज्यमानेन्द्रियं ददाति पयसा पशुमिति को हेतुरन्यदतो वस्तुस्वभावात्, पायसभोजनाद्यनादिभिश्च किमिति देवतास्तृप्यन्ति, किमिति वा सुरापानादिभिः कुप्यन्ति, येनाभ्युदयं प्रत्यवायं च कुर्वन्ति कर्तुं । यथैवमादिषु कर्मणा यथापूर्वद्वारं फलं तथा सर्वत्रास्तु तस्मादपूर्वप्रयुक्ता धर्माः ॥

प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम् ।

सू० द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ५ ॥

वाक्यसंयुक्ताना लिङ्गसंयुक्ताना चापूर्वप्रयुक्तिर्व्याख्याता यस्त्वत्यन्तबलीयस्या श्रुत्या संयुक्तं तस्य प्रकरणादपूर्वार्थत्वमत्यन्तान्याय्यमिति मन्यमानान्प्रति श्रुतिसंयुक्तानामपि अपूर्वार्थता प्रतिपाद्यते । अथवा स्वरूपातिक्रमेण साधनसम्बन्धे श्रुत्यादिप्रमाणसङ्गमाशङ्क्य निराक्रियते दर्शपूर्णमासयोः श्रूयते "व्रीहीन्प्रोक्षती"ति तत्र संशयः किं व्रीहिद्रव्यप्रयुक्तं प्रोक्षणम्? उतापूर्वप्रयुक्तं? मिति, यद्व्रीहिपदाभिधेयं स्वरूपं तन्मात्रपर्यवसितं प्रोक्षणं विधीयते तन्मात्र च कृत्स्नम्? उत यत्तेषां साधनरूपं व्रीहिभिर्यजेतेत्यनेनावगतं तेन प्रोक्षणं सम्बध्यते प्रोक्षितैर्यजेतेति? ति, स्वरूपपरत्वे प्रधानविधिविशेषणत्वाभावादसद्विशेषणस्य तद्विकारेष्वतिदेशाभावाच्च प्रोक्षणस्य विकृतिष्वतिदेशः, व्रीहिमात्र त्वतिदिश्यते तदतिदिष्टं स्वाङ्गभूतं प्रोक्षणमनुष्ठापयतीति विकृतिष्वपि सत्सु व्रीहिषु प्रोक्षणं स्यादेव, नीवारादिभिस्तु

विनिवर्त्तितेषु व्रीहिषु प्रोक्षणमुपदेशातिदेशयोरभावान्नीवारादिष्वननुष्ठेयं भवति, यदा तु साधनविशेषद्वारेण प्रधानविधेरेव विशेषणं प्रोक्षणं तदाऽयमर्थः प्रोक्षितैर्व्रीहिभिः साध्यमानेन यागेनापूर्वं कुर्यादिति तत्र नैवारहविष्कायां भावनायां तद्वच्छब्देन प्राकृतभावनेत्थंभावे सकले ऽतिदिश्यमाने नीवारैर्व्रीहिमात्रे निवर्तिते ऽन्यस्य तद्रूपस्यैवावस्थानान्नीवाराणां च व्रीहिस्थाने निवेशादेषो ऽर्थो भवति–प्रोक्षितैर्नीवारैर्यजेतेति, ततश्च नीवारेषु प्रोक्षणं सिद्धं भवति, तथा त्रीन्परिधीनिति मन्त्रः किं त्रित्वसंख्याप्रयुक्तः ? उतापूर्वीयपरिधीयत्ताप्रकाशनार्थः सन्नपूर्वप्रयुक्त ? इति, इदं तु लिङ्गविनियोगत्वादिहानुदाहरणम्, अतिप्रसङ्गनिराकरणपक्षे तु भवत्येवोदाहरणं, तथा चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्राऽमावास्यामिति अभिमर्शनं पौर्णमास्यामावास्यासमुदायप्रयुक्तम् ? उतापूर्वप्रयुक्त ? मिति, तथा चातुर्मास्येषु श्रूयते 'शूर्पेण जुहोति तेन ह्यन्नं क्रियत" इति किमन्नकरणप्रयुक्तो होमो ऽन्नकरणानां शूर्पदर्विपिठरादीनामङ्गम् ? उतापूर्वप्रयुक्तो ऽपूर्वार्थः ? इति विचारः। ननु तृतीयानिर्देशादिह द्रव्यस्य न तत्संस्कारार्थता होमस्य चाङ्गतया उच्यते तेन ह्यन्नं क्रियत इति हेतुनिर्देशोऽयं हि-शब्दश्रुत्या गम्यते व्याप्यश्च हेतुर्भवति प्रधानं चाङ्गेन व्याप्यते नाङ्गं प्रधानेन, यच्च प्रधानं तदाङ्गं न यदङ्गं तन्न प्रधानं, तस्माद्धेतुश्रुत्या व्याप्यत्वेन धूमवदवगम्यमानमन्नकरणं प्राधान्येनावसीयत इति होमस्तदर्थ इत्याशङ्क्य, तत्र श्रुतिबलीयस्त्वात् व्रीह्यादिद्रव्यविषयता प्रक्रियाऽवगतापूर्वविषयत्वस्यावबाधिनी व्रीह्यादिरूपविषयरूपत्वे सत्यानर्थक्यमापतेत्। प्रोक्षणस्य विना ऽप्यस्मात्तत्स्वरूपस्य सिद्धितः। तस्मात्साधनरूपं यद् व्रीहीणां शास्त्रचोदितम्। तेन रूपेण संबन्धः, प्रोक्षणादेर्विधीयते ॥ शक्नुवन्ति व्रीहयः शास्त्रान्तरा[1]वगतमात्मीयमपूर्वसाधनत्वं स्वीयरूपत्वं लक्षणया ऽवगमयितुं, तेनात्मना प्रोक्षणं गृह्णन्ति स्वरूपस्य च विद्यमानत्वान्नातिप्रसङ्गः। यदि पुनरेकेनैव वाक्येन संस्कारो द्रव्यस्य विधीयते प्रोक्षितैर्व्रीहिभिर्यजेतेति, तदापि किं सिध्यति साधनरूपान्वयः प्रोक्षणस्य सुतरां सिध्यतीति ब्रूमः, न हि तत्र व्रीहिभं-

१ शास्त्रान्तरावगमात् इति पा०।

बन्धः। प्रोक्षणस्य साधनत्वेनैवोपदिश्यमानं द्रव्यं संस्कारेण[1] व्रीहित्वेन च शिष्यत इति व्यक्तः साधनसम्बन्धः, अयं हि तत्रार्थः—व्रीहिजातीयप्रोक्षणसंस्कृतं च यत्तेन यजेतेति, ततश्च यवनीवारादिषु विरोधाद् व्रीहिसाधनत्वे निवर्तितेऽपि प्रोक्षितसाधनता न निवर्तत इति सिद्धं तत्रापि प्रोक्षणं, यत्र तर्हि संस्कारवाक्ये द्रव्यं निर्दिश्य सर्वनाम्ना च तद् द्रव्यं परामृश्य यागे विनियुज्यते "तप्ते पयसि दध्यानयति सा वैश्वदेव्याऽऽमिक्षे"ति तत्र कथं तत्रापि यद्यपि प्राक् पयसः साधनत्वं विहितं नापि संस्कारवेलायां गम्यते, तथाऽपि भाविविनियोगावगम्यसाधनत्वापेक्ष एवायं संस्कारविधिरन्यथाऽऽनर्थक्यात्। ननु साधनत्वं पूर्वमनवगतं कथं पयसा लक्षयितुं शक्यते न पदं प्रवृत्तिवेलायामेव स्वार्थं हित्वा साधनविशेषं लक्षयित्वा संस्कारान्वयं प्रतिपादयतीति ब्रूमः, किं तर्हि प्रथमं पयः-शब्दः स्वार्थस्य संस्कारान्वयितारूपं वाक्यार्थं प्रतिपादयति तद्रूपस्य च कार्यान्तरोपयिकतामन्तरेणानुपपत्तेस्तदाकाङ्क्षायामुपरितनेन वाक्येन संस्कारविशिष्टस्यैव पयसस्तच्छब्दपरामृष्टस्य कार्ये विनियोगः क्रियते, तदर्थश्च पूर्वं विहितः संस्कार इति पश्चादवगम्यते, तदयमर्थः—दध्यानयनसंस्कृतं पयो वैश्वदेवमिति, न ह्यवश्यं पूर्वमवगत एव साधनत्वे संस्कारा विधातव्याः, साधनरूपार्थाः संस्कारा इत्येतावत् प्रतिपाद्यं, तच्चैवं विधीयमानेनैव सिध्यति श्रुत्यैव संस्कारस्य साधनरूपान्वयात्, व्रीहीनित्यादिषु तु लाक्षणिकं रूपम्। तत्रैव श्रुत्यर्थत्वेन पयसः संस्कारान्वयं लक्षणा वाचोयुक्तिः, सत्यं, व्रीहिपयःप्रभृतीनां द्रव्याणामेव संस्कारस्तु साधनरूपविशिष्टार्थः तत्तु रूपमशाब्दमित्येतावता लक्षणावाचोयुक्तिः तच्च रूपं यवेषु नीवारादिषु चाविशिष्टमिति तत्रापि प्रोक्षणादयः सिद्धा भवन्ति, तस्मात्सर्वेषामेव भूतभव्यद्वारविनियोगानां द्रव्यादीनां संस्कारा अपूर्वभावशेषभूतास्तद्विकृतिषु प्राकृतार्थकार्येषु द्रव्यान्तरेषूहितव्याः, सूर्यहोमस्तु तृतीयानिर्दिष्टद्रव्यकारकत्वाद्यागाद्युपकारक इति दूरापास्तः, तस्य द्रव्यप्रयुक्तत्वमवचनत्वं स्वर्थवादो न हेतुरित्युक्तम्॥

१ संस्कारत्वेन इति पा०।

अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम् ।

**सू० देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ ६ ॥**

ज्योतिष्टोमे श्रूयते "त्सरा वा एषा यज्ञस्य तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती"ति तत्र संशयः किमिदमुपांशुत्वं सोमयागस्य यः प्राग् भागस्तद्धर्मः सन्परमापूर्वप्रयुक्त, ततश्च विकृतिषु तद्भागारम्भके प्राकृतेऽपि पदार्थे उत हि तत्स्थम्? उताग्नीषोमीयात्पूर्वो ये प्राचीनाः पदार्था दीक्षणीयादयस्तेषां धर्मस्तदवान्तरापूर्वप्रयुक्तं, ततश्चाप्राकृते पदार्थे यूपावटस्तरणबर्हिर्धर्मवच्चोदितस्थम् इति, तत्र प्राप्यमनयदवान्तरापूर्वप्रयुक्तत्वे प्राप्ते पूर्वपक्षोऽभिधीयते यज्ञस्येति शब्दः प्राचीन-शब्दस्य विशेषणं व्यवहितोऽपि प्रवृत्तिविशेषकरत्वं विधिविशेषणत्वे स्यात् त्सरा-शब्दविशेषणत्वे हि प्रवृत्तिविशेषकरः स्यात्तस्माद्यज्ञस्य यत्प्राचीन तदुपांश्विति सम्बन्धः ततश्च यज्ञभागधर्मता, प्राचीन-शब्दोऽपि देश निमित्तीकृत्य पदार्थेषु वर्तमानो वर्तते यथा च सति प्रथमं देशे वर्तितुमर्हति तदतिक्रमे कारणाभावात्तद्धर्म एवोपांशुत्व, प्राथमिकन्तु यज्ञसंयोगाभावादवान्तरापूर्वप्रयुक्तं, तदिदमुक्तं प्रयोजनादि तथेति चेन्न यज्ञस्याश्रुतत्वादिति । अथवाऽनेन सूत्रद्वयेनाधिकरणान्तरं प्रकृताधिकरणसिद्धान्तस्य दृष्टान्तसिद्ध्यर्थं तदीयपूर्वपक्षन्यायेन च, पूर्वपक्षं वक्तुम् त्सरा गर्भिणीन्यायेन विचार्यते दर्शपूर्णमासयोः श्रूयते "यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः यदध्वर्युयजमानौ वाचं यच्छतस्तत्प्रजापतिभूय गतौ यज्ञं तन्वाते तस्मात्प्रक्रीता. प्रणेष्यन्वाचं यच्छन्तीति तत्राप वाग्यम. किं परमापूर्वप्रयुक्तः? उतावान्तरापूर्वप्रयुक्तः? इति संशयः किं यज्ञभागधर्मोऽयं परमापूर्वप्रयुक्तः? उत प्रणीताप्रणयनादूर्ध्वं हविष्कृदाह्वानात्प्राग्ये पदार्थाः प्रोक्षणादयस्तत्पूर्वप्रयुक्तः इति, यज्ञसंयोगाद् यज्ञार्थत्वे प्राप्ते ब्रूमः यज्ञस्यात्र विस्तारेण सम्बन्धो न वाग्यमविषयविशेषणत्वं यज्ञस्य यो भागस्तत्र वाग्यम इति, किं तर्हि यज्ञन्तनिष्यन्तौ वाचं यच्छेदिति वाग्यम इति वाग्यमश्च प्रणिधानेनाविकलानुष्ठानार्थोऽङ्गं तदङ्गैरपि चाविकलैर्यज्ञस्य विस्तारो भवत्यपवेऽङ्गार्थत्वेऽपि यज्ञसंयोगः, अतस्तद्देशानां पदार्थानां साक्षाद्वैकल्यकारणेनोपकुर्वन्वाग्यमस्तदङ्गमेव स्यात्, भाष्येऽपि

हविष्कृता वाचं विसृजति प्रथमम् इति. यदुक्तमित्यादिना नात्र यज्ञ-शब्द श्रूयत इत्यन्तेन तत्प्रत्यनुभाषणत्वेन तत्परिहारत्वेन सूत्रद्वयं व्याख्याय नन्वित्यादिना ऽन्तरागर्भिणीत्वेन व्याख्यातम्। एवं हि स्थितादुत्तरमित्यादि भाष्यमुपपद्यते नान्यथा, तत्र नन्वित्यादिना पूर्वव्याख्योक्तयज्ञसंयोगाभा वाद्विपेणान्तरागर्भिणीत्वेन पूर्वपक्षमाह यज्ञसंयोगोऽत्राप्यस्तीति उच्यत इत्यादिना सिद्धान्तं दर्शितवान्, स्थितादुत्तरमुच्यते यज्ञ-शब्दोऽत्र तत् शब्दविशेषणम् अव्यवधानाच्च प्राचीनशब्दस्य विशेषणं व्यवधानादपि च प्रागस्यैकत्वात्प्राक्त्वविदित्यनेकार्थेन शब्दो नावकल्पते, तस्माद्वानीयो नीयात्प्राचीनानामङ्गानामुपांशुत्वम् अग्निधर्मे ॥

इष्टकासु अग्निधर्माणां प्रत्येकाधिकरणम्।

**सू० अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥ ७ ॥**

अग्नेः श्रूयते "हिरण्यशकलैरग्निं प्रोक्षती"ति किं प्रोक्षणं सकृदेव स्यात्। उत प्रतीष्टकं भेदेने? ति यद्वीष्टकाभिरेवोऽयमग्नि-शब्दाभिधेयस्तत सकृत्, यदीष्टका एव सहता अग्निधारणार्थेन स्थापिता अग्नि-शब्दे-नाभिधीयन्ते ततस्तदर्थं प्रोक्षणं प्रतीष्टकं कर्तव्यं यद्येकावयवाकर्षणेना-वयवान्तराकृष्यते सन्निधिश्च न दृश्यते तथैव देवदत्तघटादौ अवयव्य-भ्युपगम्यते न चैकैकेष्टकाकर्षणेऽन्यासामपकर्षणं सन्निधिश्चाप पुरीषस्व स्थानामपीष्टकानामनुमानेन दृश्यते तस्मान्नात्यवयवी, पक्कामसंयोगे च द्रव्यान्तरारम्भ इति कल्पनीया, तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात् नैव मेकबुद्धिरेव हि देशकालादिभेदेऽपि अबाधितावयविद्रव्यसाधनी सा चेहापि विद्यते वृक्षादिषु चावयविसद्भावेऽप्याकर्षेण न दृष्टमित्यतन्त्रम् अवयविसद्भावेऽपि सन्निकर्षेण च पटादावनैकान्तिकं, तस्मात्प्र-बलात्पक्कसंयोगोऽप्यात्यन्यवयवीति तस्येदं प्रोक्षणं सकृदेव कर्तव्य

द्वादशाहे श्रूयते "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते न बर्हिरनुप्रहरन्ति असंस्थितो हि तर्हि यज्ञ" इति, तत्र संशयः, किं सर्वेषामह्नां पत्नीसंयाजान्तत्वम्? उतोत्तमवर्ज्जमिति, "तत्राविशेषात्सर्वेषां पत्नीसंयाजसंस्थितिः । असंस्थावचनं गौणं यज्ञस्य चिरसंस्थितेः । स्यादेतत् असंस्थितो हि तर्हि यज्ञ इति यज्ञस्यासंस्था पत्नीसंयाजान्तत्वे हेतुः, सा च नोत्तमेऽहनि तस्माद्धेतुवशात्पूर्वेषामेव स्यात् । यद्यप्येवमर्थवादः तथाऽपि वाक्यशेषवशादेवान्त्यवर्ज्जं पत्नीसंयाजान्तता व्यवस्थाप्यते, अञ्जनमिव घृते नैवम् असंस्थित-शब्दस्य चिरसंस्थाभिप्रायत्वेनोपपत्तेः। विशेषपरश्च विधिः सङ्कोचमर्हति, यथा लोके यश्चिरेण भुङ्क्ते तत्र वक्तारो भवन्ति नास्य भोजनं परिसमाप्यत इति तथेहापि दीर्घकालोऽसौ यज्ञो न सन्तिष्ठत इति यावत् अतो लाघवार्थं पत्नीसंयाजात् परं शेषं लुप्यते समयानुष्ठाने ह्यतिविलम्बः स्यादित्येतावानभिप्रायः, तस्मात्सर्वेषां पत्नीसंयाजान्ततेति प्राप्ते ब्रूमः "अपेक्षितविधानाय प्रागुत्तममयं विधिः । मुख्यत्वसम्भवाद्वाक्यशेषस्य, न च गौणता । द्वादशाहाः सह कर्त्तव्यास्तत्र पूर्वमहः कस्मिंश्चित्पदार्थे व्यवस्थाप्य परमुपक्रमितव्यं, तत्र कुत्र पदार्थेऽवस्थानमित्यपेक्षायां पत्नीसंयाजान्तानि पूर्वपूर्वाण्यहानि कृत्वोत्तरमुत्तरमारभेतेत्येवं विधीयमानेऽपेक्षितविधिर्भवति, चोदकश्च न बाध्येत शेषलोपस्तु चोदकबाधेनानपेक्षितश्च विधीयते, तस्मादयमर्थः पत्नीसंयाजान्तान्यहानि सर्वाणि कृत्वा हारियोजनादूर्ध्वः शेषं तन्त्रेण सर्वेषामुपरिष्टादनुष्ठेयमिति, तस्मात्प्रागुत्तमात्पत्नीसंयाजान्तता, तथा चासंस्थित-शब्दोऽपि मुख्यो भवति अविशेषश्रुतोऽपि हि विधिर्वाक्यशेषस्य मुख्यत्वाय विशेषे स्थाप्यते किमुत यदा तस्यापि न्यायादेव विशेषविषयत्वं, कः पुनरस्योपयोगश्चिन्तायाः पूर्वपक्षे विकृतिषु नोहः सिद्धान्ते द्विरात्रादिषु द्वादशाहविकारेषु यदन्त्यमहस्तदाद्यं तृतीयं वा तत्प्रकृतौ पत्नीसंयाजान्तमपि अनुष्ठितमूहित्वा सकलमनुष्ठीयते ॥

९ प्रथमाभ्यास इत्यादिषु स्थानधर्मताधिकरणम् ।

सू० अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् ॥ ९ ॥

दर्शपूर्णमासयोः सामिधेनीः पञ्चदश विधाय एकादशत्वं पठि-त्वा 'त्रिः प्रथमामन्वाह त्रिरुत्तमामिति' पञ्चदश सम्पद्यन्त इति श्रुत, तत्र संशयः किमयं त्रिरभ्यासः प्राथम्यलक्षितायाः ऋचः प्रवोवाजीयाया धर्म-स्तत्कार्यार्थस्ततश्च यत्र तत्र स्थापवोवाजीया त्रिरभ्यसितव्या ? उत प्रथ-मस्थानधर्मस्तत्स्थानगतकार्यप्रयुक्तस्ततश्च प्रवोवाजीयाया अन्यापि या विकृतिषु प्रथमं पठ्यते साऽप्यूहेन त्रिरभ्यसितव्येति, "तत्र स्त्रीलिङ्गनिर्देशा-त्प्राथम्येनाभिधीयते, तस्या एव त्रिरभ्यासमन्त्रोऽत्र विधीयते" उच्यते "श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते । ऋक् तु लक्षणयोच्यते तस्मात्स्था-नधर्मता । प्राथम्यैकार्थसमवेतस्त्रिरभ्यासो विधीयते तत्प्रथम उच्यते सति रिति तत्र प्राथम्यगुणाश्रयत्वेनैव प्राप्तं गुणवचनानाञ्च शब्दान्तराश्रयतो लिङ्गवचनानि भवन्तीति नित्यानुवाद स्त्रीलिङ्गनिर्देश, न च प्राथम्यसम्बन्धि पदमात्रस्य पादमात्रस्य वा त्रिरभ्याससम्बन्धसम्भवात् न नित्यानुवादत्व स्त्रीलिङ्गस्येति मन्तव्यम्, सर्वस्यैव एव कार्यसमर्थायाश्चर्चस्य प्राप्तत्वात्ततः पञ्चदश सम्पद्यन्त इति च वाक्यात्स्थानधर्मः ॥

यावज्जीव दर्शपूर्णमासयोरारम्भणीयेष्टेः सकृदनुष्ठानाधिकरणम् ।

सू० इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥ १० ॥

दर्शपूर्णमासप्रकरणेऽन्वारम्भणीयाऽऽम्नाता, "आग्नावैष्णवमेकाद-शकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः सरस्वत्यै चरुं सरस्वते चरुम्"इति, सा किं दर्शपूर्णमासावृत्तावावर्तेत ? उत सकृदेवादौ स्यात् ? इति संशयः, "आवृत्तौ हि प्रधानानामङ्गावृत्तिरपेक्षया । दर्शाद्यङ्गमियन्तस्मादावर्तेत प्र-याजवत्" । उच्यते "आरम्भाङ्गारकत्वेन तदङ्गं साधारणश्च सः । तस्य साधारण-त्वेन साऽपि साधारणी भवेत्", आरप्स्यमानसंयोगादारम्भाङ्गमिष्टिर्न साक्षा-द्दर्शपूर्णमासाङ्गम्, आरम्भश्चेदं मया कर्तव्यमित्यध्यवसायः, स च सर्वप्र-योगसाधारणः सकृदेवाग्नीनाधायैवमध्यवस्यति यावज्जीवं मया दर्शपूर्ण-मासौ पर्वणि पर्वणि कर्तव्याविति, तस्मादारम्भसाधारण्यात्तदङ्गभूता-न्वारम्भणीयाऽपि साधारणी न प्रतिप्रयोगमावर्तनीया, एवं वृत्तिकारमते

नाधिकरणं व्याख्याय तत्रापत्तिोपाद् व्याख्यानन्तरं भाष्यकारेण कृत कस्य हेतोरपत्तिोप', नाध्यवसायवचनोऽयमारम्भ–शब्दः प्रथमप्रवृत्तिवाची हि लोके प्रसिद्धः, यद्यपि नाध्यवसायवाची स्यात्तथापि यद्यदा कार्यमुपस्थित तस्यैव तदाऽध्यवसायो न च यावज्जीविकाः प्रयोगा युगपदुपस्थिताः, न ह्ययमेकः प्रयोगोऽभ्यस्तरूपः पूर्वेका[1]लीनन्तु जीवनं दर्शानुष्ठाने निमित्तं तस्मिन्नागते नैमित्तिकं समाप्तं कृत्वा चरितार्थे पुरुषे पुनस्तादृशनिमित्तवशात् नैमित्तिकमापतितमिति पुनः क्रियते, यथैकस्मिन्पुत्रे जाते वैश्वानरीं निरूप्य पुत्रान्तरजन्मन्यपि पुनर्निर्वपति तादृगेतत्, तस्मात्प्रतिप्रयोगमध्यवसायभेदात्तदङ्गमारम्भणीयाऽऽप्यावर्ततेति सत्सि[2]द्धान्तसिद्धिस्तस्मादेव व्याख्यायते किं प्रथमस्यान्वाधानात्मकस्य पदार्थस्याङ्गमिय? उत दर्शपूर्णमासाद्यारम्भमाणस्य प्रथमप्रवर्तमानस्य पुरुषस्याङ्गमिति तत्र । "पुरुषार्थत्वपक्षे हि फलक्लृप्तिः प्रसज्यते । तेनान्वाधानशेषः स्यात्स ह्यारम्भोऽनयोर्थतः । तस्याश्रुतौ तदङ्गत्वादेषाऽऽप्यवृत्तिमश्नुते । प्रधानवशवर्तित्वादेव प्राप्तेऽभिधीयते न त्वारम्भ–शब्देन पदार्थः कश्चिदुच्यते । यदैव ह्यप्रवृत्तस्य कर्तुराद्यं प्रवर्तनम् । तत्रायं वर्तते शब्दस्तद्योगात्तु पदार्थधीः । आरभ्यमाणशब्दस्तत्कर्तुः श्रुत्यैव वाचकः । लट्प्रत्ययोऽपि श्रुत्यैव तदर्थस्याभिधायकः । आद्या प्रवृत्तिरेकैव वह्नौ नैकस्य कर्मणः ॥ प्रथमप्रवृत्तिविषयतया ह्यन्वाधानमेव प्रतिपाद्यते न श्रुत्या, न च श्रुतिसम्भवे लक्षणा युक्ता, तस्माच्चान्यन्वाधानेन सम्बन्ध, दर्शारम्भकर्तुः पुरुषस्य यानवाऽभिहितस्य संस्कारिकेयम्, आरम्भार्थतया लट्प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहितेनेयं प्रतिपाद्यते, अतो न पुरुषार्थत्वेऽपि फलकल्पना, न चैकस्य कर्मणो बह्व्यः प्रथमप्रवृत्तयः सम्भवन्ति, किं त्वेकैव । ननु द्वितीयादीनपि प्रयोगानसावारभत एव सन्यं, प्रयोगानारभते न तु दर्शपूर्णमासावारभते दर्शपूर्णमासारम्भाद् त्वियं प्रथमप्रवृत्तिरुच्यारम्भ', न च द्वितीयादि प्रयुञ्जान.

---

१ पर्यकालीनं तु इति पा० ।

२ न सिद्धान्तसिद्धिरिति ।

प्रथम प्रयुक्ते इति शङ्क्यते वस्तु, तस्मादारम्भाङ्गत्वात्तस्य चावृत्त्यभावादा-रम्भणीया नावर्तते ॥

निर्वापमन्त्रे स-वित्रादिशब्दानाम् ऊहाधिकरणम्।

सू० अर्थाभिधानसंयोगान्मन्त्रेषु शेषभा-व स्यात्तत्राचोदितमप्राप्तं चोदि-ताभिधानात् ॥ ११ ॥

दर्शपूर्णमासयोर्निर्वापमन्त्रः "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बा-हुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी"ति तत्र सवित्रश्वि-पूष-शब्दाः किं समवेतदेवताप्रकाशनार्थास्ततश्च विकृतावूहितव्याः ? उतासम-वेतवचना निर्वापविशेषणमात्रार्था नोहितव्याः ? इति, तत्र दृष्टार्थतालाभा-दूहनाबाधिता भवेत्। निर्वापस्य प्रशंसार्थो मन्त्रो दृष्टार्थतामियुः। सवित्रा-दिपदैस्तस्मादाद्यादिरभिधीयते। अग्निना वा विकल्प्येत सविता मान्त्र-वर्णिकः। तत्पक्षे तद्विनाकेन न मन्त्रोऽसौ विकल्पते। देवस्याच सवित्रादि-पदमात्रेण वाचकम्। मन्त्रवाक्यानि चैतानि भिद्येरन् प्रतिदैवतम्। जुष्ट-निर्वाप-शब्दौ च भजेतामनुषङ्गिताम्। सर्वश्च निर्वापमन्त्र एकमन्त्रः प्रतीयते। जुष्टादि सकृदाम्नातो न सहैतानुषञ्जनम्। तस्मान्निर्वापमेवैते परोचयितुम् अनुष्ठानकाले प्रशंसन्तु प्रकाशयन्तीति नोहितव्या ॥

आग्नेय जुष्टमिति मन्त्रे अग्नि-शब्दस्य विकृतावूहा-धिकरणम्।

सू० गुणशब्दस्तथेति चेत् ॥ १२ ॥

तस्मिन्नेव मन्त्रे ऽग्नये जुष्टं निर्वपामीत्यग्नि-शब्दोऽपि किमसम-वेतवचनो नोहितव्यः? उत समवेतवचन ऊहितव्य? इति तत्राप्यसमवेतो-ऽग्निरस्मिन् कर्मणि यद्यपि मन्त्रे त्वग्नि-शब्दो न समवेताभिधायकः जुष्टमिति भूतकालनिर्देशादग्निना यत्सेवितं तदुच्यते, न च निर्वापवेला-यामग्निना सेवितं द्रव्यं तस्माज्जुष्ट-शब्दस्तावदसमवेतवचनः, तद्विशेषणं चाग्निपदम् अतोऽसमवेतवचनं सवित्रादिपदवत्प्रशंसार्थं कीर्तितमित्यनूह-उच्यते 'नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते। निर्वापकरणास्यन कीर्त्यते जुष्टभाजना" । नायमर्थ-यत्र जुष्टं तस्य निर्वापं करोमीति, किं तर्हि निर्वा-

पेणाग्नये जुष्टं करोमीति यथा जुष्टं भवति तथा करोमीत्यर्थः, तस्मात्स-मवेतवचनत्वादग्नि-शब्दस्योहः, एवं वा यस्तु मुख्यवृत्त्या समवेतं न वदति यथा धान्यमसि धिनुहि देवानि"ति तण्डुलेषु धान्य-शब्दस्सतुषद्रव्यवचनः स किमसमवेतवचनत्वानूह्य? उतोह्य? इति संशये, समवेतप्रकाशनासाम-र्थ्याददृष्टार्थोऽयं तस्मादनूह्यः, लक्षणया तु प्रकृतिवदुपचारादुक्रते प्रकाश-नत्वाद्दृष्टार्थः कल्पयितुं न्याय्यः, तस्मात्तण्डुलानेव प्रकृतिशब्देन धान्ये भुज्य-न्त इतिप्रकाशयति इति इतरथमये हविषि वाक्यानामंशनेमा समसीत्यू-हितव्यमाधिक्ये च प्रकृतौ धान्यशब्दाम्नानाल्लक्षणा न तु सैव विवक्षिता वि-कृतौ लक्षणा कारणाभावान्मुख्य एव मांस-शब्दः प्रयोक्तव्यो न मृग-शब्दः ॥

इडोपह्वानमन्त्रे यज्ञपति-शब्दस्यानूहाधिकरणम् ।

सू० चोदिते तु परार्थत्वाद्विधिवदवि-कारः स्यात् ॥ १३ ॥

दर्शपूर्णमासयोरिडानिगदे श्रुतम्, उपहूतां मनुष्या ये यज्ञपतिं वर्ध-न्ती' ति किमेते यज्ञपतिवृद्धिप्रकाशनेन प्रोत्साहकत्वेन तत्संस्का[illegible]र्यं मद-नेकयजमानकेषु कर्मसूहितव्य? श्रुतिद्वारस्तुत्यर्थो यज्ञपति-[illegible] नोहितव्य? [illegible]शिवृद्ध्यर्थता स्वस्य इति, "इडामन्त्रैकवाक्यत्वाद्विद्वास्तुत्यर्थता भवेत् [illegible] इह प्रयोजनम् । उत्साह-सामर्थ्येनावगम्यते ॥ वाक्याच्च बलवल्लिङ्गं [illegible] यज्ञपु मधेसंस्कारसिद्धये ऊहो करणात् स्तुत्यामदृष्टार्थत्वमापतेत् । [illegible]वादेव वचनादिडोपह्वानशेषता यज्ञपतीन्वर्द्धानित्येवं प्राप्त उच्यते ततः । न पृथग् भवितुं शक्नोत स्तु [illegible] निगदस्योक्ता सन्ध्याङ्गेन विनियोजनम् । यच्छब्देन च पारार्थ्य त्यपेक्षा पर वृद्धिप्रकाशे कल्प्यन्द्वाप ततो वृद्धेर्न स्वार्थेन प्रकाशनं सर्वेषु वृद्धेः श्रुत्याऽभिधीयते । स्तुतिसिद्धेर्नोहः, यत्र पुनर्यजमानस्य प्रा-धेकयजमानवृद्धिप्रकाशनेनेत्याके यं यजमान आयुराशास्ते इति भवत्ये-धान्य न पारार्थ्यं यथातत्प्रधाने स्यादिति, तदिदं पूर्वस्य परार्थपदस्य घोहः, तदिदमुक्तं लि

मत्युदाहरणार्थं इ

[illegible]मिति पा० ।

१ तन्मध

शतादयस्तथापि भावित्वेनापि तावत्सम्भवद्भिः स्वगुणैरेकहायन्येव प्रका-
श्यते दृष्टार्थत्वात्, विवत्से तु अभावादूहः, नैतदेवं कर्माङ्गभूतायामेकहा-
यन्यवस्थायां तावन्न सन्त्येव, भावित्वमपि नैकान्तिकमरणसम्भवात् अतो
यथाकथञ्चित्प्ररोचनार्थं कीर्त्यन्ते, तावच्च साण्डेऽपि सम्भवति साण्डादपि
या गौर्जनिष्यते तस्या एते ऽवाप्यमानाः साण्डादेवावाप्ता भवन्तीति,
तस्मादनूहः ॥

सारस्वत्यामेष्यामध्रिगु-
वचनाभावाधिकरणम् ।

सू० लिङ्गविशेषनिर्देशात्समानविधाने-
ष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ १५ ॥

ज्योतिष्टोमे सवनीयाः पशवः आग्नेयमजमग्निष्टोम आलभेत ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णिं षोडशिनि तृतीयं सारस्वतीं मेषीं चतुर्थीमतिरात्र इति तत्र पशुधर्मा यद्यपि सर्वेषां साधारणास्तथा किमध्रिगुवचनं मेष्यां भवति उत नेति संशये प्रकरणाविशेषात् "अस्मा अग्निं भरते"ति पुंल्लिङ्गस्यास्मै-शब्दस्य नियतलिङ्गपशुशब्दाभिधेयपशुत्वाभिप्रायेण प्राप्ते पशव इत्येव स्त्रियामप्युपपत्तेर्लिङ्गविरोधाभावात् तस्यामपि स्यादध्रिगुवचनमिति प्राप्ते ऽभिधीयते। "पशुशब्दश्रुतावेवं भवेन्न त्विह स श्रुतः। तस्या स्त्वयोगकाले यदपरीततया स्थितम्। द्रव्यं तत्र प्रयुक्तोऽयं पुंल्लिङ्गं यदि तु ह्यमः न स्त्रीद्रव्यमतो मेष्यामध्रिगुर्न प्रवर्तते तेन समानविध्युपर्वपदे ऽध्रिगोर्मेष्यामप्रवृत्तिः", सिद्धान्ते त्वग्नीषोमीयार्थस्याद्धर्माणामतिदेशेन पश्वन्तराणामनाद्यूहेन प्रवृत्तिः ॥

यज्ञायज्ञीये गिरा-शब्दस्य
स्थाने इरापदस्यैव कर्तव्य-
ताधिकरणम् ।

सू० आम्नानादन्यदधिकारे वचना-
द्विकारः स्यात् ॥ १६ ॥

सामामिदानीमूहमारिप्समानस्तदुपोद्घातं चिन्तयति तानि स्व शास्त्रेषु समाम्नातानि प्रकरणान्तरेषूह्यन्ते, तत्रेह गिरापदस्येरापदे स्थानापत्त्या प्राप्तिं वक्तुं स्थानापत्तिमेव चिन्तयति, ज्योतिष्टोमे यज्ञाय-ज्ञीये श्रूयते "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेय"मिति किमिरापदस्य

तोत्पत्तावापीरीय प्रसज्यते । यदि तावदैरमिति स्वार्थे तद्धितस्तत इरा
छन्दोऽन्नं यमित्येतावानर्थ स्यात्, अप्रगीतात् खल्विरापदादयन्तद्धित
प्रगीतात्तु तदुत्पत्तौ वृद्धु तालव्य प्रथमस्वर चेत्येवमिकारस्यायीभावे सति
वृद्धाच्छ इति छप्रत्ययोत्पत्तिरापोरियमिति रूप स्यात, ऐरमिति रूपमप्रगीता
द्रु-पत्तौ सिध्यति, तस्मादप्रगीतस्यैवोपदेशादप्रगाणम्, । यद्यपि विकारार्था
यन्तद्धितस्तथाऽपि प्रगाणाप्रगाणयोरुभयोरप्यदरविकारत्वादन्यतरावधार-
णप्रमाणमन्यन्मृग्यन्ततश्चैरापदे विहिते यस्माप्त प्रगाणमप्रगाणं वा तस्यैवा
यमनुवाद इत्यापद्यते, । तद्विधि'ना चाप्रगाणमेव प्राप्त तथाभूतस्योपदेशात,
तस्मादप्रगाणम् । उच्यते ' गिरापदस्य यस्थान तत्र हीद विधीयते । इरा
पदमतस्तस्य या गीतिस्ता लभेत तत । सत्यमप्रगीतात्तद्धितो न त्वप्रगाण
विधीयते । पदोत्त'रविधिपर होद वाक्य नाप्रगाण प्रगाण वा स्पृशति, तत्तु
पदान्तर गिरापदस्थाने विहित स्यानापत्त्या तद्गीति लभमान न केन
चिद्वार्यते यज्ञायज्ञीयसाध्या हि स्तुति समस्तञ्च साम यज्ञायज्ञीय नैक
देशविकल, तत्र गिरापदे पदान्तरोपदेशाविशृत्तेर्यस्तद्गतोगीत्यश स गेयम-
पेक्षते, इरापदमपि सामसाध्यस्तुतौ सामसस्कार्यतामन्तरेण साधनी
भवितुमशक्त सस्कारक सामाशमपेक्षते तयोर्नैष्टाश्वदाधरथवत्सम्बन्ध
तस्मात्प्रगीत प्रयोक्तव्यम् ॥

इति शास्त्रदीपिकाया नवमस्य प्रथम पाद ॥

---

## अथ द्वितीयः पाद आरभ्यते ॥

गीतीना सामनामता धिकरणम् ।

सू॰ सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥

साम–शब्दस्तद्विशेषवचनाश्च रथन्तरादिशब्दा न प्रगीतमन्त्रस्य

---

१ तद्विधानाच्च प्रगाणमिति पा ।
२ पदान्तरविधिपरमिति पा ।

याचका' किन्तु गीतिमात्रस्यैवेति सप्तमे यदुक्तं तदेवेदमुत्तरविवक्षया स्मार्यते, एवं वा योऽयमूहो नामग्रन्थविशेषश्छन्दोगैः पठ्यते कयानश्चित्रा आभुवो वा'' इत्यादि स किं नित्योऽथानित्यो वा पौरुषेय इति, कर्तृस्मरणा भावादध्ययनाध्यायाद्याचाराच्छ्रूयमाणगुरुमुखाच्च प्रतिपत्तेर्वेदत्वप्रा प्तावुच्यते कल्पसूत्राख्यानादनित्यत्वं, न ह्यध्ययनसिद्धत्वोहस्य घटते, किं च यद्योन्या तदुत्तरयोर्गायतीत्यतिदेशवचनाद्योनावध्ययनसिद्धयोरुत्तरयो रनुष्ठानावगमात् पौरुषेयत्वं विस्पष्टं, न हि सिद्धत्वप्रयोगस्य यद्योन्या तदुत्तरयोरिति वादो घटते, कर्तुस्तु प्रत्यवायनादरादप्युच्यते, न ह्यत्र पुरुषप्रत्ययाधीनमनुष्ठानं वचनादेवोत्तरयोर्गानसिद्धिः, ऋक्सामान्यस्य पृथक् पृथक् वेदत्वात्तत्त्वपि सत्त्वस्य पौरुषेयत्वे दुष्प्रापाभावाद्य, तस्मा त्पौरुषेयशास्त्राणां सर्वशास्त्राणां त्यक्तव्यमिति न्यायात् कीदृशमनुष्ठानं भवतीति चिन्तनीयम् ॥

तत्र सकलसंस्कारकर्मता धिकरणम् ।

सू० कर्म वा विधिलक्षणम् ॥ २ ॥

सामानि किमुत प्रधानभूतानि? उत सत्संस्कारार्थानि गुण भूतानीति विचारः, तत्राकर्मकालप्रयोगात् प्राधान्यं संस्कारार्थत्वे ह्यक्षरा भिव्यक्तिरेव कार्यं स्यात्सा च कर्मकाल एवोपयुज्यत इति अकर्मकाले प्रयोगो न स्यात् । ननु वचनादकर्मकाले गानं भविष्यति "गर्भाष्टमे वर्षे उपनयीत श्रावण्यां पौर्णमास्यामुपाकृत्य स्वाध्यायमधीयीते"ति एवं सर्वं दृष्टार्थत्वेन वचनादापद्यते न ह्यकर्मकाले प्रयुक्तं साम कर्मोपयोगिनीमभिव्य क्तिमनु भवति कर्तुम् ॥ यथादृष्टरूपं संस्कारास्तेषां ह्यकर्मकाले संस्कृताना कर्मकाले पुनः संस्कारोऽनर्थक इति क्रतुमध्ये सामानि न प्रयुञ्जीरन् । यथा कर्मकाले प्राधान्यं कर्मकाले तु संस्कारत्वादुद्वेगमन्तस्यात्प्रधानकर्म सा भवति प्रयोग फलार्थे, क्रतुमध्ये तु क्रतोः[1] पारार्थ्यादुपकारक इति प्राप्ते उच्यते "यदक्षराणामभिव्यक्ति साम्ना दृष्टं प्रयोजनम् । अक्षरैश्चाप्यभिव्यक्तैः स्तुति क्रियदृष्टोदिता । एवं दृष्टे फले लब्धे नादृष्टफलकल्पना । ननु प्रार्थिनियुक्त

१ क्रतावारादुपकारक इति पा० ।

स्यादक्षराणां न संस्क्रिया सक्तूनामिव होमेन नैवं दृष्टफलत्वतः । प्रयोजनं न सक्तूनां दृश्यते श्रूयते ऽपि वा । यथोक्तं भाष्यकारेण "न होमसंस्कृतानां सक्तूनां प्रयोजनं श्रूयते नापि दृश्यत" इति, दृश्यते त्वक्षराणां प्रयोजनमिति वैषम्यं प्रयोजनवत्त्वं संस्कार्यत्वे हेतुर्न विनियोगः, तथाच ग्रहणाविवक्षणसम्यगुच्चारणानामविनियुक्तानामपि मन्त्रप्रकाशनसंस्कार्यत्वमिष्टम् । अपि चोत्तरायत्ये क्रत्वर्थेन स्तोत्रक्रमेण वा पाठादस्त्येव विनियोगः तस्मात्संस्कारकर्माणि सामानीति, यत्तु कर्मकाले गानं वाचनिकं तच्छ्रुत्यर्थतया रथ-दृष्ट्यादियोग्यावत् ॥

तृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् ।

सू० तृचे स्याच्छ्रुतिनिर्देशात् ॥ ३ ॥

"एकं साम तृचे क्रियते स्तोत्रीयमि"ति श्रूयते तत्र संशयः किं व्यासज्य त्रिषु गानमुत प्रत्यृचं परिसमाप्ति ? मिति, तदर्थं च विचार्यते किमिदं त्रित्वं साम निर्वर्त्यकमुत स्तोत्राङ्ग ? मिति, तत्र साम क्रियत इत्येवं सामनिर्देशादित्युच्यते सामोद्दिश्य ऋग्गीतं त्रित्वमङ्गत्वेन विधीयते प्रधानभूतानामपूर्वार्थिकं सामसाधनत्वमस्त्येवेति तद्गतस्य त्रित्वस्य युक्तमेव सामाङ्गत्वं, वचनबलाच्च प्रतिप्रधानावृत्तिं बाधित्वा व्यासज्य गेयं, न हि प्रत्यृचं गीयमानस्य त्रित्वमङ्गं भवति, क्रियत इत्यनेनाभ्यासलक्षणा च स्यात् प्रत्यृचं गाने, तस्माद्व्यासज्येति प्राप्ते उच्यते । "स्तोत्रीयस्य हि साम्नोऽयं श्रुतसम्बन्ध उच्यते । स्तोत्रसाधनभूतं च स्तोत्रीयमिति भण्यते । साम्नः स्तोत्राङ्गभावश्च स्तोत्रसाधनसंस्कृतेः स्तोत्रसाधनता चर्चा प्रत्येकं न तु संघशः । यदि त्रित्वसम्पादनाय व्यासज्य गीयते ततो रथन्तरं पृष्ठं भवति यज्ञायज्ञीयेन स्तुवीतेत्यादिभिर्यत्साम्नां स्तोत्रसाधनत्वं विहितं तन्न घटते स्तोत्रसाधनभूतशब्दाभिव्यक्त्या च साम्नः स्तोत्राङ्गत्वं, वाक्यं च स्तुतिबुद्धेः साधनं न वाक्यसमुदायः, तस्मात्प्रत्यृचं गेयम्, एवं च त्रित्वं सामाङ्गत्वेनाघटमानं स्तोत्रसाधनपरिच्छेदेन विधीयमानं स्तोत्रस्यैवाङ्गत्वेन विधीयते, तद्विधानेन प्राप्तं त्रिषु गानं तृचे क्रियत इत्यनेनानूद्यते, अनुवादत्वाच्च करोतेरभ्यासलक्षणा न दोषः ॥

समास्वेव त्रिषु ऋक्षु गानाधिकरणम्।

**सू० तदभ्यासः समासु स्यात् ॥ ४ ॥**

त्रिषु प्रत्येकं गीयमानं किमनियमेन समासु विषमासु वा गेयम्? उत समच्छन्दस्कास्वेवेति संशये विशेषाश्रवणादनियमे प्राप्ते-त्रिर्वि शेषपरिहाराय [४] समास्वेव स्यात् ॥

उत्तरयोर्गायतीत्यत्र उत्तराग्रन्थसमधीतयोरेव ऋचोर्गानाधिकरणम्।

**सू० नैमित्तिकं तू[१]त्तरात्वमानन्तर्यात्प्रतीयेत ॥ ५ ॥**

'यद्योन्यां तदुत्तरयोर्गायति' इत्यत्र संशयः, किं योन्युत्तरयोरुत्तराग्रन्था धीतयोर्वा गेयं? उतोत्तराग्रन्थाधीतयोरेवेति? तत्रोत्तर-शब्दस्य सम्बन्धि शब्दत्वाद्योनेः परत्र पठिता सैवोत्तरा, ततश्च योनिपाठापेक्षया रथ न्तरयोनेः परतो बृहद्योनेः पठितत्वात्त[२]स्या गानम् उत्तराग्रन्थे तु रथन्तरस्य योनेः परतो न त्वावाँ अन्यो दिव्य इत्यस्याः पाठात्तस्या गानम्, अतो विकल्पः, द्वयोरपि रथन्तरयोन्यपेक्षयोत्तरत्वादिति प्राप्ते ब्रूमः, यद्यप्येव सम्बन्धिशब्दो लोके तथाऽप्युत्तराग्रन्थे संज्ञारूपेण प्रसिद्धिस्तत्र संज्ञायाश्च स्वार्थानपेक्षवृत्तित्वात्सापेक्षवृत्तेः सम्बन्धिशब्दाद्बलीयस्त्वं प्रकरणपाठाच्चो त्तराग्रन्थ इत्यहुः, तस्मादुत्तराग्रन्थाधीतास्वेव गेयम्, एवं वा द्वादशाहे पार्ष्ठिकं चतुर्थमहः एकविंशं षोडशी वैराजं सामेति श्रुतं, तत्र च वैराजं नाम बृहत्सामातिज[३]'गतीषु स्तुवत' इति श्रूयते, तच्चातिजगत्यामुत्पन्न वि ग्रहा• एतन्न इति उत्तरे द्वे बृहत्यौ नेमि नमन्ति चक्षसेत्याद्ये तत्र तृचे गाने क्रियमाणे संशयः किमतिजगत्यौ द्वे आनीय समासु गानम्? उत बृहत्या एकयाऽऽहृत्य विषमासु गानं? किमिति, संशयवि[४]शेषपरिहारायातिजगतीषु स्तुवत इति चातिजगती बहुत्वानुग्रहाय समासु गानम्, बृहत्योस्तूत्तराग्रन्थपठि तयोः कृत्स्नार्थत्वात्तत्परित्यागे तयोरानर्थक्यादेकविंशसम्पत्तये च एकैकस्याः

१ नैमित्तिकं तूत्तरात्वमानन्तर्यादिति पा०।

२ तस्याः गानमिति तु पा०।

३ जगतिषु इति ह्ला पा०।

४ अत्रैकस्मिन् पुस्तके संशयविशेषपरिहारायेति दृश्यते पाठस्तथापि संशयवि शेषपरिहारायेत्येव पुस्तकपाठो माधवोक्तार्थानुरोधाद् भाष्यानुसाराच्च ॥

तृचे सप्तकृत्वोऽभ्यस्यमानायामभ्यासापेक्षयाऽतिजगतीवत्त्वादनुवादम-रूपस्य वर्तमाननिर्देशस्योपपत्तेर्विषमासु गानम्, ॥

बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् ।

सू० प्रागाथिकं तु ॥ ६ ॥

ज्योतिष्टोमे बृहद्रथन्तरे बृहत्योरुक्ते "अभि त्वा शूर नोनुमस्त्वामिद्धि हवामहे" इति, तयोः पङ्क्ती उत्तरे न त्वावाम् अन्यो दिव्यो न पार्थिवः स त्वं नश्चित्रेति, तत्र श्रूयते न वै बृहद्रथन्तरमेकच्छन्दो यत्तयोः पूर्वा बृहती ककुभावुत्तरे इति, तत्र किं पङ्क्ती परित्यज्य द्वे ककुभावानेतव्ये? उत योनिमुत्तराञ्च प्रग्रथ्य ककुभावुत्तरे सम्पादनीये इति संशयः, तत्र प्रग्रथनेन मुख्यककुप्संपत्त्यभावात् अक्षरसामान्यमात्रेण गौणत्वापत्तेस्तृचगानस्य च[1] ककुबन्तरेणासामञ्जस्यादन्यासां ककुभामानयनम्, उच्यते प्रगाथस्मरणात्प्रगाथसमाख्यानात्पङ्क्त्योरुत्तरात्वेन पाठस्यात्यन्तानर्थक्यापातात्स्यादं पुनरारभेत इति च दर्शनात्तृचगानस्य च सामान्येन विहितत्वाच्च प्रगाथेऽप्यन्तदोषाभावात्प्रग्रथनम्, एवं वा रैवतयौधाजये बार्हते तृचे भवतः तयोश्च पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिरिति, तत्रापि पूर्ववदुत्पत्तिबृहत्यानीय तृचसम्पादन? मुत पठितयोरेव प्रग्रथन?मिति संशये तत्रैव विशेषतः स्तृचे भवत इति तृचश्रवणादन्यागमनं प्रगाथस्मरणसमाख्योत्तरापाठलिङ्गदर्शनैस्तु प्रग्रथनम्, एवं वा श्यावाश्वान्धीगवे[2] आनुष्टुभे तृचे भवत इति तयोः पूर्वानुष्टुबुत्तरे द्वे गायत्र्यौ, तत्राप्यन्ययोरनुष्टुभोरागमनं पठितयोरेव वा प्रग्रथनेनानुष्टुप्त्रयं संपाद्यमिति विचारः, लिङ्गान्तरप्रदर्शनार्थं त्विदं व्याख्यानान्तरं न तु काचिदधिका शङ्काऽस्ति, एवं वा गवामयने श्रूयते "चतुर्थस्मैन्द्राबार्हताः प्रगाथा" इति, तत्र किं तिसृषु ऋक्षु गान? मुत द्वयोर्द्वयोः प्रग्रथनेने?ति संशये तृचप्रापिचोदकानुग्रहाय तिसृषु स्यात्प्रग्रथने हि न समञ्जसं तृचत्वम्, असति प्रग्रथने कथं प्रगाथवचनम्–ऐन्द्राबार्हताः प्रगाथा इति ऋक्प्रवचनाभिप्रायमिति ब्रूमः, प्रथमे तृचे गीत्वा, तस्मात्तृचाद्द्वैकामृचमुपादायापरे द्वे ऋचौ गृहीत्वा गीयते पुनरप्येवमन्यत्र सति तृचगानं

१ तृचगानस्य च ककुबन्तरेणेति पुस्तः पाठः ।
२ श्यावाश्वान्धीगवे इति तु पा० ।

प्रगाथ-शब्दस्तोभयमनुगृहीतम्भवति नैतदेवम् "अन्या अन्या ऋचो भवन्ती"ति वचनादेकस्यामृचि द्विर्गानं सम्भवति, तस्माद् द्वयोः प्रग्रथनम् ॥

गीतिसम्पादकानामन्तरविकारादीनां विकल्पाधिकरणम् ।

सू० अर्थैकत्वाद्विकल्पः स्यात् ॥ ७ ॥

छान्दोग्ये तलवकारादिसहस्रसामशाखागतानां गीतिप्रकाराणामेकार्थत्वाद्युगपत्प्रयोगासम्भवात्तदनुरोधेन च सामाश्रुतेरन्याय्यत्वात्सिद्ध एव विकल्पः सामप्रसङ्गाद्विस्पष्टीकाराय दर्शितः ॥

ऋचा स्तुवते साम्ना स्तुवते इति विधिना ऋच एव स्तवविधानाधिकरणम् ।

सू० अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ८ ॥

क्वचिद्विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि तेषां च न प्रकृतितः किञ्चित्साधनं प्राप्नोति, प्राकृतानां गायत्ररथन्तरादिसाम्नां प्राकृतेषु बहिष्पवमानादिस्तुतिषु निराकाङ्क्षाणामप्राकृतेषु प्राप्त्यभावात् तेन तानि साकाङ्क्षाणि, तत्रेदं श्रूयते 'यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते तदसुरा नान्ववायन् य एवं विद्वान् साम्ना स्तुवीतेति तत्र ऋग्ग्रहणमगीतस्वरूपप्रगीतायाः सामोपदेशेनैव सिद्धत्वात्, साम्ना स्वराभिव्यक्तिद्वारैव स्तुतिः क्रियते न साक्षात्तेन साम्ना स्तुवीतेति सामाभिव्यक्तैर्वर्णैः स्तुवीतेत्यर्थः, यत्र चेदमगीतपर्युदस्तरूपं तत्र सन्देहः किमृचा साम्ना वा स्तोतव्यम्? उत साम्नैवेति द्वयोर्वचनाद्विकल्पप्राप्तौ उच्यते साम्नाम् उपसंहारे विस्पष्टप्रशंसावचनेन विधेयत्वावगमादृक्स्तोत्रेणासुरागमनिन्दया सामप्रशंसार्थं, तस्मात्साम्ना स्तोतव्यम् एव वा सामवेदे किञ्चित्प्रकृत्य यत् सहस्रमानस्य तृतीये प्रगीतानि पठितानि अप्रगीतानि तत्र श्रूयते "यद् सहस्रमानस्य स्वेतयाऽऽहवनीयमुपतिष्ठत" इति तत्र प्रगीतया अप्रगीतया वोपस्थातव्यम्? उत प्रगीतयैवेति विचारे विधेयाभावादनियमः. अप्रगीतायाः प्रगा-

न्यायं। तेन सा प्रयोजनमपेक्षमाणा क्रतुना गृह्यते, उपस्थाने च विनियुज्यते एतयेति सर्वनाम्ना परामृश्यते, तस्मात्प्रगीतैव ग्राह्या, एवं वा सामप्रसङ्गान्मन्त्राणां स्वरश्चिन्त्यते मन्त्रा हि क्वचित्त्रैस्वर्येणाधीताः क्वचिच्चातुःस्वर्येण, तत्र कर्मसु किं त्रैस्वर्यचातुःस्वर्ययोः समुच्चयः विकल्पो वा। अथोभयहानेनैकश्रुत्या प्रयोग इति संशयः, तत्र समुच्चय इत्युपक्रममात्रं गीत्युपायविरस्तत्वात् तद्वदेव तु विकल्प इति पूर्वः पक्षः, तानो यज्ञकर्मणीति स्मृत्यनुमिताद्वचनादेकश्रुत्यम्, अर्थावगमार्थं तु स्वराध्ययनं स्वरविशेषाधीनत्वादर्थविशेषाणां, "बहुव्रीहौ प्रकृत्या पूर्वपद"मित्यादिवचनात्तस्मात्तानेन प्रयोगः ॥

रथन्तरबृहद्योर्गायतीत्यादौ उत्तराग्रन्थवशेन गानाधिकरणम्।

सू॰ सामप्रदेशे विकारस्तदपेक्षः स्याच्छा[1]स्त्रकृतत्वात् ॥ ९ ॥

उपोद्घातं समाप्य प्रकृतमिदानीं साम्नामूहं विचारयति रथन्तरयोर्गायतीत्यादिभिः रथन्तरे गीयमानानि किमूहितव्यानि? उत ने? ति, यदि योनिग्रन्थवशेन गानं यस्मिन् प्रदेशे योनावा[2]यीभावस्तस्मिन्नेवोत्तरास्वपि संध्यक्षरे उत्तरयोरायीभावस्ततो नोहः। अथ तूत्तराग्रन्थवशेन गानं यस्मिन् प्रदेशे संध्यक्षरवशेन योनावायीभावो योनौ ततः प्रदेशान्तरे यत्र संध्यक्षरं तत्रायीभावस्तत्र ऊहः। किं प्राप्तं योनिग्रन्थवशेन, कुतः योनावेकारं निवर्त्याकार ईकारयोरुच्चारितः तत उत्तरयोरपि तद्गानपतितं वर्णं निवर्त्याकारेकारावुच्चार्यौ, किं च नात्र कार्यमुखेन साम्नः प्राप्तिः रथन्तरादिस्वरूपस्यैवातिदेशात्तेन दशमाद्यपूर्वपदन्यायेन सामस्वरूपमुत्तरयोः प्राप्तमविकृतस्वरूपमेव तस्मात्कृतमप्राकृतं दृष्टमदृष्टं वा कार्यं कुर्यात्तस्मान्नोहः साम्नामिति प्राप्ते ब्रूमः, यदि ह्येकारं लुप्त्वा ऽवर्णेवर्णावुच्चारितौ ततो भवेत् यथा भवानाह, न त्वेतत्किं तर्हि एकारो नाम न वर्णान्तरम् अवर्णेवर्णौ संहतावेक[3]भावमापन्नावायीभावेन विश्लेषितौ दर्शितौ प्रत्यक्षं ह्यवर्णेवर्णावेकारे प्रत्यभिज्ञायेते, तस्मादुत्तरयोरप्येकार एव, यत्र तत्रस्थोऽप्यायी-

---

१ प्रकृत्यादिति तु पा॰ ।
२ आईभाव इति तु पुस्त॰ पाठः ।
३ संहतावेकभावमापन्नाविति तु पुस्तकस्थः पाठः ।

भावेन विश्लेषणीय. एवमृगक्षराभिव्यक्त्या स्तोत्रं साम्ना संपाद्यते ना-
न्यथा। यद्यपि च सामस्वरूपस्यातिदेशस्तथाऽपि स्तोत्रसाधनतयाऽतिदि-
श्यते, "एकं साम तृचे क्रियते स्तोत्रीय"मिति वचनात्स्तोत्रसाधनता चाक्-
षराभिव्यक्तिद्वारा, न च सन्ध्यक्षरादन्यस्यायीभावः क्रियमाणोऽक्षराभिव्यक्तिं
करोति, एवं सर्वत्र, तस्मात्प्रतिवर्णवशेन गानादस्त्यूहः साम्नाम् ॥

उत्तरयोः स्तोभानतिदेशाधिकरणम्।

सू० स्तोभस्यैके द्रव्यान्तरे निवृत्ति-
मृग्वत् ॥ १० ॥

सामातिदेशे किं स्तोभानामतिदेशोऽस्ति नेति संशये सामभ्यो
भिन्नत्वात्स्तोभानामृगक्षराणामिव नातिदेशः भिन्नानामपि गीतिकाल-
परिच्छेदकत्वेन सामाङ्गत्वात्तदतिदेशादेवातिदेशः, सामानि हि योनौ-
योनौ गीतान्यक्षराण्यभिव्यञ्जयन्ति तेन दृष्टमेव स्तुतेरुपकारं कुर्वन्ति स्तोभास्त्व-
क्षराभिव्यक्तिनिरपेक्षेण स्वरूपेण स्तुत्यौपयिकमेवादृष्टं कुर्वन्ति, तद्यदि
स्तोभा नातिदिश्येरन् तर्हि तेषां गीत्यंशस्य लोपात्तत्कृतोपकारस्य हान्या
वैगुण्यं स्यात्, तस्मादतिदिश्येरन्, ऋगक्षराणां तु प्रधानत्वान्न सामवशा-
दतिदेशः ॥

स्तोभलक्षणाधिकरणम्।

सू० अधिकं च विवर्णं च जैमिनिः
स्तोभशब्दत्वात् ॥ ११ ॥

प्रसङ्गात्स्तोभलक्षणमुच्यते यदृगक्षरेभ्योऽधिकं विवर्णं च किंचित्-
तत्स्तोभ-शब्देनोच्यते ॥

नीवारादिषु प्रोक्षणाव-
घातानुष्ठानाधिकरणम्।

सू० धर्मस्यार्थकृतत्वाद् द्रव्यगुणवि-
कारव्यतिक्रमप्रतिषेधे चोदना-
नुबन्धः समवायात् ॥ १२ ॥

प्रकृतिषु व्रीह्यादिषु श्रुता प्रोक्षणावघातादयो न तत्स्वरूपप्रयु-
क्तास्तन्मात्रापूर्वार्थभाविनः किं तु व्रीहिभिर्यजेतेत्यादिविहितसाधनविशेष-
द्वारेणापूर्वभावनार्थाः, तथा ह्याग्नेयोऽष्टाकपाल इति पुरोडाशद्रव्यको-

ऽग्निर्देवत्यो यागो विहितः तदनुवादेन व्रीहयो विहिताः पुरोडाशप्रकृति-
त्वेन प्रतिपद्यन्ते,—तदयमर्थः व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति ततः
पुनराह यैर्यजेत तान्व्रीहीन्प्रोक्षतीति, ततश्च सर्वैरुपसंह्रियमाणैरयमर्थः
सम्पद्यते प्रोक्षणसंस्कृतैरवघातवितुषीकृतैश्च व्रीहिभिः पुरोडाशं कृत्वा तेन
यजेतेति, अयमेव वाक्यार्थः पारमार्थिकः, व्रीह्यादिवाक्यार्थो ह्यस्यैवोपाय-
भूतः पदार्थस्थानीयः, एवं चैवाग्नेयादिभावनायाः शेषभूतः प्रोक्षणादीत्थं-
भावस्तद्विकारेष्वतिदेशेन नीयते, तत्र नैवारे चरौ पुरोडाशस्थाने चरो-
र्निवेशात् व्रीहिस्थाने च नीवारनिवेशात् इतरस्य समस्तस्य यथाऽतिदे-
शमवस्थानान्नैवारं चरुं निर्वपेदाग्नेयमित्यस्य श्रुतानुमितैकदेशनिष्पन्नस्य
नैवारचरुविधेरयमर्थो भवति प्रोक्षितैरवघातवितुषीकृतैर्नीवारैश्चरुं कृत्वा
तेन यजेतेति, तेन व्रीह्यादिस्थानापन्नेषु नीवारादिषु सिद्ध ऊहः । स्थाना-
पत्तिस्तु कथमवगम्यते इदमस्य प्राकृतस्य कार्यं यथेत इदमस्येति तत्सद-
र्शनार्थमिदमधिकरणं, तत्र पूर्वपक्षवादी नीवारमध्वयननखपरिधीरापदानां
व्रीहिपहहोलूखलमुसलयूपगिरापदस्थानापत्तौ प्रमाणमपश्यन्न तेषु तद्धर्मा
भवन्तीति मन्यते, सिद्धान्तस्तु नीवाराणां तावत्स्पष्टमेव व्रीहिकार्ये तण्डु-
लनिर्वृत्तौ सामर्थ्यं, सामर्थ्यानुसारी च शब्द इति नैवार इति तद्धितो
विकारार्थे इति विरचीयते, चरुश्च देवतासंयोगात् पुरोडाशस्थानापन्न
इति तत्प्रकृतिभूता नीवारा व्रीहिस्थानापन्ना भवन्ति, तथा मध्वयनं
पहहाभावे तत्कार्यस्य साधनापेक्षायां विधीयमानं कार्यापेक्षं सत् पहह-
कार्यमेवावलम्बते, इदं च पहहाभावे मध्वयन विधीयत इति कृत्वा
विज्ञातं, तेनाभावे विधिरपि कार्यापत्तौ प्रमाणं, तथा नखैस्तरवहनंत्रायपू-
तानामिति किं नखैरेवयनमत्यन्तस्तुषविमोचनादतो नखानामुलूखलमुस-
लकार्यापत्तिः परिधौ पशुं नियुञ्जीतेति । विस्पष्टमेव यूपकार्ये नियोजने
परिधिर्विधीयते तथा यस्मातिविध्य यद्विधीयते न गिरा गिरेति ब्रूयादैरं कृत्वो-
द्गेयमिति तत्रापि तत्कार्यापत्तिः गिरापदेऽपि हि निवृत्ते तत्कार्यं साध-
नमपेक्षते, इरापदमपि विधीयमानं कार्यापेक्षं गिरापदकार्येण साधनापेक्षेण
सम्बध्यत इति गिरापदस्थानापन्नमिरापदं तत्संस्कारिकां गीतिं लभते ॥

परिधौ यूपधर्मानुष्ठाना-धिकरणम् ।

सू० तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् ॥ १३ ॥

परिधौ पुनराक्षेपः नीवारादयो हि कार्यार्थतया विधीयमाना युक्तं यत्कार्यार्थान् व्रीहिधर्मान् लभन्ते, परिधि पुनरग्निपरिधानार्थेनोत्पन्नो न नियोजनार्थेन परिधानार्थ एव तु तस्मिन् वचनात्पशुर्नियुज्यते प्रकृतौ च कार्यार्थो धर्मास्तत्रोपभूते साधनेऽनुष्ठिता नाशिवभूते परिधौ भवितुमर्हन्ति यूपेऽत्यस्यर्थाश्च परिव्याणादयो, न चेह यूपोऽस्ति अयूप एव हि परिधौ पशुर्बध्यते तेनार्थलोपादपि न परिधौ तक्षणे वाल्यामिव यूपधर्माः कर्तव्या इति प्राप्ते ब्रूमः—यद्यपि परिधानार्थेन परिधित्वादि-सत्तथाऽपि नियोजने विनियोगात्पुरोडाशकपालस्येव तुषोपवापार्थत्वम-स्त्येव, यद्यपि तादर्थ्यं नास्ति तथापि नियोजनसाधनत्वात्साधननिर्वृत्तिनो धर्मान् लभेतैव, न हि तादर्थ्यप्रयुक्तधर्माः किन्तु साधनत्वप्रयुक्ता-व्रीहिभिर्यजेत यूपे पशुं बध्नातीत्यादिभिर्हि साधनत्वेन विधीयमाना व्रीह्या-दयो धर्मैः प्रोक्षणपरिव्याणादिभिः सम्बध्यन्ते, तादर्थ्यं तु सदप्यव्याप्तं न धर्मान्वय प्रत्यते, न चोपयुज्यते तादर्थ्ये धर्माणा कार्ये गच्छता तत्साध-नमेव द्वारमपेक्षितमस्ति च परिधेरपि साधनत्वं, न च यूपाख्यमेक किं-ञ्चिदस्ति यदुत्पत्त्युपयोगिन परिव्याणादय. परिधौ लुप्तार्थाः स्युः, छेद-नादिविधयो हि सर्वे परस्परानपेक्षाः काष्ठगत दृष्टमदृष्टं वा यथायथ कार्यं गमयन्ति, सर्वाणि च तानि कार्याणि नियोजनस्याङ्ग, तत्र परिधा-वसम्भवता छेदनादीना लोपेऽपि सम्भवन्त परिव्याणादयो न लोपनीयाः यले वाल्यामपि अञ्जनपरिव्याणादयो भवन्त्येवेति वक्ष्यते, तस्मात्परिधौ यूपधर्माः कर्तव्या. ॥

यत्नादौ प्रकृतौ यागधर्मानु-ष्ठानाधिकरणम् ।

सू० परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ १४ ॥

१ नभत इति पा ।

अभ्युदयेष्ट्यां दधिशृतयोः किं प्रणीता धर्माः कर्त्तव्या नेति चिन्तायां प्रणीताकार्ये श्रपणे तयोः परिधेरिव नियोजने विनियोगाभावादकरणमुत्पवनादीनामसत्यपि विनियोगेऽर्थादपि तावत्साधनत्वमस्तीति साधननिवेशिनो धर्माः कर्त्तव्याः ॥

बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् ।

सू० एकार्थत्वादविभागः स्यात् ॥ १५ ॥

ज्योतिष्टोमे बृहद्रथन्तरे पृष्ठसाधनत्वेन विहिते तयोर्धर्मा रथन्तरे प्रस्तूयमाने सम्मीलयेद्बृहति प्रस्तूयमाने[1] समुद्रं मनसा ध्यायेदित्यादयः किमुभयोरपि धर्माः उभयत्र कर्त्तव्याः? उत यथाश्रुति? इति संशये "उभयोरेककार्यत्वात्कार्यसाधनगोचराः । धर्मा द्वयोर्द्वयेऽपि स्युर्व्रीहिधर्मा यवेष्विव"। ननु चान्यथा रथन्तरेण स्तुतिः साध्यते क्रुष्टादिप्रकारेण अन्यथा च बृहता चित्रादिप्रकारेण तेन साधनभावप्रकारभेदात् साधननिवेशिनो धर्मा न सङ्कीर्यन्ते, यथा व्रीहिधर्माः सुत्यादिष्वेककार्येष्वपि न सम्भवन्ति कारकभेदादेवमिहापि, नैतदेवं यदैव हि हि रथन्तरं पृष्ठं भवतीति शास्त्रविहितं साम्नोऽक्षराभिव्यञ्जकत्वेन साधनत्वं तेनांशेन सम्मीलनादिधर्माः सम्बध्यन्ते साधनविधिना हि सम्बध्यमाना धर्मविधयो यदैव विधौ विवक्षितं साधनत्वं तेनैव सम्बध्यन्ते, क्रुष्टादिप्रकारभेदस्तु अविवक्षितो वस्तुस्वभावकृतो न धर्मव्यवस्थायां हेतुर्भवितुमर्हति । किञ्च आयमभिव्यज्यमानानामृचां भेदो यत्क्रुष्टादिरूपता साम्नोऽक्षराभिव्यक्त्यात्मकमेकरूपमेव साधनत्वं तस्मात्सङ्कर एवात्र युक्तो व्रीहियवादिधर्माणामिव संमीलनादीनामिति प्राप्ते ब्रूमः —'साम्नोर्व्यवस्थया यस्माद्विहितो मीलनादिषु । तस्माच्च सङ्करो युक्तो न त्वेवं प्रोक्षणादिषु'॥ व्रीहियवत्वं कारकविशेषोपनतमिति कृत्वा यवेष्वपि प्रोक्षणादयः क्रियन्ते, तदिहापि यदि रथन्तरबृहत्त्वं साधनविशेषोपनतं स्यात्तत एकमेव रथन्तरं बृहद्वा सर्वधर्मविधिषु गृह्येत यतस्तु क्वचिद्रथन्तरं क्वचिच्च बृहद्गृह्यते गुणमिह रथन्तरादिरूपमपि

---

१ प्रस्तूयमाने इति पा० ।

विवक्षितमिति गम्यते, तस्माद्व्यवस्था, किं च नानयोरेककार्यत्वम् अन्यद्धि पृष्ठं रथन्तरेण साध्यते, अन्यच्च बृहता । ननु पृष्ठैः स्तुवत इति वाक्येऽस्य-चपृष्ठानुवादेन बृहद्रथन्तरयोर्विधानादेककार्यत्वमनयोर्नैव यदि पृष्ठैः स्तुवत इत्युत्पत्तिः स्यात्तत उत्पत्तिगतया बहुत्वसङ्ख्यया बहूनि पृष्ठानि स्युः, तच्च सप्तमे यत्सूत्रभाष्यकाराभ्यां ज्योतिष्टोमे पृष्ठबहुत्वं नास्तीत्युक्तं तद्विरुध्येत, तस्माद्रथन्तरं पृष्ठं भवतीति रथन्तरविशिष्टे पृष्ठे विधीयते पृष्ठ-शब्दस्य स्तुतिवाचित्वं वाक्यशेषादुपवाक्यैस्त्ववगम्यते, तस्माद्भिन्नस्तोत्रसाधनत्वात्तयोस्तद्विशिष्टयोर्नाना धर्मोद्गामाज्योपघातादिधर्माणामिव व्यवस्थासिद्धिः, स्तोत्रयोरदृष्टार्थत्वात् प्रयाजादेरिव नैकार्थ्यं नानाकार्ययोश्च स्तोत्रयोर्वैसदृश्यात्प्रकृत्य, तस्मात्[1] धर्मसङ्करः ॥

कण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयाधिकरणम् ।

सू० अप्राकृते तद्विकारादिरोधाद्व्यवतिष्ठेरन् ॥ १६ ॥

टी० वैश्यस्तोमे श्रूयते "कण्वरथन्तरं पृष्ठं भवती"ति तत्र संशयः, किं कण्वरथन्तरे बृहद्रथन्तरयोः स्थानापन्नं कार्यमयुक्तात् रथन्तरधर्मान् यद्वद्धर्मांश्च यद्वद्विकल्पेन गृह्णाति? उत समुच्चयेने?ति "विकल्प एव तेषां स्यात् प्रकृतावसमुच्चयात् । मिथो ऽनपेक्षैस्तद्धर्मैः प्रकृतौ साधिता स्तुति ॥ उच्यते' पृथक्कृतनिर्देशसामर्थ्याद्व्यवस्था प्रकृतौ कृता । इह त्वप्राकृतं साम द्वयोः कार्ये विधीयते, तच्च द्वयोरपि कार्ये कुर्वद्धर्मानपि समुच्चयेन गृह्णातीति भाष्यकारः, वार्त्तिककारस्तु विकल्पमेव मन्यते, तथा हि यद्यपि साधनभूतायेनैव पृथक्स्तुतिधर्मेणा प्रयोजिका तथाऽपि तेषां सामद्वारस्थानात्ताभ्यां च वैकल्पिकत्वाद्धर्मोणां च पृथक्निर्देशेन व्यवस्थितत्वात् क्वचिद्धर्मा रथन्तरस्वरूपसाधनद्वारेण स्तुत्युपकं साधितवन्तः केचिद्बृहद्द्वारेण, एवमेव विकृतावप्यतिदेशेन कदाचिद्रथन्तरं स्वधर्मयुक्तं पृष्ठसाधनं कदाचिद्बृहत्, एवं प्राप्ते कण्वरथन्तरतयोः कार्यं विहितमपि यथाप्राप्तयोः कार्यं विधाना-

---

१ न सङ्कर इति पा ।

त्कदाचिद्रथन्तरकार्यं कदाचिद्बृहत्कार्यं विहितम्भवतीति न सर्वदा द्वयोः कार्यं, ततश्च कदाचित्कस्यचिद्धर्मान् गृह्णाति न सर्वदा सर्वान्, स्तुतिरपि प्रकृतावन्योन्यनिरपेक्षैर्धर्मैः साधिता, विकृतावपि न समुच्चयमपेक्षते किमुत यदा द्वे स्तुती प्रकृतौ वचनाद्विकल्पेनानुष्ठिते विकृतावपि तथैव प्राप्ते तयोश्च वचनाद्विकल्पेनानुष्ठीयमानयोः साधनत्वेन विधीयमानं कथं-रथन्तरमन्यतरधर्मान् गृह्णातीति व्यक्तमेतत्तस्माद्विकल्पः ॥

द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम् ।

सू० उभयसाम्नि चैवमेकार्थापत्तेः ॥ १७ ॥

यत्र बृहद्रथन्तरयोः प्रकृतितो विकल्पे प्राप्ते समुच्चयो विधीयते "समय उभे कुर्यादि"त्यादौ तत्र किमुभयो रथन्तरधर्मा उभयोश्च बृहद्धर्माः कर्तव्याः? उत रथन्तरे रथन्तरधर्माः बृहति च बृहद्धर्मा इति संशये द्वाभ्यामपि संहत्यैकैकस्य कार्यं साध्यत इति द्वयोरपि द्वयधर्मप्राप्ता उच्यते यद्येकैकस्य कार्यं द्वयं विधीयेत ततः स्यादेवं चोदकेन विकल्पेन प्राप्तयोः पृष्ठयोरिह । स्वधर्मयुक्तयोरेव समुच्चयविधिरयम् । एवं हि समुच्चयमात्रविधानाल्लाघवमप्राकृतकार्यता च मार्गेण कल्पिता भविष्यति । तस्मात्प्रकृतिवदिहापि धर्मा व्यवस्थिताः ॥

सौम्यादिषु पार्वणहोमाननुष्ठानाधिकरणम् ।

सू० पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि ॥ १८ ॥

"यजेत पार्वणौ होमौ जुहोती"ति तद्विहितयुग्मा पर्वदेवताभ्यो होमौ किं विकृतिष्वतिदिश्येते न? इति संशयस्तदर्थमिदं विचार्यते—किं पर्व-शब्दः कालवचनः कालेऽस्य देवता तस्य चापत्कार्यत्वादाराद्दुपकारको होमो? उताग्नेयादिसमुदायवचन समुदायदेवत्यो होमोऽतस्संस्कारार्थ इति "तत्र काले च तस्य मुख्यस्यासकालाभीज्येव गम्यते । दर्शादीनां कर्मसंख्यात्कर्मसंख्याऽपि च मुख्यता" ॥ दर्शादीनां कर्मस्य पर्व-शब्दः प्रयुज्यतेऽस्मिन्निति व्यधिकरण-व्युत्पत्त्या कालेऽपि मुख्यः, भावव्युत्पत्त्या कर्मण्यपि, तत्र प्रकरणात्प्रासङ्गि-कत्वाभावाच्च कर्मवचनमङ्गीकृत्य तत्संस्कारार्थता होमयोरध्यवसायः,

तेषां च कर्मणान्वयेनाभिहितानामग्नीषोमयोरिव व्यासक्तं देवतात्वं नैके
कशः तेन समुदायस्य देवतात्वात्तस्य च विकृतित्वाभावाद्धतद्विकारत्वाच्च
सौर्यादेस्तत्र होमयोरप्रवृत्तिः, समुदायविकारा हि सौर्यादयो न समुदा
यविकाराः ॥

दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् ।

**सू० उभयोरविशेषात् ॥ १९ ॥**

किमेतौ होमावुभावप्युभयोः पौर्णमास्यमावास्ययोः कर्तव्यावुत
विभज्य पौर्णमास्यां पौर्णमासीदेवत्योऽमावास्यायाममावास्यादेवत्यः? इति
तत्र प्रकरणाविशेषादुभावप्युभयत्रेत्याशङ्क्य संस्कार्यवशत्वात् संस्काराणां
सूक्तवाकन्यायेन निष्कर्षस्तेनैव च न्यायेन गतत्वाच्चेदमधिकरणमन्यत्र, पूर्व
स्यैव तु यथोक्तसूत्रस्वरूपमिदमुभयोरविशेषात् यदभीज्या वा तद्विषयाविति
कर्तव्यधर्मवान्तरकार्यनिरूपणं प्रस्तुतमिति तत्प्रसङ्गात्सर्वयोरवान्तर
कार्यं निरूपितम् ॥

समिदादीनां यागनामधेयताधिकरणम् ।

**सू० प्रयाजेऽपीति चेत् ॥ २० ॥**

समिधो यजति तनूनपातं यजतीत्येवमादिषु किं कर्मसम्बन्धिना
समिदादीनां देवतात्वेनाभिधानात्तत्संस्कारार्थं यागविधानम्? उतारादुपकार
कयागविधानम्? इति संशये पूर्ववत्सामर्थ्याविकल्पितया संस्कारविधिः,
द्वितीया च देवताऽभिधाने समर्थैव विष्णुं यजती त्यादिदर्शनादिति प्राप्ते
ब्रूमः "उद्देशपूर्वकस्त्यागो यजिना ह्यभिधीयते । त्यागे च नास्ति कर्मत्वं
देवतायाः कथञ्चन उद्देश्यमानत्वं तु कर्मत्व[1]व यागेऽप्युपचर्य विष्णुं यज
तीत्यादिनिर्देशः, न चेह विधावुपचारो युक्तः यागास्त्विह केवला विधी
यन्ते तेषां च श्रुत्यादिभिः कार्यविशेषानवगमात् प्रकरणेनारादुपकारकत्वं
समिदादिशब्दास्तु मन्त्रवर्णप्राप्तदेवता निमित्तीकृत्य नामधेयानि देवता
एव चानुवदन्ति न चानुवाद उपचारो दोषस्तस्मादारादुपकारकाः प्रयाजाः ॥

इति शास्त्रदीपिकायां नवमस्य द्वितीयः पादः ॥

---

१ त्यागे व्युपचर्यत पा० ।

श्यते इति प्रतिषिध्य पश्चादिदमुच्यते यद्येकमुपस्पृशेदित्यादि प्रतिषेधश्च रागप्राप्ते लौकिके वैदिकस्य विहितत्वेन प्रतिषेधानर्हत्वात्प्रतिषेध्यानुष्ठाने प्रत्यवायोत्पत्तेः प्रतीकारापेक्षाया प्रायश्चित्तविधिर्येक्षितार्थो भवति तस्माल्लौकिके प्रायश्चित्तम् ॥

द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तोहाधिकरणम् ।

सू० अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ ४ ॥

अग्नीषोमीयपशावेकवचनान्तः पाशमन्त्रः "अदितिः पाश प्रमुमोक्त्वेत"मिति तथा बहुवचनान्तोऽपि "अदिति पाशान्प्रमुमोक्त्वेतानि" इति तयोरग्नीषोमीये निवेशमुपरितने ऽधिकरणे वक्ष्यति तयोर्द्विपशुकेषु मैत्र श्वेतमालभेत वारुण कृष्णमित्यादिषु चोदकेन प्राप्तयोर्भवति सशय किमेकवचनान्तस्याप्रवृत्तिः? बहुवचनान्तस्यानूहेन प्रवृत्तिः? उत बहुवचनान्तस्याप्रवृत्तिरेकवचनान्तस्योहेन प्रवृत्तिः? उभयोरपि यथायथमूहेनानूहेन च प्रवृत्तिः? किं वोभयोरपि द्विवचनेनोहितयोः प्रवृत्तिः? रिति तत्रैकवचनस्य समवेताभिधायित्वेन विकृतावपि द्विसख्या वक्तु विकारः स्याद् बहुवचनस्य त्वेकस्मिन्नसमवेताभिधायित्वेन निर्देशमात्रार्थत्वाद् विकृतावपि तथैव सम्भवादनूहः, न चाविकारसम्भवे विकारो युक्त, तस्मादेकवचनान्तस्याप्रवृत्तिरितरस्य त्वविकारेण प्रयोग इति प्रथम. पक्षः, सकलाभिधानसम्भवे विकलाभिधानमन्याय्य, तस्मात्सख्याविशिष्टपाशप्रकाशनार्थमेकवचनान्तस्योहितस्य प्रवृत्तिः, बहुवचनान्तस्य त्वविवक्षितसख्याकपाशमात्रप्रकाशनेनासम्यगभिधानत्वादप्रवृत्तिरिति द्वितीय पक्षः, द्वयोरपि चोदकेन प्राप्तयोर्यथायथमूहेनानूहेन च विकल्पेन प्रयोग इति तृतीयः, गृह्णीम एतद्द्वयोः प्रवृत्तिरिति न तु बहुवचनस्यानूहस्तदपि द्वयोरसाधुत्वादूहितव्य प्रकृतावेकस्मिन् पाशे छन्दसि बहुवचनस्य प्रयुक्तत्वात्तथैवाङ्गीकृत न त्वेव द्वयोः प्रयोग छन्दसि दृष्टः, तस्मात्स्वायत्ते प्रयोगे सत्यसाधुप्रयोगासम्भवात् द्विवचन प्रक्षेप्तव्य तस्मादुभयोरूह इति सिद्धान्तः ॥

अग्नीषोमीयपशौ पाशैक-
त्वपाशबहुत्वाभिधायिमन्त्र-
योर्विकल्पाधिकरणम् ।

सू० विप्रतिपत्तौ विकल्पः स्यात्सम-
त्वाद्गुणे त्वन्याय्यकल्पनैकदेश-
त्वात् ॥ ५ ॥

पशावग्नीषोमीये पाशमन्त्रावेकवचनबहुवचनान्तौ तत्र बहुवचनान्ते
संदेहः किं प्रकृतावेवाग्नीषोमीये निविशते? उत बहुपाशकेषु पशुगणेषू-
त्कृष्यत? इति एकस्मिन् बहुवचनस्या[1]समर्थत्वादुत्कर्षे प्राप्ते ऽभिधीयते
"प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मण । उभयोः प्रकृतौ भावाद्वोत्कर्षो ऽ
स्यावकल्पते।पाशप्रातिपदिकार्थान्वितविभक्त्यभिहितकर्मकारकप्रकृतावपि
पाशकर्मकोन्मोचनाभिधानेन सम्भवादुत्कर्षं सहते, सङ्ख्यामात्रस्यासम्भव
इति गुणत्वाच्च प्रातिपदिकप्रधानभूतकारकबाधेनोत्कर्षुम्, अविवक्षिता
चेह सङ्ख्या पाशकर्माभिधानमात्रेण व्यवहारसिद्धेः, अतो निर्देशमात्रार्थं
बहुवचनं कर्ममात्रं तत्र विवक्षितम्, अतो ऽपि न सङ्ख्यावशेन मन्त्रोत्कर्षो
बहुवचनस्य त्वेकस्मिन् प्रयोगे ऽवयवबहुत्वाभिप्रायेण कान्वस ॥

दर्शपूर्णमासयोर्द्विपत्नीके
प्रयोगे पत्नीं सन्नह्येतिमन्त्रस्या-
नूहाधिकरणम् ।

सू० अपूर्वे त्वविकारो ऽप्रदेशात्प्रती-
[2]येत ॥ ६ ॥

दर्शपूर्णमासयोः "पत्नीं सन्नह्य"इति मन्त्रः किमेकद्विबहुपत्नीकेषु
प्रयोगेषु सर्वेष्वविकारेण प्रयोक्तव्यः? उत द्विबहुपत्नीकप्रयोगयोर्द्विवचनब-
हुवचनाभ्यामूहितव्यः? इति संशये, तत्रैकपत्नीके समवेताभिधायित्वसम्भ-
वादेकवचनमन्यत्राप्यविरुद्धत्वात् द्वित्वबहुत्वयोरूहः, नैतदेवं, यद्येकपत्नी-
प्रयोगाभिप्रायमाम्नानं स्यात्तत एकवचनस्य समवेतसङ्ख्याभिधानरूपस्य
सत्प्रतिपक्षरूपस्यासमवेतसङ्ख्याभिधानमिह विवक्षितमिति कृत्वा द्विपत्नीके
बहुपत्नीके च प्रयोगे समवेतसङ्ख्याभिधानार्थमूहेत, सर्वप्रयोगगता तु समाना
प्रधानस्यास्यार्थाभिप्रायेणेदमाम्नानं द्वयोर्बहुषु चैकवचनस्य सत्प्रतिप-
क्षभावाच्च समवेतसङ्ख्याभिधानरूपेण प्रयुक्तमिति वाक्यमव्यवस्थातु निर्देश

---

१ बहुवचनस्यासमवेतार्थत्वादिति पा ।
२ पत्नीमिति इति पा ।

मात्रार्थन्तु एकवचनमदृष्टार्थं चैकत्वमभिधातु प्रयुक्तमित्यापद्यते, ततश्च द्विबहुपशौके प्रयोगे एकवचनमेव प्रयोक्तव्यमित्यविकारः, न चैकवचनानुरोधेनैकपशौप्रयोगे मन्त्रोनान्यत्रेति वक्तव्यं पाशवत्प्रातिपदिकबलेन सर्वत्र प्रवृत्तेः सङ्ख्यायाश्चाविवक्षितत्वेनानेकपशौकालप्रयोगान्मन्त्रं व्यावर्त्तयितुमसमर्थाः तस्मात्सर्वत्राविकारेण प्रयोगः ॥

द्विपश्वौके विकल्पयागेऽपि पशौबहुत्वेति मन्त्रस्यानूहा- धिकरणम् ।

सू० विकृतौ चापि तद्वचनात् ॥ ७ ॥

विकृतौ पशौ-शब्दः किं द्विपशौकबहुपशौकप्रयोगयोरूहितव्यो नेति संशये प्रकृतौ द्वयोर्बहुषु च पशुषु एकवचनाम्नानसामर्थ्यात्तत्प्रयुक्त विकृतौ त्वाम्नानाभावात् द्विबहुत्वयोरेकवचनमसाधुत्वाच प्रयोक्तव्य, तस्मादूह नैव निर्द्देशमात्रार्थमदृष्टार्थं चैकवचन न तत्समवेतसङ्ख्याभिधानार्थमित्युक्तम्, अतो विकृतावपि तथैव कर्त्तव्यमित्यनूह, न चासाधुत्वं द्वित्वबहुत्वयोरेकवचनस्य छान्दसत्वात्, पाशे तु द्वयोर्बहुवचनप्रयोगस्य छान्दसत्वाभावादसाधुत्वं स्यादिति विशेषः ॥

सवनीयपशुमामानोऽपीमेव समानविधानत्व पाशे अपि इति मन्त्रे अनूहाधिकरणम् ।

सू० अभिगुः सवनीयेषु तद्वत्समानविधानाच्चेत् ॥ ८ ॥

तृतीये ऽध्याये सङ्ख्यापशवः समानविधाना इति पूर्वपक्षे समानविधानस्य यदुक्तं तस्यैव प्रयोजनं पूर्वाधिकरणसिद्धमनेन सूत्रेण कथ्यते यदा समानविधानास्तदाग्नीषोमीयोऽस्यादिषु द्विबहुपशुकेऽपि सवनीयगणे प्रवर्त्तमानः पाश्मा इत्यधिगुप्रैषगत एकवचनान्त शब्दः पशौ-शब्दवदेव नोहितव्यः, विकल्पपक्षे तूहितव्यः । ननु समानविधानत्वे यथा पाश्मा इति पुंल्लिङ्गनिर्द्देशात्सारस्वत्यामप्रवृत्तिस्तथैकवचननिर्द्देशात् द्विबहुत्वप्रवृत्तिः स्यात्, नैव पुंल्लिङ्गस्य मेष्यामत्यन्तासम्भवात् युक्ता निवृत्तिरेकवचनन्तु प्रतिव्यक्तिगतैकत्वाभिप्रायेण गणेऽपि सम्भवात् नात्यन्तानुपपन्न, पाशानिति बहुवचनमिवावयवाभिप्रायेणोभयपन्नमिति नैतत्सम् । अपि च 'जात्याख्यायामेकस्मिन् बहुवचनं बहुषु चैकवचनं स्मर्यते

अतोऽपि न वचनयोरनुपपत्तिः, लिङ्गं त्वन्यलिङ्गे ऽत्यन्तानुपपन्नमिति वैषम्यम् ॥

नीवाराद्यौ व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहि-शब्दस्यानूहाधिकरणम् ।

**सू० प्रतिनिधौ चाविकारात् ॥ ९ ॥**

श्रुतस्य द्रव्यस्यापचारे नीवारादिषु प्रतिनिहितेषु व्रीहीणां मेधसुमनस्यमान इति व्रीहि-शब्द ऊह्येत नेति संशये नीवारादिषु व्रीहिशब्दस्यासामर्थ्यादूहप्राप्तावुच्यते यदि नीवारा व्रीहित्वसाधनं भवेयुस्ततस्तत्प्रकाशनार्थं नीवारपदं प्रक्षिप्येत न त्वेवं किं तर्हि नीवारगता ये व्रीह्यवयवास्ते ऽत्र साधनमित्युक्तं, ते च व्रीहिगता इव नीवारगता अपि व्रीहिशब्देनैव शक्यन्ते प्रकाशयितुमित्यविकारेण प्रयोगः ॥

द्विपशुयागे सूर्यं चक्षुर्गमयतादिति मन्त्रस्यानूहाधिकरणम् ।

**सू० संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ १० ॥**

ज्योतिष्टोमे ऽग्नीषोमीये पशावध्रिगुप्रैषे तत्र संसर्गिणो ऽर्थाः श्रूयन्ते 'सूर्यं चक्षुर्गमयतात्' इत्यादयस्ते द्विपश्वादिषु पशुगणेषु किं द्विवचनबहुवचनाभ्यामूहितव्या नेति संशये संसर्गिणा तेन प्रकृतौ ऽस्य तत्र संख्याव्यवहाराभावात् औपाधिको भेदव्यवहारः, तदिह चक्षुःशब्दस्य तेजोवचनत्वादसति च तत्र संख्याभावत्वे ऽधिष्ठानापेक्षत्वे च तयोर्द्वित्वेन द्विवचनप्रसङ्गात् पशूपाधिकमेकवचनम् अस्य शब्देन पशोरुपासन्यात्तदुपाधिकमेव विज्ञायते अतः पशुभेदेन पशुसंख्यावशेनोह इति प्राप्ते उच्यते अधिष्ठानाद्विर्गतं तेजः प्रदीपप्रभावदेकीभवतीति तदभिप्रायादेकवचनं न त्वौपाधिकं न चाधिष्ठानाभिप्रायमस्तु शब्दस्तयोः सूर्यगमनासम्भवात् द्वित्वात्तयोरेकवचनानुपपत्तेः, तस्माद्विर्गततेजोऽभिप्राय बहूनामपि च पशूनां सन्निहितानि निर्गतानि चाक्षुषाणि तेजांसि अनेकप्रदीपप्रभावदेकीभवन्ति तस्मादनूहः ॥

द्विपशुयागे अध्रिगुप्रैषे एकधास्य त्वचमाच्छ्यतादित्यधिकरणम् ।

**सू० एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ॥ ११ ॥**

तत्रैव एकधास्य त्वचमाच्छ्यतादिति श्रुतं, तत्रैकधा–शब्दः पशुगणेषु किमविकारेण प्रयोक्तव्य? उताभ्यासेन विकर्तव्य? इति संशय', तदर्थमिदं विचार्यते, किं प्रकृतौ येन प्रकारेणाभिधानं कृतं तेनैव प्रकारेण विकृतावपि कर्त्तव्य? मुतान्यथापि सम्भवति इति,? तत्र यद्यपि प्रकृतावेकत्वात् त्वचः साहित्याभिधानं न सम्भवतीत्येकप्रयत्नसाध्यत्वम् एकधा–शब्देनोक्तं नाव-यवश आच्छ्यतात्किं त्वेकधा एकेन प्रयत्नेनेति, तथाऽपि विकृतावप्येवोदका-नुपहाय शक्नोत्यन्त्यवान्देशतः कालतो वा साहित्यमेकधा गाः पादयतीति यदभिदधदविकारेणैव त्वगाच्छेदनं प्रकाशयिष्यतीति प्राप्ते ब्रूमः "प्रकृतौ यस्य शब्दस्य यादृशोऽर्थो निरूपितः। तादृगेवातिदेशेऽपि स हि कार्यपरो यतः" ॥ कार्यप्रधानो ह्यतिदेशो न शब्दस्वरूपपरः तेन प्राकृतमेकप्रयत्नसा-ध्यत्वं प्रत्येकं त्वचामभिधातुमेकधैकधेत्येवमभ्यसितव्यम् ॥

द्विवचनादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाविकरणम् ।

सू॰ मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्याय्यनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ १२ ॥

तत्रैव श्रुतम्, "उपनयत मेध्यादुर आशासानामेधपतिभ्यां मेधमि"-ति केषांचित्तु मेधपतये मेधमिति तत्र चतुर्द्धा संशयः किमुभयोर्विकृति-ष्वविकारः? उत द्विवचनस्य? देवतापर ऊहः? एकवचनस्य तु यजमानपरः? अथवोभयोर्यजमानपर? एव, अथवोभयोरपि देवतापर ऊह? इति तत्र मेधपति–शब्देन मेधस्य पशोः स्वामी यजमानो देवताभूतौ चाग्नी-षोमौ उभयेऽप्यभिधीयन्ते, तेन द्विवचनमेकवचनं चोभयमप्यन्याय्यनि-गदन्तस्मादनूह इति प्रथमः पक्षः, सम्भवत्पर्यवसाने नान्याय्यनिगदता युक्ता, तस्माद् द्विवचनान्तो देवतावचनस्तेनासौ देवताविशेषादूहितव्यः, एकवच-नान्तस्तु स्वामिवचनः स्वामिविशेषाविति द्वितीयः, एकोऽयं मन्त्रः शाखा-भेदेन क्वचिद्द्विधः समाम्नातस्तत्र यजमानपरत्वे मेधपतये यो मेधस्त-माशासाना इति सम्बन्धः, देवतापरत्वे मेधपतिभ्यामाशासाना इति,

नेदमेकस्य वाक्यस्य वचनव्यक्तिद्वयं सम्भवति, तस्मादुभाभ्यामपि यजमानस्य देवताया वा नियमेनाभिधानं, तत्र देवतापरत्वे सत्यग्नीषोमयोर्द्वित्वात् एकवचनमनुपपन्नं, यजमानपरत्वे तु द्विवचनं पत्न्यभिधानपरत्वेनावकल्पते, तस्मात्स्वामिपराद्भार्यापि स्वामिवशादूहितव्यावितीति तृतीयः, सिद्धान्तस्तु मेधमाशासाना इत्युक्ते किमर्थमाशासाना इत्यपेक्षा भवति, तत्र मेधपति-भ्यामाशासाना इत्यपेक्षितार्थपूरणाय सम्बध्यते, न च यजमानायाशास्यते तस्यैव हि स देवताभ्यामाशास्यते, तस्माद्देवतावचनमेकवचनन्तर्हि कथम् अग्नीषोमयोरुभयोर्व्यासक्तं देवतात्वं तेन देवतात्मनः तयोरेकत्वा-त्तदभिप्रायमग्नीषोमौ देवतेति द्विवचनं त्वधिष्ठानापेक्षत्वेन द्विवचनम् अधिष्ठानसद्भाववशादेकवचनं च देवतासद्भाववशाद्विकृतिषूहितव्यमिति ॥

बहुदेवत्यपशावपि एकवचनान्तमेधपतिशब्दस्य विकारस्याधिकरणम् ।

सू० नियमो बहुदेवते विकारः स्यात् ॥ १३ ॥

वैश्वदेवादिषु बहुदेवत्येषु पशुषु द्विवचनान्तस्य मेधपति-शब्दस्यो-हो ऽसन्दिग्ध एकवचनान्तोऽपि बहुदेवोहः, एकवचनान्तता तु निवर्तते? उताधिकारेण प्रवर्तते? इति चिन्तायामेकवचनस्य बहुत्वसामर्थ्याद्बहो-देवतारूपैकत्वात्तु प्रकृतिवदनूह इति पूर्वाधिकरणप्रयोजनमात्रमिदमधि-करणं न तु किञ्चित्प्रतिपाद्यमस्ति यद्वोत्तराधिकरणोपोद्घातत्वेन पूर्वा-धिकरणसिद्धमेवानुकीर्तितम् ॥

एकार्थान्याम् एकवचनान्तमेधपति-शब्दस्योहाधिकरणम् ।

सू० अर्थान्तरे विकारः स्याद्देवतापृथ-क्त्वादेकाभिसमवायात्स्यात् ॥ १४ ॥

आग्नेयं कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः" इत्यादिषु पशु-गणेषु किमेकवचनान्तस्याविकारः? उत विकारेण प्रयोगः? इति संशये गणा-भिप्रायेण पूर्ववदनूहं मन्यानस्योत्तरं 'देवतात्मनः एकत्वाद्विकारः पुरो-हिताः। तद्रूपस्य तु भिन्नत्वे कोनामोहं निवारयेत् ॥

॥ इति शास्त्रदीपिकायां नवमस्य तृतीयः पादः ॥

## अथ चतुर्थे पाद आरभ्यते ।

षड्विंशतिरस्य वङ्क्रय इत्यादौ समस्योहाधिकरणम् ।

सू० षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्य-।भिसम्बन्धो विकारात्समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥

तत्रैव षड्विंशतिरस्य वङ्क्रय इति श्रुतम् तद्धि पश्वादिषु पशुगणेषु चोदकप्राप्तं पञ्चधा सन्दिह्यते, किं षड्विंशतिरस्येत्युभयपदाभ्यासः ? उताभिकारेण प्रयोगः ? उत षड्विंशतिपदगतमेकवचनं द्विवचनबहुवचनाभ्यामूहितव्यं ? अथवा ऽस्येत्येतत्पदमभ्यसितव्यं ? आहोस्वित्सर्वपशुगता वङ्क्रीः समस्य तासामियत्ता वक्तव्ये ? ति, तत्र षड्विंशतिसङ्ख्याया अस्य–पदाभिधेयस्य च पशोरयं सम्बन्धस्तत्प्रधानमिदं वाक्यं ततः प्रतिपशु तत्सम्बन्धं प्रकाशयितुं षड्विंशतिपदमस्य–पदं वाभ्यसनीयम् अयमेवात्र प्रधानः पूर्वपक्षः, इतरे तु सम्भवमात्रेणोपन्यस्य दूष्यन्ते तत्र द्वितीयः पक्षः, प्रकरणभूतोऽयमदृष्टार्थो मन्त्रस्तस्मादविकारः, तृतीयस्तु यद्यप्यक्रमेण तथाऽपि शमितृणामनूनाधिकानोहरणाय पाठसंयोगः प्रकाश्यः स्मारयन्नदृष्टार्थं एव तत्र षड्विंशतिसङ्ख्या प्राधान्येन प्रकाश्या, तेन द्वयोः पश्वोः षड्विंशतिसङ्ख्ये प्रकाशयितुं षड्विंशती अनयोर्वङ्क्रय इति ननु षड्विंशति–शब्दे सङ्ख्याप्रधाने सङ्ख्येयेषु वङ्क्रिषु षष्ठी स्यात्तस्य, यथा सिद्धान्ते वङ्क्रीणां प्राधान्ये सङ्ख्याशब्दस्य लक्षणया सामानाधिकरण्यं तथा सङ्ख्याप्राधान्ये वङ्क्रि–शब्दो लक्षणया सङ्ख्यासामानाधिकरण्यं प्रतिपत्स्यते चतुर्थस्तु पशुप्रधानमिदं स हि चोदितः सङ्ख्या त्वचोदिता तस्मात् पश्वन्ताभिधेय पशुरेवात्र प्रधानः, तद्विशेषणं सङ्ख्या वङ्क्रयश्च षड्विंशतिवङ्क्रिकोऽयं पशुरिति ततश्चैकैकं पशुं भेदेन प्रकाशयितुमस्य–पदमभ्यसितव्यं सिद्धान्तस्तु वङ्क्रीः यत्ता प्रकाश्येह पाठसंयोगस्तस्य सिद्धये । ता इति प्रतिनिर्देशादपि तासां प्रधा

१ षड्विंशत्यादीति पा ।

षड्विंशतिरिति ब्रूयादित्यनुकीर्त्यते । न चतुस्त्रिंशदिति ब्रूयात् षड्विंश-
तिरित्येव ब्रूयादित्येकमिदं वाक्यं तेनैकोऽत्र विधिरितरोऽनुवादः, तत्र यदी-
दानीं षड्विंशतिर्विधीयेत ततश्चतुस्त्रिंशत्प्रतिषेधो नित्यप्रतिषेधवद-
नुष्ठेयः न त्वत्र षड्विंशतिपदमितरपदवच्छक्यं विधातुम् एवकारोपबन्धात्,
एवकारार्थविशेषणा हि ब्रूयादिति न स्वयं विधिसमर्थमेवकारार्थश्च निवृत्ति-
स्तस्मात् षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिरिह विधीयते, एवं कृत्वैव द्वैधमिति
शक्नोति विधातुमिति विशेषः, तेन चतुस्त्रिंशत्प्रतिषेधोऽत्र विधीयते, तश्च-
हि पदमात्रं प्रतिषिद्ध्येत न षड्विंशतिपदमनुवदितुं शक्यते प्राप्त्यभावात्, न हि
पठितायामृचि चतुस्त्रिंशत्पदे प्रतिषिद्धे षड्विंशतिपदस्य प्राप्तौ प्रमाणमस्ति
तस्मात्समस्ताया ऋचः प्रतिषेधः. तथा सति हि षड्विंशतिरित्येव ब्रूया-
दिति चोदकप्राप्तत्वात्सम्भवत्यनुवादः, शक्नोति च चतुस्त्रिंशदिति प्रती-
कग्रहणेनर्चं प्रतिषेद्धुं, नित्यवदेव स्वनाम्नात्वात् षड्धा न शक्यमिति वैषम्यं,
द्वितीयपूर्वपक्षवादी त्वाह प्राकृतेऽपि वचने क्रियमाणे षड्विंशतिरिति ब्रूया-
दिति वचनादेवमेव वक्तव्यमन्तरेण समस्य वचनमिति, तदिदं मन्दं, न
ह्यनेन षड्विंशतिपदं विधीयते चतुस्त्रिंशत्प्रतिषेधपरत्वाद् वाक्यस्य, तद्विधौ
वाक्यभेदादेव शब्दोपबन्धाच्चाशक्यमिदं विधातुमित्युक्तं, तस्मादेषोऽत्र
वाक्यार्थः—न चतुस्त्रिंशदिति पठेत् ब्रूयात्किन्तु यथाप्राप्तमधिगुवचनमे-
वेति, तस्मात्समस्य वचनं, पक्षे च वैशेषिकमूहवचनम् ॥

अग्नीषोमीयपशावुरूक-श-ब्देन वपाभिधानाधिकरणम् ।

सू० अनिष्टसन्निधानादुरूकेण वपा-भिधानम् ॥ ४ ॥

वनिष्टुमस्य माराविष्टोरूकं मन्यमाना इति किमुरूक-शब्देनोलू-
कस्याभिधानं तस्मादुपयुक्ता वनिष्टोर्लेशन प्रतिषिध्यते ?। उत वपाभि-
धानम् उरूक-शब्दः वपोद्धरणकाले वपां मन्यमाना वनिष्टुं माराविष्टेति ।
तत्र रूढेरुलूकस्याभिधाने प्राप्ते ब्रूमः । न तावद्वनिष्टोरनि-
वितस्य नवनं शक्यं निषेद्धुं प्राकृतप्रयुक्तिनिषेधस्याश्रुतार्थत्वात् । त-
स्माद्वपायामुत्पत्त्या वपाभिधानं दर्शितं वाक्यप्रयुक्त्याभिधाने वपोद्धरण-

१ अविशस्य वसमर्थित वा ।

काले सन्निधानाद्भ्रान्त्या वनिष्ठोरेव प्रसक्तमाशङ्क्य तन्निवारणार्थवचनं दृष्टार्थं भवति तस्मादुपाभिधानमिति वपाविषयेऽप्यूहः ।

अधिगोः प्रशसाबाहू इत्यत्र प्रशसा-शब्दस्य प्रशंसापरत्वाधिकरणम् ।

सू० प्रशसास्वभिधानम् ॥ ५ ॥

“प्रशसाबाहू कृणुता”दिति किं प्रशसेति तृतीयान्तमस्यभिधान असिना बाहू छेत्तव्यौ ? उत द्वितीयाद्विवचनस्याकारादेशे छान्दसे चौकारलोपे कृते प्रशंसावचनोऽ?मिति । तत्र प्रशास-शब्दस्यासौ प्रसिद्धत्वात्तद्वचनं मन्यते न स्वधितिसाधने छेदने शक्यमसेः करणत्वं प्रकाशयितु मान्त्रवर्णिकद्रव्यकल्पनाया चातिगौरवम् । तस्मात् प्रशंसावचनत्वं प्रशस्तौ बाहू कृणुतादविकलावित्यर्थ. । एव दृष्टार्थता भवति, तस्माद्बाहुविषयेऽप्यूहः ।

अधिगोः श्येनमस्य वक्ष इत्यादौ श्येनादिशब्दानां कार्त्स्न्यवचनाधिकरणम् ।

सू० श्येन-शला-कश्यप-कवष-स्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ ६ ॥

श्येनमस्य वक्षः कृणुतादिति श्येनसदृशमित्यर्थः तत्र संशयः किं सादृश्यमेवात्र विवक्षितम्? उत साकल्य?मिति तत्र सादृश्यमेवामी पिष्टपिण्डाः सिंहा क्रियन्तामितिवत् विधीयते, तेन वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिसम्पादनेन श्येनसंस्थानं कर्तव्यं, नैतद् युक्तम् अदृष्टार्थतापसङ्गात् कर्तने च वक्षसो वैकल्याद्विधिनाशः स्यात् अतः साकल्यमत्र विधीयते अविकलं हि वक्षः श्येनसदृशं भवति तदनेन प्रकारेणाविकल्पमेवोच्यते दृष्टार्थत्वात्, एवं शलादोषणीकश्यपेवांसौ कवषोरुस्रेकपर्णाष्ठीवन्तीत्यपि साकल्यमेव ॥

दर्शार्थाहृताग्निनाशे प्रायश्चित्तरूपेष्टेस्तस्या अननुष्ठानाधिकरणम् ।

सू० प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ ७ ॥

अग्निहोत्रे श्रूयते “अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽग्निहोत्र उद्वायेदि”ति तत्र संशयः यदा दर्शार्थं नोद्धृतो

धारभूतेन पयसा च विशेषितः । द्रव्यदेवतासम्बन्ध एकार्थोऽत्र विधीयते ।
पयस्यादित्यश्चरुरित्युभयविशिष्टद्रव्यदेवतासम्बन्धविधानाद्वास्ति वाक्य
भेदः, तत्र चरुः प्रथमानिर्दिष्टत्वाद्विधेयः पयस्तु सप्तमीनिर्दिष्टत्वादाधारत्वेन
सम्बध्यते, एवमवाक्यभेदे सति सप्तमीनिर्दिष्टस्याविवक्षामङ्गीकृत्य तुल्य
कक्ष्यत्वमयुक्तमभ्युपगन्तुं तस्माच्च पयसि प्रदेयधर्मा ॥

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ।

**सू० अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ११ ॥**

अभ्युदयेष्टावपि ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरु"मिति दधिशृतयोः सप्तमीनिर्दिष्टत्वेनाप्रदेयधर्मा न कर्तव्या इति प्राप्ते तत्रोच्यते नापूर्वकर्मविधाना द्धर्मेऽनेकार्थविधिः सम्भवति न चेहापूर्वकर्मविधिः किन्तु पूर्वप्रवृत्तस्यैव कर्मणि निमित्ते पूर्वमेवापनीतानां हविषां देवतान्तरसम्बन्धमात्रं विधीयत इति स्थिते पक्षे, तद्वदिह तण्डुलानां देवतान्तरसम्बन्धे दधिपयसोश्च प्रयोजनार्थं विधिः स्यात्तत्र प्राप्ते कर्मणि अनेकार्थविधानाद्वाक्यं भिद्येत, तस्मात्प्रदेयत्वेनैव प्रवृत्तयोर्दधिशृतयोर्देवतान्तरसंयोगमात्रं तण्डुलवद्विधीयते इति कर्तव्याः प्रदेयधर्माः ॥

पशुकामेष्टौ दधिपयसोः प्रदेयधर्मानुष्ठानाधिकरणम् ।

**सू० अपनयो वार्थान्तरे विधानात् चरुपयोवत् ॥ १२ ॥**

"यः पशुकामः स्यात्सोऽमावास्यायामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति श्रुतं तत्राभ्युदयेष्टितुल्यश्रुतित्वात्तद्वदेव दधिपयसोः प्रदेयत्वस्य सत्त्वात् प्रदेयधर्मा मन्यन्ते अपूर्वकर्मविधानादप्राप्तप्रदानयोर्दधिपयसोः सप्तम्या आधारार्थत्वमादित्यचरुपयोवद्विधानमित्यकर्तव्याः प्रदेयधर्माः ॥

ज्योतिष्टोमे श्रपणानां प्रदेयधर्माननुष्ठानाधिकरणम् ।

**सू० श्रपणानां त्वपूर्वार्थत्वात्[1] प्रदानार्थे विधानं स्यात् ॥ १३ ॥**

(१) त्वपूर्वत्वादिति पा० ।

ज्योतिष्टोमे श्रूयते "पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिन"मित्यादि, तत्र संशयः किं पयःप्रभृतयः प्रदेयत्वेन सोमवद्विधीयन्ते ततश्च प्रदेयधर्माः क्रमादयः कर्त्तव्या ? उत सोमसंस्कारार्थत्वेन विधानादकर्त्तव्या? इति, तत्र पयसा सोमस्य मिश्रणं श्रूयते किमर्थं कथं नु नाम सोमे प्रदीयमाने पयोऽपि प्रदीयेतेति, एवं हि यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं सोमसंस्कारार्थत्वे तु चादृष्टार्थता स्यादिति एतावता प्रदेयत्वं मन्यते, "द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते। तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते॥ श्रुतेश्चादृष्टसंस्कारकल्पना नैव दुष्यति। तस्मात्प्रदेयधर्माणां न पयःप्रभृतौ क्रिया॥

अश्वमेधे ईशानाय परस्वत इत्यत्र यागान्तरविधानाधिकरणम्।

सू० पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ १४ ॥

अश्वमेधे "ईशानाय परस्वत आलभत"इति प्रकृत्य श्रूयते "पर्यग्निकृतानारण्यानुत्सृजन्ती"ति तत्र सन्देहः किमीशानायालभत इत्यालम्भमात्रं विधीयते तेषां चालब्धानां पर्यग्निकरणविशिष्ट? उत्सर्गस्त्यागः पर्यग्निकरणवाक्येन विधीयते ? उतेशानायेति यागविधिः पर्यग्निकृतानारण्यानुत्सृजन्ती?ति, तत्रैव गुणविधिरिति तत्र सत्यपि देवतासंयोगे न यागविधिरालम्भमात्रं तु विधीयते यागविधित्वे सति पर्यग्निकरणवाक्येन किञ्चिद्विधेयं लभ्येत, न तावदुत्सर्गः, यागविधिनैव प्राप्तत्वात् पर्यग्निकरणं चोदकप्राप्तत्वात्, न पर्यग्निकरणोत्तरकालम् उत्सर्गस्यापि प्राप्तत्वात्, न पर्यग्निकरणानन्तर्ये आनन्तर्यशब्दाभावात्, न च क्रत्वोपकारपर्यग्निकरणविधानादपूर्वत्वं, न ह्यत्र पर्यग्निकरणं विधीयते किंतु यदुपसर्जनीभूतपर्यग्निकरणनिर्देशाय च पर्यग्निकरणान्तात्करोतीति विधिः प्राप्नुयादेव, न च ततः परेषां पदार्थानां प्रतिषेधः प्रतिषेधकशब्दाभावात्, न च पर्यग्निकरणकाल उत्सृजतीति विधिः कालस्याशाब्दत्वात्कालविधौ च कालान्तरं निवर्त्तेत नाङ्गान्तराणि, तत्र चोदकप्राप्तप्रमयाद्युक्त उत्सर्गः पर्यग्निकरणकाले कथमनुष्ठातुं शक्येत, तस्मादालम्भमात्रं देवतोद्देशेन पूर्ववाक्ये विधीयते पश्चात्पूर्ववाक्ये तेषामुत्सर्गः पर्यग्निकरणविशि-

पश्वोद्यते उच्यते—"विना यागेन न द्रव्यं देवतान्वयमृच्छति । द्रव्यदेवत-
संयोगादतो यागो विधीयते" ईशानयेति देवतास्य गम्यमानमशक्यम-
पह्नोतुं तच्च न कथंचिद्यागमन्तरेणालम्भमात्रादुपपद्यते, अतो यागविधि
विहिते च तस्मिन् यदि पर्यग्निकरणाद्यस्य विधेय न लभ्यते ततोऽनु-
वादो भवतु न चैतावता देवतासम्बन्धज्ञानमप्रमाणीकर्तुं शक्यं, न च
नास्ति विधेयम् अपूर्वतापरत्वात् कृत्स्नोपकारप्राकृतपर्यग्निकरणादुत्सर्गो वि-
धीयते तथा प्रत्यक्षविहितया निराकाङ्क्ष ईशानयोगवचनो न चोदकम-
पेक्षते तस्माद्यागविधि, उत्तरं तु तत्रैव गुणविधिः ॥

आज्येन शेषं संस्थापयतीत्यनेन कर्मान्तरविधानाधिकरणम् ।

सू० आज्यसंस्थाप्रतिनिधिः स्यात् द्रव्योत्सर्गात् ॥ १५ ॥

"त्वाष्ट्रं पात्नीवतमालभेते"ति प्रकृत्य पर्यग्निकृतं पात्नीवतमुत्सृज-
ती"ति श्रुतं तत्र पुनः श्रूयते "आज्येन शेषं संस्थापयती"ति तत्र संशयः किं
पूर्वस्मिन्नेव कर्मणि पशोरुत्सृष्टस्य स्थाने प्रतिनिधित्वेनाज्यं विधीयते?
किं वा कर्मान्तरविधि? रिति तत्र शेषशब्दात्संस्थापयति-शब्दाच्च तत्रैव
प्रतिनिधिविधि', न कर्मान्तरं देवतान्तराभावात् । ननु पर्यग्निकरणान्ता-
ङ्गरीतिविधानमित्युक्तं पूर्वाधिकरणे ततश्च तत्रैव निराकाङ्क्षस्य न शेषमस्ति
उच्यते पूर्वाधिकरणे यागविधिरालभतिरित्युक्तं तदिह ब्रूमः पर्यग्नि
करणान्ताङ्गरीतिनैराकाङ्क्ष्यं तु न ब्रूमहे शेषसंस्थापयति-शब्दानुप-
पत्ते', किं तु यागस्यैव पशूनोपक्रान्तस्य चोदकप्राप्तेऽग्नीषोमीयवद्विध्य-
न्तेऽनुष्ठीयमाने पर्यग्निकृतावस्थायामुत्सर्गः परित्याग पशोर्विधीयते,
तस्मिन्नुत्सृष्टे साकाङ्क्षस्य कर्मशेषस्याज्येन संस्थापनं विधीयते कर्मान्तरस्य
ह्यनुपक्रान्तस्य स्वरूपमेव वक्तव्यं समापनं शेष-शब्दस्य चानुपपत्तिस्तस्मा-
त्पूर्वत्रैव प्रतिनिधिराज्यमितीति प्राप्ते ब्रूमः—न प्रतिनिधिः सम्भवति तथा हि
यदि पशोस्त्यागमात्रं क्रियेत तत उत्पत्तिवाक्यविहितदेवतासम्बन्धो
नानुष्ठितः स्यात्तत्रैव देवतासम्बन्धविधिरप्रमाणं स्यात्, असति च देव-
तासम्बन्धे यागविधित्वं न स्यादित्यवयजत्यश्रवणादसति च यागे ऽग्नीषोमी-

पत्त्विध्यन्तस्याप्राप्तेः पर्यग्निकृतोत्सर्गः शेषसंस्थापनं चोभयमप्यनुपपन्नम् अथ देवतामुद्दिश्योत्सृज्येत ततः पशुसाधनके यागे पशुनैव मुख्येन साधिते किमर्थः प्रतिनिधिः देवतोद्देशेन चोत्सर्ग उत्पत्तिवाक्यसिद्धत्वात् पर्यग्निकरणवाक्येन विधातव्यः, तस्मात्पूर्वोधिकरणोक्तन्यायेन पर्यग्निकरणान्तात्कुर्यादितिविधानात्तत्रैव निराकाङ्क्षस्य पूर्वस्य कर्मणः समाप्तत्वात् शेषमस्ति यस्मिञ्शब्देन संस्थापनमुच्येत, तस्मात्कर्मान्तरविधिरेवायमिति । न च देवता भागः प्राकृतपात्नीवतपदानुषङ्गादिह संस्थापयतीति प्रत्ययार्थेन भावनया चाख्यातप्रातिपदिकार्थोऽनुपक्तदेवतापदयुक्तः सम्बध्यते, तदयमर्थः पात्नीवतमाज्यं कुर्यादिति शेषसंस्था—शब्दो च साट्टश्यात्पूर्वोऽपि यागः पत्नीवद्देवत्यः पर्यग्निकरणमात्रे संस्थापितः सन्नेव एव तदनन्तरं चाज्ययागः पत्नीवद्देवत्य एव क्रियमाणस्तस्यैव शेषसमापनमिव भवति या त्वाख्यातप्रातिपदिके तृतीया साऽपि संस्यासम्बन्धादनुवाद एवप्रातिपदिकार्थमात्रन्तु देवतासम्बन्धित्वेन विधीयते इति सिद्धं कर्मान्तरत्वम् ॥

प्राकृतार्थपतितान्यकार्यतो मन्त्रनामविषये च सङ्कृतो । एवमूहविधिरत्र चिन्तितो बाधचिन्तनमतः करिष्यते ॥

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां नवमाध्यायस्य चतुर्थः पादः समाप्तः ॥ समाप्तश्चायमध्यायः ॥ श्रीः श्रीः श्रीः ॥

---

श्रीमते रामानुजाय मीमांसाद्वयगुरवे नमः ॥

## अथ दशमाध्यायस्य प्रथमः पाद आरभ्यते ॥

---

विकृतौ मुख्यार्थानां प्रकृतानां बाधाधिकरणम् ।

सू० विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

श्रीः, ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया । इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते । अतिदिष्टपदार्थविषयत्वाद्बाधस्याप्यूहवदतिदेशोत्तरकालमारम्भः । ननूहबाधयोर्न मिथो हेतुहेतुमत्ता, ऊहो नाम प्राकृ-

तस्य प्रयोगस्यान्यथाभावः, न च तदधीनो बाधः कृष्णलेषु ह्यवघातस्य बाधः, न च तच्चोदोऽस्ति, अननुष्ठानात्, न ह्यननुष्ठीयमानस्य प्रयोगविकारोऽस्ति, यत्र चोद्देशो नीवारादौ न तत्र बाध इति विषयभेदाच्च ¹तयोरन्योन्यहेतुहेतुमत्ता, यत्र हि द्रव्यान्तरे देवतान्तरे वा प्राकृतप्रयोजनमस्ति तद्विषय ऊहः, यत्र तु नास्ति तत्र बाधः, सत्यमेव, तथाऽप्यूहस्य पदार्थगतरूपान्तरात्मकत्वेन पदार्थप्रत्यासत्तेस्तत्प्राप्तिचिन्ताऽनन्तरं चिन्ता कृता, बाधस्तु तन्निवृत्त्यात्मकः, पश्चाच्चिन्त्यते, तत्र प्रथमं तावदिदं चिन्त्यते किं सर्वं प्राकृतं विकृतौ कर्तव्यं? उत लुप्तप्राकृतप्रयोजनं न कर्तव्यम्? इति, तदर्थमिदं विचार्यते किं प्राकृतमङ्गजातमङ्गशास्त्रं वा स्वरूपेणैवानादृतप्रयोजनं विकृतावतिदिश्यते सौर्येण भावयेत्कथम् आग्नेयस्य यान्यङ्गानि तानि कृत्वे? ति उत पदार्थकार्याणि यानि दृष्टादृष्टरूपाणि तदुपकारसम्पादनाय य आग्नेयादिगतो व्यापारः सोऽतिदिश्यते सौर्येण भावयेत् कथं यथाऽऽग्नेयेन तथे? ति, तत्र पूर्वस्मिन्पक्षेऽतिदेशावगताङ्गभावानां प्राकृतप्रयोजनानादरेण विकृतावपि यथासम्भवं दृष्टादृष्टप्रयोजनकल्पनात्स्वयं दितेऽपि बर्हिषि लवनमदृष्टार्थतया कर्तव्यमिति नास्ति बाधः । उत्तरत्र तु प्राकृतस्य लवनकार्यस्य दृष्टस्य स्वयं दिते बर्हिष्यभावेनातिदेशात्तवनस्वरूपस्य चानतिदेशाच्च कर्तव्यं लवनमिति सिध्यति बाधः, तत्रोपदेशवदतिदेशोऽपि पदार्थपूर्वक एव युक्तः उपदेशानुरूपत्वात्तस्येति मन्यमानः सर्वं कर्तव्यं न तु किं चिद्बाधितव्यमित्याह, सिद्धान्तस्तु "अपेक्षाऽऽसत्तियोग्यत्वैरुपकारातिदेशनम्। तदभावात्पदार्थानामतिदेशो न कल्प्यते" । यागेन भावयेदिति हि यथा यागः फलसाधनं भवति तथा व्याप्रियेतेत्यर्थः, कथमिति केन व्यापारेण यागः फलसाधनतामापद्यत इत्येव यागस्य फल²साधने व्यापारविशेषोऽपेक्षितो न तु व्यापारवाच्च येनाग्नेयादिव्यापारः स्वरूपेणातिदिश्येत, अवघातप्रयाजादिजन्यदृष्टादृष्टोपकारसम्पादनं तु भवति यागस्य फलसाधनसामर्थ्यजनने व्यापारः, तस्मादपेक्षावशादुपकारसम्पादनस्य.

१ तयोरन्योन्यहेतुहेतुमत्ता इति पा ।
२ फलसामर्थ्यजनने इति पा ।

वातिदेशो न पदार्थानां, तथा सन्निधिरपि तस्यैव वैकृतं वाक्यं चोद-
नासामान्येन प्राकृतं प्रधानवाक्यमुपस्थापयति। तच्च वाक्यं स्वार्थमुप-
स्थापयति, तस्य च स्वार्थोऽवयवयुक्ता भावना तत्र साध्यसाधनांशावनपे-
क्षितत्वादनादृत्य तृतीयोंऽशो गृह्यते, स चाङ्गजन्योपकारसम्पादनात्मा नाङ्ग-
स्वरूपाणि तथा कथमाकाङ्क्षापूरणयोग्यताऽपि यागगतव्यापारस्यैव ना-
ङ्गानां, तस्मादपेक्षासन्निधियोग्यत्वैः कार्याणामेवात्र पदार्थविशिष्टानाम-
तिदेशः, न पदार्थस्वरूपाणामपेक्षाद्यभावात्, एवं शास्त्रस्वरूपाणाम्, एवं च
विशिष्टकार्यातिदेशादार्थिको विशेषणानां पदार्थानामतिदेशः, ततश्च
यस्यां विकृतौ यत्प्राकृतं कार्यं न सम्भवति तस्यां तस्यासम्भ[1]वातिदेशाच्च
तद्द्वारेण पदार्थप्राप्तिः स्वरूपस्य नास्त्येवातिदेशः, तदिदमुक्तं "लुप्तप्राकृ-
तप्रयोजनं न चोदकश्चोदयती"ति, यस्तु पदार्थानुरक्तं तदुपलक्षितमुप-
कारस्य स्वरूपमतिदिश्य तस्य जनकापेक्षायां पदार्थानामपि पुनर्वैकृत्य-
पूर्वेण तादर्थ्यादन्वयमिच्छति तन्मते लुप्तप्राकृतद्वाराणामपि तादर्थ्या-
वगमात्तदुपपत्तये द्वारान्तरं परिकल्प्यानुष्ठानं स्यात्, पदार्थापेक्षेण च
स्वरूपमतिदिशता किं तत्स्वरूपमतिदेष्टव्यं, न तावत्प्राकृत्युपकारव्यक्ति-
र्विकृतौ यस्याः कर्तुं तादृशस्तूपकारोऽतिदिश्येत तादृक्त्वं च न दर्शपूर्ण-
माससम्बन्धितया, न हि विकृतौ तत्सम्बन्धिता सम्भवति तेन प्रयाजादिम-
त्त्वेव तादृक्त्वमिति तादृग्रूपातिदेशोऽर्थसिद्ध एव पदार्थानामतिदेशोऽपि
विशिष्टविधिनैव विशेषणानां विधिरिति व्यर्थः. एवम्पदार्थातिदेशः,
स्यान्मतं कारणभेदे कार्यभेदस्यावश्यं भावात्प्रयाजाद्यधीनमुपकारान्त-
राद् व्यावृत्तं सर्वेदर्शपूर्णमासोपकारेष्वनुगतमुपकाररूपं तदतिदिश्यत इति,
तथाऽपि तत एव प्रयाजादिप्राप्तिः सिद्धेत्, न हि तस्य तस्मादन्यत उत्पत्ति-
सम्भवः कारणभेदे कार्यभेदादिति त्वयैवोक्तत्वात्, तस्मादनर्थकोऽयं पदा-
र्थातिदेशः केवलमूहबाधविघाताय स्यादित्यास्तां तावत्॥ ननु सप्तमे वि-
ध्यन्तातिदेश इत्युक्तं, विध्यन्तश्च शास्त्रणम् अत कथमिह शास्त्रातिदेशो

---

१ सम्भवादेशाच्च तद्द्वारेण इति पा० ।

निराक्रियते उच्यते—कार्यातिदेशाद्दार्थिकोऽयं शास्त्रातिदेशस्तदभिप्राय-
न्तत्। यदि च विध्यन्त-शब्देन प्राकृतस्य प्रधानविधेर्योऽतिदेशः स उच्यते
न च समिधो यजति व्रीहीनवहन्तीति प्रत्यक्षश्रुतमात्र प्रधानशास्त्रमेव
किं तर्हि कल्पितकार्यं वा विशब्दसहितमीदृशमङ्गशास्त्रम् अवघातेन वितु-
षीकुर्यादिति, ततश्चेदृशस्यैवातिदेश, ईदृशस्य च कपालचरावतिदेशा-
सम्भवात्सिद्धो बाध, तस्माल्लुप्तार्थानां प्रकृतिवत्कुर्यादित्येतावन्मात्रालो-
चनया झटिति प्राप्तिमप्रगतामपि प्रत्यक्षीकृत्य तद्व्यतिरिक्ताङ्गविषयमति-
देशशास्त्रमुपसंह्रियते, तेन स्रुव इति बर्हिर्लवनीत्यादौ लवनादयस्त-
न्मन्त्रास्तत्साधनभूताश्च परस्वादयो न प्रवर्तन्ते । एवं वा प्राजापत्ये
घृते चरु निर्वपेच्छतकृष्णलमायुष्काम इति श्रूयते तत्रावघातः कर्तव्यो
नेति संशये चरु-शब्दोऽयं चरुधर्मविधानार्थः तेन लुप्तार्थोऽप्यवघातो
वचनात्कृष्णलेषु कर्तव्य इति विशेषशङ्का विनाऽप्यवघातेनालुप्तार्थैरेव धर्म-
विशेषेण वा उपपन्नश्चरु शब्दो नावघात प्रापयितुमलं, अपक्वे तु घृते श्रप-
तीत्याहत्य विधानात्क्रियत इति वैषम्यम् । एवं वा वैश्वदेवं चरुं निर्व-
पेद् भ्रातृव्यवान् स बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेदिदमहममुं-
ष्यामुं च व्यूहामीतीय द्विष्यात्तं ध्यायेत् यदन्योऽपमृद्नीत यत्र स्फ्य-
मादित्येन तद्विष्यात्तं दुःकमायाऽपरन्तौ"ति श्रूयते तत्र संशयः किं वैश्वदे-
वदेवतावाहनकाले विष्णोरावाहनं कर्तव्यं ने?ति तत्र चोदकप्राप्ते कर्तव्य
कथं पुनरचोदकप्राप्तिः न ह्येषा देवता प्राकृत्याः कस्याश्चिद्देवताया कार्ये
वर्तते किं त्वप्राकृतकार्येव यतोऽस्या यूपावटसम्पच्छिद्यैव बर्हि-
र्धर्मेनावाहनं प्राप्नोति सत्यं, वैश्वदेविकचोदकेन न प्राप्नोति स्फ्यमेव
स्फ्य वैष्णवयाग चोदकद्रव्यकल्पनात्ताग्नेयविकारः, तत्र वैश्वदेविकान्यप्र-
धानान्यस्यैवाङ्गानि यद्वैतानपकुर्वन्तीति न पृथक् क्रियन्ते, आवाहन-
स्यकृतार्थत्वात्कर्तव्यमिति प्राप्ते ब्रूम । नैमित्तिकविधिर्निमित्तापेक्षित्वावि-
भिनस्य स्प्यास्मिन्ब्रादीनयप्राधान्येन देवताऽऽवाहनकाले निरपायाम्-
यादीनिरिक्तामप्राप्तम् उक्तप्रयाजविधान नावाहन प्रयोगे तु अस्तु, यदि-
हि न आवाहन ह्यमपि निष्फलमेव तस्मान्न कर्तव्यम् ॥

दीक्षणीयादिषु आरम्भणीयाभावाधिकरणम् ।

सू॰ इष्टिरारम्भसंयोगादङ्गभूतान्निवर्त्तेतारम्भस्य प्रधानसंयोगात् ॥ २॥

दर्शपूर्णमासयोरारम्भणीया श्रुता सा विकृतिष्वपि कर्त्तव्येति द्वादशे वक्ष्यते, सा किं सोमाङ्गभूतासु दीक्षणीयादिषु कर्त्तव्या न? इति विचारः "कर्त्तव्या चोदकप्राप्तेरिति प्राप्ते ऽभिधीयते ॥ अङ्गभूतास्त्वियं लुप्तद्वारत्वान्न प्रवर्त्तते। आरप्स्यमानपुरुषसंस्कारार्थेयमिष्यते। नारम्भो दीक्षणीयादेः प्रधानारम्भसिद्धितः"। आरम्भद्वारेणारम्भणीया प्रकृतावङ्गमासीत्, अतो विकृतिष्वपि तद्द्वारैव प्राप्तिः, न चाङ्गभूतासु दीक्षणीयादिष्विष्टिष्वात्मीय आरम्भोऽस्ति, ज्योतिष्टोमे तावच्च कर्त्तव्या तस्यापूर्वत्वात्, दीक्षणीयादेश्च तस्यामवस्थायामप्राप्तावसरत्वात्, ज्योतिष्टोमे च प्रवृत्तेऽर्थादङ्गेष्वपि प्रवृत्तो भवति, प्रथमं च प्रवर्त्तनमारम्भः तेन प्रधानार्थेनैवारम्भेणाङ्गानामारब्धत्वात् तेषां पृथगारम्भोऽस्ति तदभावाच्च तद्द्वारारम्भणीया लुप्तार्थत्वान्न कर्त्तव्या ॥

अनुयाजादिषु आरम्भणीयाभावाधिकरणम् ।

सू॰ प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्त्तेतानङ्गत्वात् ॥ ३ ॥

अथ यत्रेष्टिकान्यन्यानि च कर्माणि समप्रधानान्येकफलसाधनत्वेन चोदितानि यथा राजसूये, तत्र किमैष्टिकेष्वारम्भणीया स्यान्न वा? इति पूर्वाधिकरणे प्रधानविषय आरम्भो नाङ्गानामित्युक्तम्, स इह सर्वेषां प्रधानत्वादिष्टीनामप्यस्त्यारम्भः तेनालुप्तार्थत्वादारम्भणीया कर्त्तव्येति प्राप्ते ब्रूमः प्रकृतौ हि यदङ्गमारम्भणीया तद्विषय आरम्भो द्वारं दर्शपूर्णमासावारप्स्यमान इति वचनात्, इह त्विष्टिपशुसोमानामेकप्रयोगभाजामेकः सर्वेषु व्यासक्त आरम्भो नेष्टिभिर्व्यपदेष्टुं शक्यते, अग्नीषोमीयहविर्विभागिना, तेनात्रापीष्टीनामात्मीयारम्भाभावाल्लुप्तार्थैवारम्भणीया ॥

आरम्भणीयायां आरम्भणीयाभावाधिकरणम् ।

सू॰ तस्यां तु स्यात्प्रयाजवत् ॥ ४ ॥

किमारम्भणीयायामारम्भणीया कर्त्तव्या ने - ति संशयः नन्वङ्गभूतेयं दर्शपूर्णमासयोः, अतो दीक्षणीयादिवदस्यां न कर्त्तव्या तस्मादुत्तार्थमेतत् उच्यते सत्यम्, अङ्गभूता तथाऽपि पृथगारम्भा भवति न प्रधानारम्भेण सिध्यति, न ह्यस्यां वेलायामारब्धौ दर्शपूर्णमासौ तयोरारप्स्यमानयोरेवा विहिता, यदि चारब्धौ भवेतां तत आरम्भणीयैव न कर्त्तव्या, सा हि कर्तारमारम्भयोग्यं कर्तुं क्रियते, तौ चेदारब्धौ किमर्था सा, तस्मादारप्स्यमानयोर्दर्शपूर्णमासयोः क्रियमाणेयं पृथगारम्भा[1] भवतीत्यनुप्रायत्वादस्यामारम्भणीया कर्त्तव्या, नैवम् अशक्या ऽसावतिदेष्टुं सा हीदार्थी विधीयते, न तस्या दर्शपूर्णमासाङ्गत्व ज्ञातं, यच्च प्रकृतावज्ञातं न तद्विकृतावतिदेष्टुं शक्यत इत्यतदेकमेव वाक्यमविहितवद्दर्शपूर्णमासयोरतो विदधाति विहितत्वक्रादिशतीति न कथञ्चिदुपपद्यते, तस्मात्तद्व्यतिरिक्तेतिकर्त्तव्यतातिदिश्यते ॥

चले वाल्यां यूपाहुत्यभावाधिकरणम् ।

सू० कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्त्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ५ ॥

साद्यस्क्रे श्रूयते "खले वालीयूपो भवती"ति प्रकृतौ चास्ति यूपाहुतिः "यूपमच्छैष्यता होतव्यमि"ति, सा किं खले वाल्यां कर्त्तव्या ने? ति संशये, अतिदेशप्राप्ते कर्त्तव्येति प्राप्ते लुप्तार्थत्वादकर्त्तव्येत्याह कथं यूपमच्छैष्यता होतव्यमिति छेदनार्थो होमः, न च खले वाल्यां छेदनमस्ति स्वदेशावस्थितायामेव तस्यां पशुर्बध्यते अतस्तत्र न यूपाहुतिः कर्त्तव्या ॥

साद्यस्क्रे स्थाण्वाहुतिभावाधिकरणम् ।

सू० स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ ६ ॥

तत्रैव स्थाण्वाहुतिं जुहोतीति या किं यस्मिन् कस्मिंश्चित्स्थाणावारादुपकारकत्वेन कर्त्तव्या सती खले वाल्यामपि स्यात्, किं वा यूपा-

१ पृथगारम्भणीति पा० ।

२ अत्र अच्छैष्यता० अच्छेष्यता० अछेष्यता० इति पाठत्रयं पुस्तकत्रये उपलभ्यते तत्र "अच्छ-अभेः हि चाप्नुमिच्छति यजति" इति सूत्रे तेनैव सूत्रे आप्नुमिच्छता इत्यर्थलाभः । अतो श्रुतिस्तु "यूपमच्छैष्यता होतव्यं न हि अतिशयार्था जुहोति च इत्य बाधितं चातुर यूपार्थमार्कतिमं यो यतत्वा यूपाहुतिं जुहोति इति ।

व्रश्चनस्याग्नौ कर्त्तव्या तद्द्वारेण यूपस्यैव संस्कारार्था सती खले वाल्या मान्त्रश्चनस्याग्न्यभावेन लुप्तार्थत्वादकर्त्तव्येति विचारे यूपविनियोजिते स्थाणौ क्रियमाणा तद्द्वारेण न शक्नोति यूपस्योपकर्त्तुं तस्मादाराद्दुपकारिका खले वाल्या कर्त्तव्येति प्राप्ते ब्रूमः आव्रश्चनस्याग्नौ सन्निधानात्तद्द्वारेण च संस्कारत्वे सम्भवत्याराद्दुपकारत्वानुपपत्तेर्यूपसंस्कारार्थैव नियोजितेऽपि स्थाणौ यूपीयोऽसावित्येव क्रियमाणा शक्नोत्येव यूपस्योपकर्त्तुं देवदत्तधारिताया इव स्रजः शुचिदेशनिधानं देवदत्तस्य, यद्यपि चादृष्ट एव संस्कारस्तथाऽपि संस्कारत्वमेव सम्बद्धोपकारित्वलाभादसम्बद्धोपकारिण आराद्दुपकाराज्ज्यायः तस्मात् खले वाल्या न कर्त्तव्या ॥

उत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् ।

**सू॰ प्रयाजे च तन्न्यायत्वात् ॥ ७ ॥**

अस्ति दर्शपूर्णमासयोरुत्तमः प्रयाजः 'स्वाहाकारं यजती'ति स किमाराद्दुपकारकः? उताज्यभागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारकः? इति, तदर्थमिदं विचार्यते किं स्वाहाकारं यजतीति देवताविधिः? उत नामधेयम्? स्वाहाऽग्निं स्वाहा सोममित्यादिमन्त्रवर्णाद्देवताविधिरिति तत्र "वचनाद्देवतालाभे न मन्त्रात्कल्पनं समम्। तस्याश्चानुपयोगित्वाद्वेदाराद्दुपक्रिया" न हि वचनविहितदेवतासम्भवे स्वाहाऽग्निं स्वाहा सोममित्यादिना तत्कल्पना युक्ता, न चाऽस्य मन्त्रकरणत्वेन श्रुत्या विधीयते यतस्तद्गतानामग्न्यादीनां देवतात्वं कल्प्येत क्रमप्रकरणविनियोज्यो ह्यसौ, न चाविज्ञातसामर्थ्यस्ताभ्यां विनियोक्तुं शक्यते न चाग्न्यादिप्रतिपादकस्य मन्त्रस्याविज्ञातदेवत्ये यागे सामर्थ्यमवगम्यते, तेन वाचनिकं देवताविधानमाश्रित्य तत्रैवाग्न्यादिशब्दानां मान्त्रशब्दवद्गौणी कथं चिद्वृत्तिरङ्गीकर्त्तव्या, अतो न मान्त्रवर्णिकी देवतेत्याराद्दुपकारकः । किं च न चायं स्वाहाकारो मन्त्रवर्णाच्छक्यते कल्पयितुं तेन स्वाहाकारदेवताकयागविधानसिद्धम्, न च स्वाहाकाराख्या देवताऽन्यत्रोपयोगिनी या संस्क्रियेत तस्मादाराद्दुपकारकमिदं कर्मेति प्राप्त उच्यते—'न देवताविधौ शक्तिर्द्वितीयायास्य विद्यते । न च यागविधौ गौणो विधत्ते देवताविधिं' ॥ न ह्येका

र्थविधिसम्भवेऽनेकार्थविधिर्युक्तः, सम्भवति चात्र यागमात्रविधाने स्वाहा-कार-शब्दस्य स्वाहाऽग्निमित्यादिमन्त्रसम्बन्धेन नामधेयत्वसम्भवात्, करणत्वं च क्रमसहितात्प्रकरणाल्लभ्यते मन्त्रस्य, न चासामर्थ्यं निश्चितं येन विनियोगो न स्यात्, सम्भवति च यागे देवताप्रतिपादकस्य मन्त्रस्य प्रकाशनसामर्थ्यं यदि यागोऽत्र न स्याद्यागोऽपि वा देवतान्तरयुक्तः स्यात्ततोऽग्न्यादिवचनस्य मन्त्रस्यासामर्थ्यं निश्चीयेत, न त्वेतदस्ति, तस्माद्योग्यताऽस्तीत्यविहतो विनियोगः । न च द्वितीयान्तस्य देवताविधौ सामर्थ्यं लभ्यते मन्त्रवर्णाद्देवताविधिरिति च नावश्यं देवताविध्याश्रयणं, मन्त्रे चाज्यभागादिषु वक्ष्यमाणा देवता यथाक्रमेण सङ्कीर्त्यमानाः प्रत्यभिज्ञायन्त इति तासां स्मरणं दृष्टमेव प्रयोजनमिति नादृष्टार्थत्वकल्पना तस्माद्विकृतिषु सौर्यादिष्वग्न्यादिपदानि लुप्तार्थत्वान्निवर्तन्ते ॥

अग्नियागस्याराद्‌उपकारकताधिकरणम् ।

सू० तथाऽऽज्यभागाग्निरपीति चेत् ॥ ८ ॥

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य श्रूयते 'आज्यभागावग्नीषोमाभ्यां यजती'ति योऽयमाग्नेय आज्यभागः स किं प्रधानदेवताया यागे संस्कारः? उताराद्रुपकारकः? इति पूर्ववत् न्यायेन संस्कारत्वे प्राप्त उच्यते निगदेष्वावाहनादिषु अग्निमावह सोममावह अग्निमावहेत्येवमग्नि-शब्दस्य द्विः पाठाद्देवताऽन्तरं गम्यते, सोमाच्च पूर्वं पठ्यमानोऽग्निस्ततः पश्चाद्भाविनः प्रधानाग्नेरन्य इति गम्यते, विधिवाक्ये चाग्नीषोमाभ्यां यजतीत्येकेन पदेनाग्निः सोमश्च विधीयते, तत्र स्पष्टमेव यागं प्रति गुणत्वं सोमस्य, अन्यत्र देवतात्वाभावात्, तत्राग्निः प्रधानं स्यात्ततो वैरूप्यं स्यात्, सोमापेक्षयाऽऽज्यभागाग्निस्तु ह्यग्नीषोमाभ्यामित्युपादेयम् चान्यदेवता तद्विपरीतमिति वचनव्यक्तिभेदात्, तस्मादग्निरपि यागाङ्गत्वेन विधीयते । यागस्तु प्रधानकर्माराद्रुपकारकः तेन सौर्यादिषु नाग्निर्निवर्तते आग्नेयसौम्यादिविकारेष्वप्याग्नेयाज्यभागोऽतिदिश्यते ॥

पशुपुरोडाशयागस्य देवतासंस्कारकताधिकरणम् ।

सू० पशावपीति चेत् ॥ ९ ॥

आग्नीषोमीये पशौ पशुपुरोडाशः "आग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपती"ति, स किं पशोरारादुपकारकः? उत पशुदेवतासंस्कारः? इति सन्देहे पशौ पशुपुरोडाशे चोभयत्रापि तद्धितनिर्देशाद्विशेषणभूता देवता गुणत्वेन गम्यते, न च गृह्यते विशेषः पशोर्देवताऽङ्गं पुरोडाशे विपरीतमिति उभयत्राप्यपूर्वैव देवतोपादीयत इति न संस्कारत्वम् "आसोमं वहन्त्यग्निना प्रतितिष्ठन्ती"ति वाक्यशेषाल्लता सोमः प्रणीयमानोऽग्निश्च पशौ देवता पुरोडाशे तु न नियोगतस्तावेवेति प्रमाणमस्ति, तस्मादारादुपकारकः पशुपुरोडाशः, नैवं "दृष्टे स्मरणसंस्कारे सति नादृष्टकल्पना । पशुधर्मैश्च सन्दंशात्तदङ्गत्वं सुनिश्चितम्" । ज्योतिष्टोमाङ्गं हि पशुर्न पुरोडाशे संस्कारार्थत्वेन शक्यः शङ्कितुं, पुरोडाशस्तु पशुधर्ममध्ये विधीयमानस्तदङ्गं संस्तद्गतदेवतासंस्कारेण दृष्टेनोपकुर्वन्नादृष्टार्थतामालम्बते, अतो नाप्रमाणविशेषत्वं, येन येव पशोर्देवता तया वाऽन्या वा सैव पुरोडाशेन संस्कर्तव्येति विकृतिषु देवतान्तरवतीष्वग्नीषोमौ निवर्तेते ॥

सौर्यं चरुं निर्वपेदित्यत्र चरुशब्दस्योदनपर्यायताधिकरणम् ।

सू० चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ १० ॥

"सौर्यं चरुं निर्वपे"दित्यत्र संशयः किं स्थालीवचनश्चरु-शब्द उतौदनवचनः? इति यदाऽपि स्थालीवचनस्तदापि किं स्थाली कपालविकारो हविः श्रपणार्था? उत पुरोडाशस्य हविषो विकारः प्रदेय? इति तत्र स्थाल्यां लोकप्रसिद्धेस्तद्वचनत्वं, यस्तु याज्ञिकानामोदने प्रयोगः स स्थालीसम्बन्धाल्लाक्षणिकः, न च विपरीतं सम्भवति, ओदनमात्रे प्रयोगाभावात् । येऽपि तस्यौदनवचनत्वं मन्यन्ते तेऽपि न तन्मात्रं वाच्यमाहुः कपाले कटाहे वा श्रपितस्यौदनस्य तद्वाच्यत्वानभ्युपगमात्, तथा चोपरितने ऽधिकरणे वक्ष्यामः, तेन स्थालीसम्बन्धनिमित्त एवौदनेऽपि चरु-शब्द इति विशेषणत्वात्स्थाल्येवाऽभिधेया, सा चानदनीया हविष्ट्वायोग्या, श्रपणयोग्यता तु प्रसिद्धैव, तस्मात्स्थाली चरुः कपालविकारश्च सौर्यमिति स्थाल्यां श्रपितस्य हविषः सूर्यसम्बन्धात्स्थाल्येवाऽभिधीयते । तस्येदमिति तद्धितो भविष्य-

तीत्येकः पक्षः, गृह्णीम एतत्स्थाली चरुरिति स तु हविर्विकारः सौर्यमिति देवतासंयोगात् देवतातद्धितो ह्ययम् अन्यथा याग एवायं न स्यात् वचनाच्चानडुद्गीयेनापि कपालादिनैव यागः क्रियेत, तस्माद्धविर्विकार इति द्वितीयः, सत्य, चरुर्हविर्विकार न तु स्थाल्यां चरु-शब्दः किंत्वोदने चरु-शब्दस्य वेदे याज्ञिकप्रयोगे चौदनवचनत्वावधारणात्, वेदे तावदादित्यः प्रायणीयश्चरुरित्युक्त्वा अदितिमोदनेनेति पश्चादनुवादादोदनवचनत्वं तत्र तावद्वाक्ये व्यगम्यत इत्युक्तं शास्त्रस्या वा तन्निमित्तस्थादित्यत्र, ततश्चानेकार्थत्वमन्याय्यमिति सर्वत्रैवोदनवचनत्वं याज्ञिकास्त्वानवस्राविण्यल्पपक्वौदने चरु-शब्दमुपचरन्ति, तेषां च शब्दैकगम्यधर्माधर्मव्यवहारिणां शब्दार्थोपप्लवे तात्पर्यातिशयात्प्रयाजनेभ्यः प्रत्ययिततत्वात्त एव शब्दार्थः, पाकविशेषनिमित्तश्चौदने चरु-शब्दः, न च स्थालीमन्तरेण स पाको निर्वर्तत इति कृत्वा स्थाल्यादरः, न तु तावता स्थालीवचनत्व तस्मादोदनेन हविर्विक्रियते ॥

सौर्यचरोः स्थाल्यामेव पाकाधिकरणम् ।

सू० स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतत्वात् ॥ ११ ॥

स एव चरुः किं कपाले पक्तव्य? उत यत्र क्वचि? उत स्थाल्या? मिति संशयः, चोदकप्राप्तेः कपाले स्यात्, नन्वष्टत्वपरिच्छिन्नं कपालं चोदकेन प्राप्नोति, न च चरुरष्टसु कपालेषु शक्यः पक्तुं सत्यमष्टत्वं प्राप्यते तत्त्वसम्भवाद्विवर्तते न तु तद्वशात्या कपालमपि निवर्तितुमर्हतीति तस्मात्कपाले स्यात्, नैवम् अप्राकृतकार्यत्वात् प्रकृतौ हि कपालेष्वेवा हविः पाको निर्वर्तते चरुस्तूदकगतोऽप्यवश्यं पक्तव्यः तत्र कपालमुदकधारणार्थमुपादीयमानमप्राकृतकार्यं स्यादिति न चोदकानुग्रहः, तस्माद्यत्र क्वचित्पक्तव्य इति प्राप्ते ब्रूमः स्थाल्यामेव स्यात् तस्य हि चरुत्वनिमित्तः पाको निर्वर्तते नान्यत्र तस्मात्स्थाल्या स्यात् यद्योदनवचनेऽपि चरुशब्दे स्थाल्यामेव पाकस्ततः पूर्वाधिकरणे स्थाली कपालविकार इति पक्षस्योदनेन हविर्विक्रियत इति पक्षस्य च कोऽनुष्ठाने विशेषः, उभयथाऽपि स्थाल्या पक्तस्य हविष्ट्वादित्याशङ्क्य ॥

सौर्यचरौ पेषणाभावाधिकरणम् ।

सू० "तस्मिन्पेषणमनर्थलोपात्स्यादित्या-दिभिः" ॥

सूत्रैः प्रयोजनमुच्यते स्थाल्यां हि कपाले निवर्त्तितेऽपि चोदकप्राप्तः पुरोडाश एव स्थाल्या श्रपितो हविः स्यात्, ततश्च पेषणसंयवनोपधानादीनि कर्त्तव्यानि स्युः, सिद्धान्ते त्वोदने तेषामनर्थलोपादकरणम् एव प्रयोजनसूत्राणि व्याख्याय पुनरधिकरणान्तरत्वेन व्याख्यातवान्, यो नाम चरावपि सम्भवादयथातत्त्वं पेषणादीनि कर्त्तव्यानीति मन्यते तस्य बुद्धिमेन्दविषन्यायेन व्यावर्त्यते प्रयोजनप्रयुक्तत्वात्तेषां चरौ च तदभावादकरणं पेषणसंयवनोपधानादीनाम्, उपधानं तु याज्ञिकाः कपालोपधानकाले तेनैव मन्त्रेण स्थाल्याः कुर्वते, न त्वयुक्त, न च स्थालीकपालकार्ये वर्त्तते उदकधारणार्थत्वात्, अत उपधानस्य व्याशृत्त्या आसादनमप्यर्थलुप्तत्वान्न चोदकेन प्राप्यते ॥

इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अथ दशमाध्यायस्य द्वितीयः पाद आरभ्यते ॥

कृष्णले चरौ पाकानुष्ठानाधिकरणम् ।

सू० कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इत्यत्र संशयः किं कृष्णलेषु पाकः कर्त्तव्यो नेति लुप्तार्थत्वादकर्त्तव्यः, ननु "घृते श्रपयते"ति वचनात्कर्त्तव्यः, न, अशक्यत्वात् रूपरसादीनां पूर्वपाक्तिरोभावोऽपूर्वाणां च प्रादुर्भावः पाकः असौ न कृष्णलेषु सम्भवति, तस्मादकर्त्तव्य इति प्राप्ते ब्रूमः—यद्यपि मुख्यः पाको न सम्भवति तथाऽपि लक्षणया तापमात्रं वचनेन विधीयते, अतस्तापनमात्रं कर्त्तव्यम्, अन्यथा वचनानर्थक्यं स्यात्, यदि त्वयमेव मुख्यः पाको यदनुष्णस्पर्शवद्द्रव्यस्योष्णीकरणं ततः सुतरां वचनबलादसत्यपि प्राकृते कार्ये कर्त्तव्यः ॥

१ अविघातार्थेति पा० ।

कपाले उपस्तरणाभिघारणयोरभावाधिकरणम् ।

सू० उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ २ ॥

कपालचरावेव सन्देहः किमुपस्तरणाभिघारणे कर्तव्ये नेति, चोदकप्राप्तेः कर्तव्ये "यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोती"ति वचनात्स्वादिमार्थेते, न च कपालेषु स्वादिमा सम्भवति, अतो लुप्तार्थत्वादकर्तव्ये इति चेत् न, अर्थवादत्वादमृताहुतिवचनस्य, एवं तर्हि चतुरवत्तसम्पत्त्यर्थमुपस्तरणाभिघारणे, सन्तु चत्वारि चत्वारि कपालान्यवद्यन्ति चतुरवत्तसम्पत्त्यै, इति कपालचतुष्टयेनैव चतुरवत्तावाप्तिवचनादकर्तव्ये, नैवं, न हि कपालचतुष्टयेनावदानचतुष्टयमापादयितुं शक्यं विषयभेदात्, आप्तिवचनं त्वर्थवादमात्रं, यदि कपालचतुष्टयेनैव चतुरवत्तसमाप्येत, ततः सकृदवत्तेरेव तदवाप्तेर्न ध्रुवदानमपि स्यात्, तत्र चत्वारि चत्वारीति वीप्सा बाधकल्प्येत । यत्र वीप्सार्था विधीयते ततः प्राप्तावदानानुवादेन चतुःसङ्ख्याया वीप्सायाश्च विधानाद्वाक्यं भिद्येत, ननु द्विर्हविषोऽवद्यतीत्यस्य प्रकृतितः प्राप्तेर्द्व्यवदानं स्यात्, न, चतुरवत्तसम्पत्त्यर्थं हि प्रकृतौ ध्रुवदानमुपस्तरणाभिघारणवत्, तच्चेदन्यतः सम्पन्नं ततो ध्रुवदानमप्युपस्तरणाभिघारणवदेव निवर्तितुमर्हति[1], तस्मादर्थवादमात्रमाप्तिवचनमिति कर्तव्यमुपस्तरणाभिघारणमिति प्राप्ते उच्यते—मृन्मय्याः पुरोडाशावयवानां सुखसंसक्तानामाहवनीयपातः कथं स्यादित्येवमुपस्तरणाभिघारणे दृष्टार्थे, न च कपालानां संसक्तिः सम्भवति यत्परिहारायोपस्तरणादि भवेत् । ननु चतुरवत्तसम्पत्तिरपि दृष्टमेव प्रयोजनं न, अनङ्गत्वात्, चतुरवत्तं जुहोतीत्यवत्तं जुहोतीत्येतावद्विधीयते न तु शब्दमुपस्तरणाभिघारणध्रुवदानवदवदानमात्रचतुःसङ्ख्यानुवादमात्रं न विधानार्थम् प्रवृत्तदोषनिषेधपरत्वाद्वाक्यस्य, तस्मादकर्तव्यमुपस्तरणाभिघारणम् ॥

कपालयोः प्रथमद्वयाविधरणम् ।

सू० भक्ताणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ ३ ॥

१ निवर्तितुमर्हतीति पा ।

एवं चिन्तेयं यदा प्रकृतौ भक्षा पुरुषप्रीत्यर्थास्तदा कृष्णलाना मस्ति भक्षो नेति तत्र कृष्णलैर्भक्ष्यमाणैर्न प्रीतिर्भवति तेन प्राकृतास्ता बद्वा लुप्तार्थत्वादकर्त्तव्या । यत्तु वचन 'चुरूपकारं भक्षयतीति तदाज्यस्य भक्षणं विधत्ते तस्यादनीयत्वात् चुरूपकारस्यानुवादसम्भवाच्च कृष्णलाना, तस्मान्न तेषां भक्षणमिति प्राप्ते ब्रूमः—पूर्ववाक्ये कृष्णलानां प्राधान्यादाज्यस्य च तदङ्गत्वात्तेषामेव भक्षणवाक्येऽन्वयः, तेषां चानदनीयानामपि मदानवद्भक्षणमपि वचनाद्भविष्यतीति, तेषामेव चुरूपकरणविशिष्टं भक्षणं विधीयते ॥

कृष्णलचरौ एकधा ब्रह्मणा हरतीत्यनेन सह परिहारविधानाधिकरणम् ।

**सू॰ एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ ४ ॥**

तत्रैव श्रूयते "एकधा ब्रह्मण उपहरती"ति किमत्र सकृत्त्वं सहत्वं वा—विधीयते? उत सहत्वं? मिति कश्चात्र विशेषः? यदि सकृत्त्वं विधीयते ततश्चोदकप्राप्तानामिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षाणां कालभेदेन चतुर्हरणे प्राप्ते 'सकृद्धरति नाधिक'मिति विधानादेक एवास्य भक्ष उपहर्तव्य, भक्षान्तराणि निवर्त्तेरन्, सहत्वविधौ पुनरनिवर्तिता भक्षाः कालभेदेनोपहर्तव्या मा,ा सन्ता एकस्मिन्काल उपह्रियन्ते, तत्र सकृत्त्वे सहत्वे चैकधा—शब्दस्य लोके प्रयोगादनियमे यत एवाय साधारणो यत एव चोदकप्राप्तभक्षान्तराबाधाय सहत्वमेव विधीयते, प्राशित्रमिडामिति द्वितीयया क्रियां प्रति भक्षस्य प्राधान्यावगमाद् दृष्टार्थत्वाच्च तत्प्रतिपत्त्यर्थो प्राकृता भक्षा कृष्णलेष्वपि चोदकेन प्राप्नुवन्तीति तेषां सहत्वविधानमुपयुज्यते ॥

कृष्णलचरौ ब्रह्मणा सर्वभागापर्याधिकरणम् ।

**सू॰ सर्वत्वं च तेषामधिकारात्स्यात् ॥ ५ ॥**

तत्रैव 'सर्वं ब्रह्मणे परिहरती'ति श्रुतं तत्र संशयः किं ब्रह्मभागस्य सर्वस्य परिहारो विधीयते यद्ब्रह्मणे सर्वं तत्परिहरतीति यद्ब्रह्मणे

---

१ चुरूपाकारं भक्षयतीति पा ।

परिहरति तत्सर्वमिति वा? उत परिहरणीयस्य सर्वस्य ब्रह्मसम्बन्धो विधीयते यत्परिहरति तत्सर्वं ब्रह्मणे नाध्वर्य्वादिभ्य? इति पुरुषान्तरेभ्यो भक्षोऽपनीयत इति, तत्र चोदकप्राप्तपुरुषान्तरसम्बन्धो मा बाधीति ब्रह्मभागस्य परिहर्त्तव्यस्य सर्वता सर्वस्य ब्रह्मसम्बन्धिनो वा परिहारो विधीयत इति मन्यते, वचन स्वैवमनर्थकं स्यात्, प्रकृतित एव हि कृत्स्नस्य ब्रह्मभागस्य भक्षणाय परिहरणं प्राप्तमेव, कृत्स्नो हि भागस्तेन भक्षणीयः। अन्यथा ह्यभक्षितस्यांशस्य संस्कारहानिः स्यात्, तस्मात्प्राप्तत्वाद्ब्रह्मभागस्य कृत्स्नता न विधातव्या, तेन यत्प्रकृतौ नानापुरुषेभ्यो भक्षार्थं हरति तत्सर्वं ब्रह्मणे परिहरति, नान्येभ्य इति प्राकृता भक्षाः पुरुषान्तरेभ्योऽपनीयन्ते ॥

भक्षभागानां स्वस्वकाले च तथा भक्षणाधिकरणम् ।

सू० पुरुषापनयात्स्वकालत्वम् ॥ ६ ॥

सर्वे भक्षा ब्रह्मण उपहर्त्तव्याः, ते चैकधा ब्रह्मण उपहरतीति सह स्वविधानादेकस्मिन्नेव काल उपहर्त्तव्या इति स्थिते संशयः, किं युगपदुपहृतानां युगपद्भक्षणम्? उत प्रकृतिवद्यथाकालं भक्षणम्? तत्र "भक्षाणामुपहारो युगपद्भक्षोऽपि युगपद्भवेत्। सहाप्युपहृतौ शस्य यथाकालं तु भक्षणम्"॥ तस्माच्चोदकाबाधाय सहोपहृतानामपि प्रकृतिवद्यथाकालं भक्षणम्

ब्रह्मभक्षे चतुर्धाकरणहोमाभावाधिकरणम् ।

सू० एकार्थत्वादविभागः स्यात् ॥ ७ ॥

प्रकृतौ चतुर्धाकरणं विधाय "इदं ब्रह्मण इदं होतुरित्यादिव्यपदेशो विहितः, स किं कृष्णलेषु कर्त्तव्यो न? इति चोदकप्राप्ते, कर्त्तव्यः, नैव चतुर्धाकरणं तावच्चतुर्णां भक्षणार्थं प्रकृतौ, इह तु ब्रह्मणैव सर्वं भक्षयितव्यमिति लुप्तार्थत्वादकर्त्तव्यं, व्यपदेशोऽपि चतुर्णां व्यवस्थार्थम् इह तु सर्वस्य ब्रह्मसम्बन्धित्वेन सिद्धत्वादिदं ब्रह्मण इत्यपि निर्देशो न कर्त्तव्यः, नतरामिदं होतुरित्यादिर्होत्रादिभ्योऽपनीतत्वात् ॥

ज्योतिष्टोमे ऋत्विग्दानानामानत्यर्थताधिकरणम् ।

सू० ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् ॥ ८ ॥

---

१ एकार्थत्वाविभाग इति पा० ।

"ऋत्विग्भ्यो दक्षिणां दद्या"दित्यादि यदृत्विग्दानं तद्दृष्टार्थमान त्यर्थं वेति सन्देहे अदृष्टार्थमिति ब्रूमः—दानकर्त्तव्यताश्रुत्या दानेनान तिकर्त्तव्यतावाक्यात् तच्च दुर्बलं, तस्माद्दानमात्रं कर्त्तव्यम्। किं च द्वादश-शतादिपरिमाणनियमो मन्त्रादीतिकर्त्तव्यता कर्मानतिरूपद्रव्यता च दानस्यादृष्टार्थत्वे ऽवकल्पते नान्यथा, उच्यते कर्मकरेभ्यस्तद्दीयमानमपेक्षितान-तिद्वारेण दृष्टप्रयोजनत्वाच्च शक्यते अदृष्टार्थं कल्पयितुं, परिमाणादिनियमस्तु कामं भवत्वदृष्टार्थः न तु तावता दानस्याप्यदृष्टार्थता, तस्मात्सत्रेषु न कर्त्तव्यं दानम् ॥

ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम् ।

## सू० शेषभक्षाश्च तद्वत् ॥ ९ ॥

शेषभक्षा इडादिविषया दर्शपूर्णमासयोः सोमविषयाश्च सोमे समाम्नाताः किं परिक्रयार्थाः? उत प्रतिपत्त्यर्थाः? इति विचारः, तत्र भक्षणात्प्रीति-प्रीत्या चानतिः, अत्यतः तस्मात्तदर्थाः, नैव यागे कृतेऽवशिष्टं द्रव्यं प्रति-पत्तिमपेक्षमाणं भक्षणेन प्रतिपाद्यते, तत्तु दृष्टमेव प्रयोजनम्, अनीशानश्च यजमानो देवतायै सङ्कल्पितस्यातो न शक्नोत्यसौ तेन परिक्रेतुं, तस्मात्प्रतिपत्त्यर्था भक्षाः । स्थिते चास्मिन् भक्षाणां प्रतिपत्त्यर्थत्वे चतुर्था करणे भक्षणाश्रवणात्परिक्रयमाशङ्क्य भक्षार्थत्व[1]व्यादेशस्य तृतीये साधिता, तस्मात्सत्रेष्वप्यबाध्या भक्षाः ॥

सत्रे ऋत्विग्वरणाभावाधिकरणम् ।

## सू० वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ १० ॥

ज्योतिष्टोमे वरणमृत्विजामाम्नातम् अग्निर्होता स मे होतेत्यादि, तत्सत्रेषु कर्त्तव्यं नेति संशये चोदकानुग्रहाय कर्त्तव्यम् ऋत्विक्कृत्यार्थं चेद [2]प्रकृतौ तच्च सत्रेऽपि यजमानेष्वाधातव्यं "ये यजमानास्त ऋत्विज" इति वचनात्, अतो लुप्तार्थत्वात्कर्त्तव्यं वरणं, मैवम् आनत्यर्थं तत्प्रकृतौ, न हि तत्र यजमानैरन्योन्यमानमितव्यम्, अतोऽर्थलोपादकर्त्तव्यम्, ऋत्विक्त्वमपि

१ प्रकृते इति पा ।
२ भक्षणावताव्यादेशस्येत पा ।

यागकर्तृत्वं, तच्च प्रकृतौ वरणविधानात्तद्द्वारेणानतानामेव, तत्रेषु तु वर णस्यार्थलोपाद्विकृतवरणानामेव न विगुणमृत्विक्त्वम् शाब्दत्वादित्वं भवि ष्यति यदि तु कर्म कर्त्त्ववचनोऽयमृत्विक्शब्दस्ततो वरणेनापि यजमानेषु शक्यमाधातुं ते हि स्वार्थं कुर्वाणा न कर्मकरा भवन्ति तेन चर्त्विग्भि रेव सत्र कर्त्तव्यमिति वरणनिवृत्तिः ॥

सत्र परिक्रयाभावाधि करणम् ।

**सू॰ परिक्रयश्च तादर्थ्यात् ॥ ११ ॥**

दक्षिणादानं परिक्रयार्थं नादृष्टार्थमित्युक्तम्, इदानीं परिक्रय एव सत्रे किं कर्त्तव्यो नेति संशये पूर्वाधिकरणवत्पूर्वोऽसत्पक्षो नात्र गौर्द्वौयत इत्यादिप्रतिषेधो नासत्या दानप्राप्तौ घटते, तस्मादनिवृत्तं दानमिति विशेषाशङ्का विध्यन्तरशेषत्वयमनुवादो न प्राप्तिं सूचयति तस्माद्दान मतार्थत्वादृत्विक्परिक्रयोऽपि निवर्त्तते ॥

उदवसानीयस्य सत्राङ्ग तया तत्र दानस्य परिक्रयार्थ त्वाधिकरणम् ।

**सू॰ उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ १२ ॥**

सत्रादुदवसाय ज्योतिष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेन यजेर न्नि”ति श्रूयते तत्र संशयः किं पृष्ठशमनीयः सत्राङ्गं तत्र सत्रवद् यजमा नैरेवास्विक्त्वं कर्त्तव्यमिति दक्षिणादानमदृष्टार्थम्? उत नाङ्गमृत्विग्भिः कर्त्तव्यं परिक्रयार्थं च दानं? मिति, तत्र फलवत्सत्रसमभिव्याहारात्तदुत्तरकालेऽपि श्रूयमाणं पृष्ठशमनीयो वाजपेयस्येव बृहस्पतिसव सत्रस्याङ्गम् इतरथा हि सत्रसंयोगः काललक्षणार्थः स्यात् फलं च कल्प्येत, तस्मादङ्गं नैवम् । उदव सानं हि त्यागः स च निःशेषसमाप्तावेवकल्पते, न च निःशेषसमाप्ति स्याङ्गं सम्भवति, वाजपेयेनेष्ट्वेति तु प्रयोगसमाप्तिर्गम्यते, समाप्तेऽपि च यथोक्ते प्रयोगे सम्भवत्यङ्गान्तरं त्यक्तस्य तु पुनरङ्गं न सम्भवति, सम्भवे वा त्याग एव न स्यात्, तस्मादुदवसायेति त्यागस्य शाब्दत्वादनङ्गत्वं, न च तदपा श्रौतमेव सत्रावसानं निमित्तीकृत्य पृष्ठशमनीयविधानात् ॥

उदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् ।

**सू० तेषां तु वचनाद् द्वियज्ञवत्सह प्रयोगः स्यात् ॥ १३ ॥**

पृष्ठशमनीय एव संशयः किमुदवसायिभिः सह[1] प्रयोक्तव्य ? उतैकैकश्येन यजेरन्निति, तत्राख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेनाविवक्षितत्वात्संहत्य कुर्युरिति स्थितं तावदपर्यवसितम्, अन्तरा चिन्तान्तरं क्रियते ॥

उदवसानीये ऋत्विग्भ्योऽन्येषामृत्विक्त्वाधिकरणम् ।

**सू० तत्रान्यानृत्विजो वृणीरन् ॥ १४ ॥**

यदा संहत्य कर्तव्यं तदा किं यजमानैरेव सर्वं कर्तव्यमुतर्त्विग्भिरिति विचारः, तत्रोदवसाने यजमानानामेव कर्तृत्वात् सामान्ययेन च पृष्ठशमनीयस्य तत्समानकर्तृकत्वात्तत्रापि यजमाना एव कर्तारो नान्य इति प्राप्ते ब्रूमः—यजेरन्नित्यनेन यो व्यापारो विधीयते तस्यैवोदवसानसमानकर्तृकता ल्यप्प्रत्ययादवगम्यते नार्त्विज्यस्य, तत्तु पुरुषान्तरैः क्रियमाणं न किंचिद्विरुध्यते । किं च दक्षिणा—शब्दः परिक्रयार्थे वर्तते न चात्र परिक्रयः संभवति, अतो दक्षिणाश्रुतिवचनादन्ये भवेयुः, यद्येवं बहुत्वेऽपि दक्षिणाश्रुतेरत्रान्ये सिध्येयुः, ये यजमानास्त ऋत्विज इति साधारणं वचनं पृष्ठशमनीयपरत्वं भविष्यति तत्राहत्य परिक्रयवचनात्, भवतु नामैवं को दोषः, किमर्थं तस्याबहुत्वनिराकरणम्? उच्यते बहुत्वाभ्युपगमेनापि गम्यत एव परिक्रयार्थता वक्तुं तथाऽपि तत्त्वत उक्तं विवक्षित्वाऽबहुत्वमेव नास्तीत्युक्तम्, अपि बाहुत्वे सति संहत्य प्रयोगः स्यात् प्रधानवत्, एकैकशस्तु प्रयोगं वक्तुकामोऽबहुत्वं निराकृतवान् तस्मादन्ये वरीतव्याः, स्थितादुत्तरं नैतदस्ति संहत्यप्रयोग इति यदि बहुत्वं विधीयेत तत एवं स्यात् उदवसायेति तु ल्यपा—प्रत्ययादुदवसानसमानकर्तृकत्वावगमादुदवसाने च बहूनां कर्तृत्वात्प्राप्तमेव बहुत्वं न विधीयते, न चाविहितमङ्गं भवति, उदवसाने च गम्यमानमपि बहुत्वं निमित्तवदुद्देश्यगतत्वादविवक्षितं, यागे चानुवादत्वादनङ्गम् ॥ किं च उदवसाने निरपेक्षाः कर्तारस्तद्वदि

१ संहत्य प्रयोक्तव्य इति पा० ।

यागोऽपि निरपेक्षस्ततः समानकर्तृकत्वं सम्भवेच्चान्यथा, तस्मादेकैकश्येन प्रयुञ्जीरन् ॥

कामेष्टौ, दानस्यादृष्टार्थताधिकरणम् । **सू० कामेष्टौ च दान-शब्दात् ॥ १५ ॥**

सारस्वते सत्रे श्रूयते "प्राञ्चं मस्तरणं प्राप्याग्नये कामायाष्टाकपालं निर्वपन्ति तस्यामश्वां च पुरुषीं च धेनुके दद्यु"रिति किमिदं दानमदृष्टार्थं ? मुत परिक्रयार्थं ? मिति तदर्थं चिन्त्यते किमेतस्यामृत्विजः सन्ति ? उत यजमाना एवेष्टिमिष्टिः कर्तव्ये ? ति तत्र द्वादशाहे ये यजमानास्त ऋत्विज इति यजमानानामार्त्विज्यविहानविशेषेण प्राप्यमाणं प्राकृतेष्वेवाङ्गेषु प्राप्यते नापूर्वाङ्गेषु यूपावटस्तरणवर्हिर्वा वर्हिर्धर्मो तेनापूर्वाङ्गे कामेष्टौ यजमानार्त्विज्ये वोदकप्राप्तैर्ऋत्विग्भिर्भवितव्यं तत्र तु च तेषु दानमस्त्वपि दक्षिणाशब्दे दृष्टार्थत्वात्परिक्रयार्थमेवेति प्राप्ते ब्रूमः—प्रकृतौ वर्हिर्धर्मा. प्रदिष्टानां पदार्थानामङ्गत्वादुक्तं यदपूर्वेषु न भवन्ति, यजमानास्तु कर्तारः प्रयोगाङ्गत्वाद्विकृतावपि प्रयोगद्वारेण प्राप्नुवन्ति तस्मिंश्च प्रयोगे यदपूर्वमप्यङ्गं निपतति तत्रैव प्रसङ्गसिद्धत्वाच्च कर्त्रन्तरमपेक्षन्त इति, तस्माददृष्टार्थमेवैतद्दानम् ॥

दर्शपूर्णमासयोर्द्रव्यस्य दानस्यादृष्टार्थताधिकरणम् । **सू० देये वा चोदनाद्दक्षिणापनयः स्यात् ॥ १६ ॥**

दर्शपूर्णमासयोः श्रूयते "यदि पशोः सयाज्ञपलकपालमभिजुहुयादैन्द्राग्नं द्वादशकपालं निर्वपेत्तस्यैकहायनी गौर्दक्षिणा तां स दुष्याय दद्या"दिति किमिदं दानं परिक्रयार्थं ? मुतादृष्टार्थं ? मिति दक्षिणाशब्दात्परिक्रयार्थमिति, यद्यपि च दर्शपूर्णमासयोरेव नैमित्तिकमङ्गं वैश्वानरेष्टिस्तन्मध्य[1] एव क्रियते तथाऽपि वचनाद्दक्षिणान्तरं न्याय्यमुपपन्नम् उच्यते दुष्याय तद्दानं न चार्त्विज्यं दुष्यः सम्भवति "ऋत्विगाचार्यौ नातिचरितव्या"विति स्मरणात् तस्मादनृत्विजे दानमिदमदृष्टार्थं दक्षिणाशब्दश्च दानमात्रेऽगत्या वर्तते ॥

---

१ तन्मध्य इति पा ।

जीवतामस्थियज्ञाधिकरणम् ।

**सू० अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ १७ ॥**

इदं श्रूयते “यदि सत्राय सन्दीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिने ऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततः संवत्सरे ऽस्थीनि याजयेयु”रिति योऽयं संवत्सरे ऽस्थियागः स विचार्यते किमस्थि-शब्देन शरीरशरीरिणोरभेदोपचारेण मृतं लक्षयित्वा तस्यायं याग उच्यते तदधिकारे च यागे सन्निधानमितरेषामृत्विक्प्रस्थानीयानां कर्तृत्वमात्रम्? उतास्थि-शब्देन जीवत एव सत्रिणोऽस्थिसहायाल्लक्षयित्वा तेषामेव यागविधि?रिति तत्रास्थि-शब्दस्य तच्छरीरे पुंसि प्रवृत्तेरितरेषां च यजन्तपरस्मैपदनिर्दिष्टत्वात्परार्थे कर्मणि याजयितृत्वावगमान्मृताधिकारमिदं कर्म सत्रमध्यमरणनिमित्तं तस्यैव फलदमिति प्राप्ते ब्रूमः—न कथंचिदपि मृतस्य साक्षाद्वा संविधानाद्वा कर्तृत्वं सम्भवति न चाकर्तुरधिकारः तस्माज्जीवतामेवायं यागः, याजयतिश्च ये तेषां याजयितारस्तदभिप्रायेण भविष्यति ॥

अस्थियज्ञे यजमानधर्मानुष्ठानाधिकरणम् ।

**सू० यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टितदर्थत्वात् ॥ १८ ॥**

जीवदधिकारपक्षे चोदकप्राप्तं न किञ्चिद्बाधितव्यं, मृताधिकारे तु भवति केषांचिद्बाधः तदिह कृत्वा चिन्तया किं बाध्यं किं नेति चिन्त्यते, किं यजमानजपाप्यायनादयश्च संस्कारा दीक्षणीयेष्टिश्च ते किमस्थ्यधिकारपक्षे कर्तव्या नेति चोदकानुग्रहाय कर्तव्याः नैवं, दीक्षणीयेष्टिर्धर्मनियमसङ्कल्पश्च दीक्षा, न च सा मृतस्य सम्भवति, तस्माल्लुप्ताः, वपनं तु दूरापास्तं केशश्मश्रुणोरभावात् जपश्चाशक्यत्वात् कस्यचं तु क्रियते गुणभूतत्वात् । यत्र यत्र यजमानो गुणभूतः यथा गुरुं यजमानोऽन्वारभत इत्यादौ तत्कर्तव्यं नेति अचेतनानामप्रवृत्तेः स्यात-न्यतद्गुणकर्तृत्वासम्भवादकर्तव्यं, न चेतन्यापेक्षं कर्तृत्वं काष्ठादीनामपि

ज्वलनादौ कर्तृत्वसम्भवात् यस्यैवान्यानपेक्षयाऽऽप्यातोपात्तव्यापारसमवा-
यसम्भवः स एव कर्ता, तस्माच्छुकान्वारम्भणादिकर्मास्येभि कर्तव्यम् ॥

अस्थिपक्षे आद्याङ्कामयक काम्यानुष्ठानाधिकरणम् ।

सू० काम्यानि तु न विद्यन्ते कामाज्ञा-
नाद्यथेतरस्यानुच्यमानानि ॥ १९॥

गुणकामानां विकृतौ प्रवृत्ति हत्वा चिन्त्यते यदि कामयेत
सर्पुस्त्व पर्जन्यः स्यादिति सद्योऽभिनुयादित्यादयो गुणकामाश्रुताधिकार-
पक्षे प्रवर्तन्ते नेति चोदकप्राप्तेः प्रवर्तन्ते नेव, कुतः कामाज्ञानात्, न ह्यत्र
ज्ञायते किं मृतस्येष्ट न वेति तस्मादप्रवृत्तिर्गुणकामानाम् ॥

अस्थिपक्षे अद्या मृतस्य कामाद्यायुरनुष्ठानाधिकरणम् ।

सू० ईषार्थस्याभावात्सूक्तवाकवत् ॥
२० ॥

"सूक्तवाकगतान्यायुराशास्ते" इत्यादीनि फलपदानि प्रवर्तन्ते नेति
संशये सूक्तवाकस्य प्रहरणाङ्गतया नित्यवत्प्रवृत्तेस्तद्विचन्यनानामायुरादि-
पदानामपि प्रवृत्ति', नेव फलनिर्देशा ह्येते मान्त्रवर्णिकफलकल्पनाम्, न च
मृतस्य फलाशासनङ्गम्यत इत्युक्तम्, अतो लुप्तार्थेत्वादेषां निवृत्तिः ॥

अस्थिपक्षे होतृकामाभावाधिकरणम् ।

सू० सर्वे होतृकामाः ॥ २१ ॥

प्रकृतौ सन्ति होतृकामा' य कामयेत पापीयान् स्यादिति नीचैः-
स्तरान्तस्य याज्यया वषट् कुर्यात् य कामयेत वसीयान् स्यादिति उच्चैः-
स्तरान्तस्य याज्यया वषट् कुर्यादि"त्यादय, ते मृताधिकारेऽपि कर्मणि
होतुः कामनासम्भवाच्च निवर्तन्तु, निवृत्तिर्हि यजमानफलमेव हि यत्रापि
निर्दिश्यते, न चानिर्दिष्ट फल भवति, न च मृतस्येच्छा विद्यते तस्मा-
देषमादीनामपि निवृत्तिः ॥

यजमानस्य दिष्टगतावपि स र्वस्याऽऽस्यसमापनाधिकरणम् ।

सू० सर्वस्यारस्यादिष्टगतौ समा-
पनं न विद्यते कर्मणो जीव
संयोगात् ॥ २२ ॥

सर्वस्वारं नामैकाह' स्वर्गकामस्य विहितः, तदारम्भस्योत्तरकाले

"ब्राह्मणाः समापयत मे यज्ञ"मिति प्रैषमृत्विग्भ्यः प्रदाय यजमानो म्रियते तस्मिन्मृते शेषं कर्म समापनीयं नेति संशये, न समाप्यं मृतस्य कर्तृत्वासम्भवात्, यजमानस्य तावत् समाप्तिः कर्तव्या, यच्च यजमानस्य कार्यं तद् ऋत्विजः कुर्वन्ति नान्यत्तस्मादृत्विजोऽपि न समापयेयुः, उच्यते ।–यद्यसम्भवि कर्तव्यं तत एवं भवेदिदं जीव'वेव तु स प्रैषाच्छिष्टे कर्तृत्वमृच्छति" वरणभरणादिसमाचरणमेव जीवदवस्थायामपि यजमानस्य कर्तृत्वं, तच्च मरणोत्तरकालभाविन्यपि कर्मशेषे जीवदवस्थायामिव संविधानेन सम्भवति, मत्यवमेव च समापयतेति प्रैषेण समाप्तिश्चोद्यमाना न शक्यतेऽपह्नोतुं, न हि ब्राह्मणभागगताद्विधेः प्रैषस्य कश्चिद्विशेषः, न हि प्रैषे प्रेषकपुरुषस्य स्वातन्त्र्यं येन पौरुषेयत्वाद्दोषः स्यात्, प्रयोक्तृत्वमात्रं तु ब्राह्मणगतेष्विव विधिषु प्रैषेष्वपि पुरुषाणाम्, अतः मत्यवमेव विहितं समापनं स्वर्ग एव वा यत्र मरणेनार्थेनः फलं न मरणं, मरणकाम इत्यदृष्टमरण इत्यर्थः, तेन यो ह्येवं ज्ञात्वा स्वर्गं प्राप्नवानीति कामयते तस्यायं क्रतुः, तथा च हरिभिहक्तं "प्रधानस्य मरणेनार्थिन इज्यां प्रवर्तयन्ती" ति तेन संजातेऽपि मरणे स्वर्गार्थमेव समापनीयम् ॥

यजमानस्य दिष्टगतौ सर्वस्वारस्य शुक्लस्यार्थानिर्देशानुष्ठानाधिकरणम् । सू गते कर्मास्थियज्ञवत् ॥ २३ ॥

अथ मृते यजमाने कर्मशेषे क्रियमाणे किं बाध्य? किं वा ने?ति प्रश्नेनैवोपक्रमः, अत्रोत्तरम् अस्थियज्ञे ऽस्यामधिकारपदे यथोक्तं तथेहापि द्रष्टव्यम् ॥

सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनाधिकरणम् । सू० जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ २४ ॥

सर्वस्वार एव मरणात्प्राग्जीवदवस्थायामायुराशास्त इत्यायुराशीर्वक्तव्या ने?ति संशयः तत्र मरणाभ्युपगमेन प्रकृतस्य नाशासितव्यमायुः प्रागपि त्वारम्भकालान्मरणं संभवति, तथा सति क्रतोर्वैगुण्याद्यावदारम्भकालमाशासितव्यमायु", तस्मादायुराशीर्वक्तव्या ॥

१ जीवन्नेव तु इति पा-

द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ।

**सू० क्रिया स्याद्धर्ममात्राणाम् ॥ २५ ॥**

यत्प्रकृतावानत्यर्थमृत्विग्वरणं दक्षिणादानं च न तत्सत्रे स्यादित्युक्तं, यत्त्वदृष्टार्थमृतुयाज्यावरणम् आत्रेयाय हिरण्यदानं च तत्सत्रेऽपि कर्तव्यमिति सूत्रोदाहरणमाचक्षते ॥

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ।

**सू० गुणलोपे च मुख्यस्य ॥ २६ ॥**

दर्शपूर्णमासयोरग्निहोत्रहवण्याहवींषि निर्वपतीति श्रुतो निर्वापः पवमानेष्टिषु चोदकेन प्राप्तः कर्तव्यो नेति संशये न कर्तव्यः कस्मात् अग्निहोत्रहवण्यभावात्, ययाऽग्निहोत्रं हुतं सा ह्यग्निहोत्रहवणी न च पवमानेष्टिवेलायामग्निहोत्रं हुतं सम्भवति, विना चाऽग्निहोत्रहवण्या निर्वापो विगुणत्वादकर्तव्य इति प्राप्ते ब्रूमः —अतिदेशेन हि कार्यमुखेन पदार्थेषु प्राप्यमाणेषु हविः संस्कारार्थतया निर्वापः प्राप्यते तदङ्गभूताग्निहोत्रहवणीसम्बन्धश्च प्राप्यते, न चाप्राप्ताया गुणत्वम् अतस्तदभावेऽप्यगुणत्वात्कर्तव्य एव निर्वापः ॥

वाजपेये मुष्ट्यनावाधिकरणम् ।

**सू० मुष्टिलोपात्सङ्ख्यालोपस्तद्गुणत्वात्स्यात् ॥ २७ ॥**

वाजपेये श्रूयते "बार्हस्पत्यो नैवारः सप्तदशशरावश्चरुर्भवती" ति अस्ति तु प्रकृतौ 'चतुरो मुष्टीन्निर्वपती'ति चतुःसङ्ख्या मुष्टिद्रव्यस्य तदुभयमिह चोदकेन प्राप्तं न च चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणं चरुं सम्पादयितुं शक्यते अतोऽन्यतरस्य बाधितव्ये सति किमुभयं बाधितव्यं शरावद्रव्यं मुष्टिद्रव्यं सप्तदशसङ्ख्या वा च चतुःसङ्ख्या किं वाऽन्यतरत् तत्रापि किमनियमः ? अथ वा मुष्ट्यनुग्रहः ? सङ्ख्यालोपः ? विपरीतं वे?ति, तत्राविशेषादुभयोर्बाधः, तत्रापि समानकार्यत्वात् द्रव्यं द्रव्येण सङ्ख्या सङ्ख्ययेत्येक एव, सप्तदशसङ्ख्याशरावपरिमाणं च चरुद्रव्याङ्गं चतुःसङ्ख्या मुष्टिश्च निर्वापाङ्गम् अतो न ताद्रूप्यादेकविषयत्वं येनोभयमुभयेन बाध्येत चतुर्भिर्मुष्टिभिः सप्तदशशरावश्चरुर्न सम्पादयितुं शक्यत इत्यर्थाद्बाधः, तत्रैकबाधेनोपपत्तौ नोभयबाधनं युक्तं, तस्मादन्यतरबाध

तत्राविशेषादनियम इति द्वितीयः, सङ्ख्याया द्रव्याङ्गत्वात्प्रधानस्य मुष्टिद्रव्यस्यानुग्रहः सङ्ख्यायास्तु बाध इति तृतीयः, न सङ्ख्याया मुख्याङ्गत्वं वाक्यलक्षणसमानाधिकरणद्रव्यसम्बन्धबाधेन द्वितीयाश्रुत्या निर्वापाङ्गत्वावगमादुभयोरपि क्रियाङ्गत्वावगमात्तुल्यत्वं तत्र मुख्यत्वात्सङ्ख्यानुग्रहो जघन्यत्वाच्च मुष्टिलोप इति सिद्धान्तः ॥

धेनुमालभेतेत्यादिश्रुतौ धेन्वादिशब्दानां गवान्यताधिकरणम् ।

सू० औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ २८ ॥

'द्यावापृथिव्यां धेनुमालभेत वायव्यं वत्समैन्द्रमृषभ''मिति गोद्रव्यासाधारणगुणवचनेषु धेन्वादिशब्देषु श्रुतेषु किं चोदकप्राप्तमजद्रव्यं भवतेति ने?ति संशयः, तत्र यद्यपि गोरसाधारणं गुणमेते वदन्ति तथाऽपि न गोर्वाचकाः तेनात्र गोर्नोपदेशेन नातिदेशेन प्राप्तिः, अजस्त्वतिदेशेन प्राप्यते तत्रैव धेन्वादिशब्दा लक्षणया वर्तन्ते, यथाजमृषभमित्यादिष्विति प्राप्ते ब्रूमः—नानुमानिकचोदकानुरोधेन श्रुतानां शब्दानां लक्षणावृत्तिर्न्याय्या, तेन यद्यपि गोद्रव्यं न शाब्दं तथाऽपि श्रुतगुणविशेषसम्पादनाय गौरेवालब्धव्यः, चोदकप्राप्तं स्वजद्रव्यं प्रत्यक्षश्रुतगुणविशेषविरोधान्न प्राप्यते ॥

वायव्यं श्वेतमालभेतेत्यनेन अजस्यैवालम्भनाधिकरणम् ।

सू० नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ २९ ॥

यस्तु साधारणगुणवचनः श्वेतादिशब्दः "वायव्यं श्वेतमालभेते"ति स चोदकप्राप्ते ऽप्यजे सम्भवतीति न तत्रास्य बाधकमिति प्रत्युदाहरणमेतत् ॥

साद्यस्क्रे त्रिवत्साख्य खले वाल्यास्तदङ्गस्य च यथाक्रमत्वादिदर्वेः श्रौतत्वाऽनियमाधिकरणम् ।

सू० विप्रतिषेधे तद्वचनात्प्रकृत[1]तेर्गुणलोपः स्यात्तेन च कर्मसंयोगात् ॥ ३० ॥

साद्यस्क्रे श्रूयते "खले वाली यूपो भवती"ति तत्र संशयः किं चोदकप्राप्तं खादिरादिकं यूपं छेदनादिभिः कृत्वा सखले वाली कर्त्तव्यः

१ प्राकृतगुणलोपः इति पा० ।

यूप खले वाली भवतीति वचनव्यक्तिः? उत यैवोत्तरवेदिभूते खले पूर्वा-
वस्थिता खादिर्यखादिरी वा खले वाली तस्यामेव पशुनियोजनं कर्तव्यं या
खले वाली स यूपो भवति यूपकार्यकारी भवतीति वचनव्यक्तिरिति, तथा
चित्रायामिष्टौ श्रूयते दधिमधुघृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजा-
पत्यमिति, तत्रापि चोदकप्राप्ता व्रीहयोऽवघातादिभिस्तण्डुलीकर्तव्याः?
उत वैदा अवैदा वा लोकसिद्धास्तण्डुला ग्रहीतव्याः? इति, तत्र चोदका-
नुग्रहाय यूपस्य खले वालीत्वं व्रीहीणां च तण्डुलत्वं यथासिद्धोपादाने
हि चोदकप्राप्ता खादिरादयो व्रीहयस्तत्संस्काराश्च छेदनावघातादयो
बाध्येरन्। किं च खले वाली यूपकार्यं भवतीति विधौ यूप-शब्दस्य यूपे
तत्कार्यकरे यजमानशब्दस्येव प्रस्तरे गौणी वृत्तिः स्यात्, यूपस्य तु खले
वालीत्वविधौ न गौणत्वं, तस्मात्खादिरादय खले वाली कर्तव्या, व्रीह-
यश्च तण्डुलीकर्तव्या इति प्राप्ते ब्रूम —यूपस्य खले वालीत्वमदृष्टार्थं विधी-
यते। खले वाल्यास्तु यूपस्य दृष्टार्थं पशुबन्ध[1]क्रमणात्, तस्माद्यथासिद्धैव
खादिर्यखादिरी वा खले वाली यूपकार्यं कुर्यात्, तण्डुलाश्च यथासिद्धा
एवोपादेया, प्रकृतौ हि अपूर्वस्य विधानात्प्रकृतिद्रव्यमुपादाय स्वयमेव
हविः कर्तव्यं विकृतावपि यत्र अपूर्वं चोदितं तत्रापि प्रकृतिद्रव्यं गृहीत्वा
स्वयमेव हविः कर्तव्यं तण्डुलेषु अपूर्वस्यार्थाभावान्निवृत्तौ न अपूर्व-
कर्तव्यतावशेन प्रकृतिद्रव्यप्राप्तिः, प्राप्ते च प्रकृतद्रव्योपादाने व्रीहिवत्
नियमः, तस्माल्लोकप्रसिद्धा एव तण्डुला वैदा अवैदा वा ग्रहीतव्याः ॥

खले वाल्या तक्षणाद्यनङ्गत्वाधिकरणम्।

**सू० परेषां प्रतिषेधः स्यात् ॥ ३१ ॥**

यथासिद्धे खले वाल्युपादानात्खादिरादिकाष्ठं बाध्यमिति स्थितम्
अथ छेदनतक्षणादयः संस्काराः कर्तव्या नेति सन्देहे चोदकानुग्रहा-
त्कृत्स्नत्वाच्च कर्तव्याः प्रयोजनाभावात्तु न कर्तव्याः, क्रिया हि खले
वालीश्वत्थीभूता निपातोच्छ्रिता तस्याः छेदनं तक्षणं निखननमुच्छ्र-
यणं च लुप्तार्थमकर्तव्यम् ॥

---

१ पशुबन्धक्रमादिति पा।

*खले वाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम्।*

सू० अर्थाभावे संस्कारार्थत्वं स्यात ॥ ३२ ॥

अथ यत्पर्यूहणपरिशंहणपरिषेचनादि खले वाल्यां सम्भवत्प्रयोजनं यच्चादृष्टार्थम् अञ्जनप्रोक्षणादि तत्खले वाल्यां भवति नेति संशये न भवतीति ब्रूमः—कुतः यूपार्थत्वात्तेषाम् इह चायूपे खले वाल्यां यूपकार्यकरणानुप्तार्थं पर्यूहणादि न कर्त्तव्यम् उच्यते—न यूपो नामैकः कश्चिदर्थोऽस्ति यदर्थाः संस्काराः किन्तु छेदनप्रोक्षणादिजन्यदृष्टादृष्टरूपाः संस्काराः काष्ठे वर्त्तमाना यूपशब्दाभिधेया नियोजनस्याद्भूताः तत्र केषांचिल्लुप्तार्थानां लोपेऽप्यन्येषामलुप्तार्थानां निवृत्तौ नास्ति प्रमाणं, तस्मात्पर्यूहणाऽञ्जनादयः कर्त्तव्याः ॥

*महापितृयज्ञे धानासु अवघातानुष्ठानाधिकरणम्।*

सू० अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात ॥ ३३ ॥

महापितृयज्ञे श्रूयते "सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानां पितृभ्योऽग्निष्वात्तेभ्योऽभिवा[1]सायै दुग्धे मन्थ"-मिति तत्र धानासु हन्तिः कर्त्तव्यो नेति संशये विघातादकर्त्तव्य, क्रियमाणे हि हन्तौ धानात्वं विहन्येत सक्तवो भवेयुः तस्मादकर्त्तव्योऽवघात[2], सत्यं, अपवोत्तरकालं क्रियमाणे विघातः स्यात्, पूर्वं तु हन्तिं कृत्वा पश्चात्पाकः क्रियते क्रममात्रं बाधित्वा तथा न विहन्यते, न हि क्रमबाधे पदार्थोऽपि बाधितव्यः, तदुक्तं "गुणलोपे च मुख्यस्य क्रिया स्यादि"ति तस्मात्कर्त्तव्योऽवघात इत्येवं भाष्यकारेणाधिकरणं व्याख्यातं, तदिदमनुपपन्नं प्रकृतावपि पूर्वमवघातः ततः पाकः तेन नास्ति क्रमविपर्यासः, पुनरुक्तं च गुणलोपे च मुख्यस्येत्यनेन न्यायेन । ये त्वाहुः न क्रमो नाम कश्चिद्गुणः पदार्थव्यतिरिक्तोऽस्ति यस्य पृथग्बाधं व्यवस्थापयामः, पदार्था एव हि त्रितताः प्रतीयन्ते तेन केवलस्य क्रमस्य बाधासम्भवात्तद्बाधे पदार्थोऽपि बाधित इत्यवघातो न कर्त्तव्य इत्येतन्निराकरणार्थमिदमधिकरणम् । यत्तु विपर्यासो

१ अभिवान्यायै दुग्धे मन्थमिति पाठस्तु समीचीनः ।

२ क्रियन्ते इति पा० ।

नास्तीति तत्राप्याहुः धानासु श्रपणं कृत्वाऽवघातः प्रकृतौ च विपरीतमि-
त्यस्ति विपर्यास इति यदि विपर्यासः कथं सत्येवघातानुष्ठाने, न हि
क्रमस्य पृथग्बाधः सम्भवति सत्यं, न त्वत्र परमार्थतः क्रमबाधः प्रकृतौ
हि श्रुतेष्वेव व्रीहिष्ववघातः कृतः, तत्रापि श्रुतास्वेव धानास्ववघात इति
नास्ति क्रमविपर्यासः प्रकृतावघातपरं श्रपणम् इह तु विपरीतमित्येतावता
विपर्यासवाचो युक्तिः । ननु धानावस्थाया हन्ति क्रियमाणो विघातं कुर्यात्
यथा न विघातो भवति तथा कुर्महे सकृद्देशानभ्यस्तमवहननं क्रियते, न
च भविष्यति विघात इति तदयुक्तं, सम्भवति हि पृथक्क्रमस्य बाधः, न
एव हि पदार्थो अन्येनान्येन च क्रमेणानुष्ठातुं शक्यन्ते तेन क्रमस्य प्राकृ-
तस्याभावेऽपि पदार्था न निवर्तन्ते । यत्तु श्रपणं कृत्वाऽवघात इति तत् "पूर्वं
हन्ति कृत्वा पश्चात्पाकः" कार्य इति भाष्यविरुद्धं यदपि श्रपणोत्तरका-
लेऽप्यवघाते विपर्यासो नास्ति श्रुते द्रव्ये ऽवघातकरणादिति तदप्यसारं,
प्रकृतौ हि द्वे द्रव्यश्रवणे पुरोडाशश्रवणं व्रीहिश्रवणं च, तत्र धाना देव-
तासम्बन्धात्पुरोडाशकार्ये वर्तन्ते न व्रीहिकार्ये, प्रकृतौ च व्रीहिविषयोऽ-
वघातो न पुरोडाशविषयः, तेन धानास्वपि चोदकप्राप्तेषु व्रीहिष्ववाव-
घातो न धानावस्थायां तत्र क्रियमाणे हन्तौ क्रमविपर्यासः स्यादेव
धानासु वा ऽवघातकरणे धानात्वं विहन्येत । यत्तु सकृद्देशावहननिष्याम
इति तथा सत्यप्राकृतकार्यमदृष्टार्थमवहननं स्यात्, प्रकृतिवत्तु तुषविमो-
कार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात्, तस्मादेवमधिकरणं युक्त-
मिति यथावार्तिकं व्याख्यास्याम, न धाना उदाहरणं तत्रैव मन्थ उदा-
हरणं, तत्र पेषणं श्रपणोत्तरकालमर्थाद् भवति तत्प्राकृतं ? श्रुतमाकृतं ? मिति
संशयः, प्रकृतौ पाकात्पूर्वं पेषणं पाकार्थं भवति न ह्यसति पेषणे पुरोडाश-
निर्वर्तकः पाकः कर्तुं शक्यते, तेन पाकार्थं[1] पेषणं मन्थे तु विनैव पेषणं
न भर्जनरूपः पाकस्तण्डुलावस्थायामेव कृत इति लुप्तार्थं प्राकृतं पेषणं
निवृत्तं भर्जितेषु तण्डुलेषु सक्तुभावापादनाय लौकिकं पेषणमधर्मकं कर्त-

१ पाककार्ये पेषणमिति पा ।

व्यमिति प्राप्ते ब्रूमः—न प्रकृतौ पाकार्थं पेषणं द्वितीयाश्रुत्या पेषणं श्रपणं नोभयमपि हविरर्थम्, अर्थात्तु तयोः पूर्वं पेषणम् इह त्वर्थादेव पश्चात्क्रियत इति क्रममात्रमन्यत्, न च तदन्यत्वे पदार्थान्यत्वं तस्मात्प्राकृतमेव पेषणमिति कर्त्तव्याः पेषणधर्माः ॥

इति शास्त्रदीपिकायां दशमस्य द्वितीयः पादः ॥ २ ॥

## अथ तृतीयः पादः ।

प्रयाजादौ सामिधेन्यादि प्राकृतेतिकर्त्तव्यतानुष्ठानाधिकरणम् ।

सू॰ विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥

आग्नीषोमीयपशौ श्रूयते "एकादश प्रयाजान् यजती"ति तथा चातुर्मास्येषु नव प्रयाजान् यजति नवानुयाजानि"ति तथा वायव्ये पशौ हिरण्यगर्भः समवर्त्तताग्र इत्याघारमाघारयतीति एवमन्यत्रापि यत्र प्राकृतमङ्गमप्राकृतगुणयुक्तं श्रूयते तदुदाहृत्य विचार्यते किं तत्र चोदकेन प्राकृतेतिकर्त्तव्यता प्राप्यते न वे?ति तदर्थमिदं विचार्यते किमेतैर्गुणविशिष्टप्रयाजादिविधिः? उत प्रयाजाद्यनुवादेन गुणमात्रविधि?रिति तत्रातिदेशेन पदार्थानां न स्वरूपतः पर्युपस्थापनमस्ति प्रकारमात्रातिदेशात्, अतो नातिदेशप्राप्त्यङ्गीकरणेन गुणविधिः सम्भवति तस्मात्सङ्ख्यादिविशिष्टाः प्रयाजादय एवात्र विधीयन्ते, एवं च धात्वर्थविधानाच्छ्रुत्यनुग्रहो भवति, ते च प्रयाजादयः प्रकृतौ कॢप्तोपकारा विकृतौ श्रूयमाणा गृहमेधीयाज्यभागवदतिदेशं निरुन्धन्ति तस्माच्च प्राकृतेतिकर्त्तव्यताऽतिदिश्यत इति प्राप्ते ब्रूमः—प्रकारद्वारतः प्राप्ते ऽतिदेशेन कर्मणां तान्यनूद्य गुणः शक्यो विधातुमिति सद्विधिः । न च सत्यां गतौ न्याय्यं विशिष्टविधिगौरवम् । वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः ॥ यो ऽपि हि श्रुत्यर्थविधिलिप्सया धात्वर्थे विधित्सति तेनापि गुणवादस्याप्रमादपाठादवश्यं वाक्यार्थविधिरङ्गीकर्त्तव्यः, तथा सति तत्र सङ्क्रान्ते विधौ

धात्वर्थानुवादेनानेकविधिपरिजिहीर्षया प्रकार[1]द्वारा प्राप्तिमालोच्य तदनुवादेन विधिर्गुणमात्रं विधत्ते, तस्मादेकजातीयकेषु पशुमेधीयन्यायाभावादस्त्यतिदेशः ।

वायव्यपशौ हिरण्यगर्भ इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वाधिकरणम् ।

**सू० हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ २ ॥**

वायव्ये पशौ श्रूयते "हिरण्यगर्भः समवर्तताग्र' इत्याघारमाघारयतीति तस्मादाघारानुवादेन मन्त्रविधिरिति स्थितम्, प्रकृतौ च द्वावाघारौ पूर्वः प्राजापत्योऽमन्त्रकश्च, उत्तरस्त्वैन्द्रः समन्त्रकः, तदिह किं पूर्वस्याघारस्य मन्त्रविधिः ? उतोत्तरस्ये'ति संशये मन्त्रस्य प्रजापतिलिङ्गत्वात् "प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाये'ति च वाक्यशेषात्पूर्वस्येति प्राप्ते ब्रूमः पूर्वस्मिन्मन्त्राभावान्न मन्त्रकार्यमस्ति तत्र मन्त्रविधौ मन्त्रकार्यमप्राकृतं कल्प्यं स्यात्, उत्तरे तु प्रकृतावेव मन्त्रविधानादस्ति मन्त्रनियमजन्यमदृष्टं तत्र मन्त्रविधानं सुकरं मन्त्रलिङ्गं त्वैन्द्रेऽप्यविशिष्टमिति दर्शितं भाष्ये वाक्यशेषोऽपि प्रजानां पतिः प्रजापतिरित्येवमिन्द्रपक्षोपपन्नः, यो[2] हि खलु भाव प्रजापतिः स एवेन्द्र इति चैकत्वादुपपत्तिर्वाक्यशेषस्य पूर्वाघारस्य चाहत्यैवामन्त्रत्वं दृश्यते न स्वाहाकारो न मन्त्रश्चाहेति तस्मादुत्तरस्य मन्त्रः ॥

चातुर्मास्येषु वेदिमध्याद्ध हननियमनस्य प्राकृतगुणविधित्वाधिकरणम् ।

**सू० संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ ३ ॥**

उत्करे वाजि[3]नमासादयति परिधौ पशुं नियुञ्जीते"त्यत्र संशयः किमप्राकृतमासादनान्तरं नियोजनान्तरं वा दृष्टार्थकमुत्करपरिधिविधिविशिष्टं विधीयते ? उत प्राकृतयोरासादननियोजनयोरदृष्टप्रयोजनयोरुत्करपरिधिविधि ? रिति तत्र तीरथावस्थानत्वात्कोत्करस्य परिधेश्चा

---

१ प्रकारद्वारप्राप्तिमालोच्येति पा ।

२ योऽपि खलु याज्ञ इति पा ।

३ उत्करे वाजिनमासादयन्ति इति पा ।

णीयत्वाच्च दृष्टकार्यमासादनं, नियोजनं च शक्यं कर्तुम् अतोऽप्राकृतकार्यमन्यद्विधीयते, एवं च धात्वर्थविधानाच्छ्रुत्यनुग्रहः, अन्यथा वाक्यार्थविधिः स्यादित्येवं प्राप्ते ब्रूमः–न सम्भवति गुणमात्रविधौ विशिष्टविधिर्युक्तः साधारणश्च वाक्यार्थविधिः गुणस्यावर्जनीयत्वात्, अतः प्राकृतयोर्गुणविधि[1], न चाशक्यता पृथग्वर्तामुत्करणस्य स्वविमानं च परिधेराश्रित्य प्राकृतकार्यसम्पादनात् ॥

अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम् ।

सू० षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ ४ ॥

अग्नौ प्रकृतितो दीक्षाऽऽहुतयः षट्प्राप्तास्तासां च पञ्चमन्त्राः प्रकृतित एव प्राप्ताः "आकूत्यै प्रयुजेऽग्नये स्वाहे"त्यादयः आम्नायपरे पञ्चमन्त्राः "आकूतिमग्निं प्रयुजं स्वाहे"त्यादयः, ते च दीक्षार्थतया विनियुक्ताः षड्भिर्दीक्षयतीति दीक्षाहुतीनां चाभ्यासः श्रूयते "द्वादश जुहोती"ति, तत्र संशयः किं वैकृतैर्मन्त्रैः प्राकृता बाध्यन्ते समुच्चीयन्ते वेति, तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च "वैकृताः प्राकृतान्मन्त्रान् बाधेरन्नेकार्थत्वात्" । यद्यपि द्वादश जुहोतीति वचनाद्धोमानामभ्यासः तथाऽपि वैकृतानामेव प्रत्यक्षवचनविहितानां चोदकप्राप्तप्राकृतमन्त्रबाधेन होमाङ्गत्वात्तैरेवाभ्यस्तैर्द्वादशापि होतव्या इति प्राप्ते ब्रूमः–न प्रत्यक्षेण वाक्येन होमार्थं वैकृताः श्रुताः । दीक्षार्थताबलात्तेषां होमाङ्गत्वं प्रकल्प्यते ॥ सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते । वैकृतैः प्राकृतास्तस्मात्समुच्चेया न बाधनम् ॥ षड्भिर्दीक्षयतीति दीक्षार्थता श्रुता सा च स्वाहाकारलिङ्गानां होमद्वारेणेति दीक्षार्थत्वसिद्धये होमाङ्गता कल्प्यते सकृत्प्रयुक्तैरेव च षट्सु होमेषु दीक्षार्थतासिद्धेर्नाभ्यासे प्राकृतबाधे वा प्रमाणमस्ति, तेनाभ्यासवशेन होमानां द्वादशत्वान्मन्त्राणामपि प्राकृतवैकृतानां समुच्चयः ॥

---

१ पृथग्वर्तामुत्करस्येति पा० ।

पुनराधेयेऽग्न्याधानदक्षिणाया निवृत्त्यधिकरणम् ।

**सू॰ अग्न्या[1]धेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ५ ॥**

अस्ति पुनराधेयं तच्चाग्न्याधेयधर्मकं तत्र श्रूयते "पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः" इत्यादि सेयं दक्षिणा किमग्न्याधेयस्य दक्षिणा नामैकां देयेन्वेशमादीनां निवर्त्तिका न वे?ति चिन्तायां [2]सत्यप्येककार्यत्वे सयत्नादुभयोर्ददातीति समुच्चयप्राप्तावुच्यते विध्यन्तरप्राप्तदक्षिणात्वात्तस्य समुच्चयविधानासामर्थ्याद्दक्षिणयोश्चानत्यर्थत्वमनेककार्यत्वेनैककार्यत्वाद्वैकल्पिकाभिः प्राकृतीनां बाधः कथं पुनरुभयोर्ददातीति निर्देशः—उच्यते कृत्वा ह्यग्न्याधेयं पश्चात्पुनराधेयं क्रियते तेन पूर्वदत्तमप्यस्ति दीयमानापेक्षयोभयदाननिर्देशः ॥

आग्रयणे वासोवत्साभ्यामन्वाहार्यस्य निवृत्त्यधिकरणम् ।

**सू॰ वासो वत्सं च सामान्यात् ॥ ६ ॥**

"आग्रयणे वासो दक्षिणा वत्सः प्रथमजो दक्षिणे"ति श्रुतं, वासो वत्सं समानकार्यत्वात्प्राकृतस्यान्वाहार्यस्य निवर्तकमिति सिद्धमेवोत्तरविवक्षायै प्राप्यते ॥

आग्रयणे वासोवत्सयोरन्वाहार्यधर्मानुष्ठानाधिकरणम् ।

**सू॰ अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् ॥ ७ ॥**

अन्वाहार्यकार्यापत्तेर्वासोवत्सं [3]तद्धर्मांल्लभेत इत्येतदपि प्राप्तसूत्रमेव ॥

आग्रयणे वत्से पाकाभावाधिकरणम् ।

**सू॰ दाने पाकोऽर्थलक्षणः ॥ ८ ॥**

अन्वाहार्यपाको वत्से कर्तव्यो नेति संशये चोदकानुग्रहाय पक्त्वा वत्सशरीरं मांसं दक्षिणात्वेन देयमिति मन्यते, श्रुतस्तु वत्सद्रव्य

१ आग्न्याधेयस्येति पा ।
२ चिन्तायां सत्यां सत्यप्येककार्यत्वे पा ।
३ लभते इति पा ।

पाकेन नश्येत, अश्रुतं च मांसं दीयेत, वत्स-शब्दो वा मांसलक्षणार्थः स्यात्, न चैतन्न्याय्यं, तस्माच्च वत्सपाकः ॥

[illegible] वाससि पाकाभावाधिकरणम् ।

सू० पाकस्य चान्नकारितत्वात् ॥ ९ ॥

अथ वाससि पाकः स्याद्वेति संशये विरोधाभावात् पच्येत, प्रयोजनाभावा[1]न्नास्य पाकः, प्रकृतौ हि दक्षिणाभूतौदनसम्पत्त्यर्थं पाको नादृष्टार्थः, तस्मान्न वाससः पाकः ॥

[illegible] वासोवत्सयोरभिघारणाभावाधिकरणम् ।

सू० तथाऽभिघारणस्य ॥ १० ॥

अभिघारणमन्वाहार्यधर्मः किं वासो वत्से कर्त्तव्यं, नेति, प्रकृतावदृष्टार्थत्वादिहाविरोधात्कर्त्तव्यं, नैवं, स्वादिमार्थं हि तद्दृष्टेनैव प्रकृतावन्नानामुपकरोति, न च वासोवत्सयोः स्वादिम्ना प्रयोजनमस्ति, अतोऽभिघारणनिवृत्तिः ॥

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् ।

सू० द्रव्यविधिसन्निधौ संख्या तेषां गुणत्वात्स्यात् ॥ ११ ॥

ज्योतिष्टोमे श्रूयते 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणे'ति, तत्र संशयः किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतसङ्ख्या? उतैकस्य यस्य कस्य चित्? अथ वा माषाणाम्? आहोस्वित्सर्वैः सहितैः सम्पाद्या? किं चैकजातीयस्यैवानियमेन?। यद्वा पशूनां? तत्रापि किमनियमो? ऽथवा गवा?मिति, तत्र तस्येति षष्ठ्यन्तेन गवादीनि प्रधानत्वेनो[2]पदिश्य तद्गुणभूता सङ्ख्या विधीयमाना प्रतिप्रधानं सम्बध्यते, अतः प्रत्येकं द्वादशशतमिति प्रथमः पक्षः, नात्र गवाद्युद्देशेन सङ्ख्या विधीयते, न ह्येकेन वाक्येन गवादीनां दक्षिणात्वेन विधानं तद्गुणत्वेन च सङ्ख्याविधानं सम्भवति, तस्माद्गवादीनि द्रव्याणि सङ्ख्या च दक्षिणया सम्बध्यन्ते सोभयविशिष्टा विधीयते तत्रैकस्मिन्द्रव्ये निविष्टया सङ्ख्यया तद्विशिष्टा दक्षिणाऽनु

१ प्रयोजनाभावान्न पाक इति पा ।
२ प्रधानत्वेनाक्षिप्य पा ।

ष्टिता भवति, तस्मादेकस्य सङ्ख्या तत्राप्यनियमः विशेषाभावात् । अथवा माषाणां स्यादानन्तर्यात् नैतदपि युक्तं च–शब्दश्रुत्या ह्यन्यसहिता माषा निर्दिष्टाः तेनान्यसहितानां माषाणां सङ्ख्या तेषां च बहुत्वात्तस्येति प्रतिनिर्देशासम्भवात् तस्येति तु क्रतुनिर्देशोऽङ्गीकर्तव्यः । यद्वा गवादिस-माहाराभिप्रायं तस्येत्येकवचनं यदा च क्रतुनिर्देशः तदा यद्यपि च–शब्दो न स्यात्तथाऽपि गवादिद्रव्यविशिष्टा द्वादशशतसङ्ख्या विशिष्टा च दक्षिणा श्रुता सहितानि च गवादीनि दक्षिणा नैकैकमतो दक्षिणा परिच्छेदिका सङ्ख्या सर्वेषु सहितेषु निवेष्टुमर्हति, तस्मात्सर्वविषया सङ्ख्या, नैव न हि तस्येति शब्दो वाक्यगतेन द्रव्येण सम्बन्धं लभमानः प्रकृतिविशेषत्वं कुर्वन्प्रकृतेन क्रतुना सम्बन्ध्यमानत्वेन चावलम्बते, तस्मात्तस्येति गवा-दीनां निर्देशः तच्चैकवचनान्तत्वात् सहितानां सर्वेषां निर्देशः । नापि समाहारस्य तस्याशब्दत्वात् ॥

किं त्वेकजातीयकस्य, तत्राप्यनियमो विशेषाभावात् । अथवा पशूनामेव न माषादीनां तेषामाढकादिपरिमाणान्तरापेक्षया सङ्ख्या व्यवहारो लोके न स्वरूपतः भूतित्वाभावादिति दर्शितं भाष्ये, यत एव माषैरप्यनन्तरैर्न सम्बध्यते, अतः पशूनामेव, तत्राप्यनियमो ऽविशेषात्, एक-वचनान्तत्वाच्च तस्येति न बहुवचननिर्दिष्टानां माषादीनां निर्देशः । अत एवाजावीनामपि न निर्देशः गवादीनां चत्वारि परिशिष्टानि तत्र सर्वोप कक्कारसम्बन्धादर्थात् पशुत्वान्मुख्यत्वाच्च गवां निर्देशः, तेनायमर्थः गवादिद्र-व्याणि तत्र च तस्य गोद्वादशशतं दक्षिणेति तस्माद्गवामेषा सङ्ख्या ॥

विभक्त ऋत्विग्दक्षिणा दानाधिकरणम् ।

**सू॰ तस्य दानं विभागेन प्रदानानां पृथक्त्वात् ॥ १२ ॥**

किमेषा दक्षिणा ऋत्विग्भ्यो विभज्याविभज्य वा देया? किमविभ-ज्यैव? उत विभज्यैव? इति संशये विशेषाश्रवणादनियमः । अथ वा "ऋत्वि-ग्भ्यो दक्षिणां ददाती"ति दानाङ्गत्वेन ऋत्विग्बहुत्वस्य विवक्षितत्वादवि-भज्यैव सहितेभ्यो देया न विभज्यैकैकस्मै बहुवचनविरोधादिति प्राप्तेऽभि

धीयते—"ऋत्विक्परिक्रयार्थेन दानमेतदिति स्थितम्। तेन तेषां प्रधानत्वा-द्गुरुत्वं न विवक्षितम्", अतः प्रतिप्रधानावृत्तेरेकैकस्यैव तद्दानं, न चानियमः आनमनार्थे हि तद्दानं, यदि च दीयमानं द्रव्यमात्मोपयोगक्षमं भवति तेन सेवामानतिर्नान्यथा तेनात्मीयं द्रव्यमृत्विजामुपयोगक्षमं कुर्यादिति दानविधेरर्थः, विभज्य च ददता सम्पूर्णं तदनुष्ठितं भवति परिपदे तु ददता न तत्सम्पूर्णमनुष्ठितं स्यात्, पुनर्विभागापेक्षत्वात्तेषामुपयोगस्य "तुथो वो विश्ववेदा विभजत्वि"ति च मन्त्रवर्णस्यापार्थकत्वात् छागन्याये-नापि सिध्यति विभागः, यत्र त्वेकमेव द्रव्यं दक्षिणा यथा "धेनुर्दक्षिणा-ऽन्वाहार्यो दक्षिणे"ति तत्र विभागासम्भवादविभज्यैव दानम् ॥

ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम्।

**सू० समं स्यादश्रुतित्वात् ॥ १३ ॥**

स्थिते विभागे चिन्त्यते किं समो विभागः स्यात्? उत प्रयासानुरूपो-ऽथवा समाख्यानुरूप? इति, विशेषाश्रवणात्साम्ये लोकवद्वा प्रयासानुरूप्ये प्राप्ते द्वादशाहे दीक्षा क्रमवाक्यगताङ्गादिसमाख्यानात् ब्राह्मणाच्छंसि-प्रभृतीनां तदनुरूपो विभागः प्रकृतावध्यवसीयते ॥

भूर्नामैकाहे "तस्य धेनुः" इत्यनेन स्वस्थक्रतुदक्षिणाबाधाधिकरणम्।

**सू० तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्या-त्तद्विकारः स्याद्यथेष्टिर्गुण-शब्देन ॥ १४ ॥**

एवं प्रकृतौ दक्षिणास्थितिर्निरूपिता, तस्यां हि निरूपितायां विकृ-तिषु बाधाबाधविचारः सुखेन वर्तिष्यत इतीदानीं बाधाबाधौ विचा-र्येते, अस्ति भूर्नामैकाहः "यथेव भूर्वैश्वदेवस्तस्य धेनुर्दक्षिणे"ति, तत्र संशयः किं धेनुर्गवामेव विकार? उत सर्वस्य गवाश्वादे? रिति, तदर्थमिदं विचार्यते किं गवादीनां प्रत्येकं दक्षिणात्वम्? उत सहितानाम्? इति, तत्र प्रत्येकं दक्षि-णात्वं न्याय्यं, कथं गवादिशब्दा जातिवचनाः दक्षिणा—शब्दो गुणवचनः, स हि भृतित्वेन गुणेन वर्तते, जातिगुणयोश्च जातिर्विशेष्यत्वेन गुणस्तु विशेषणत्वेन नीलमुत्पलं शुक्लो गौरित्यादिषु सार्वजनीनमेतत्, यच्च विशेष्यं

तत्प्रधानमेव अतो गवादीनां प्राधान्यं प्राधान्यात्तेषां गुणभूता दक्षिणा प्रत्येकमेतैः सम्बध्यते गवादयो दक्षिणारूपाः कार्या इति, एवं बह्वीषु दक्षिणासु यस्याः कस्याश्चित्स्थाने निधीयमानाया धेन्वा दक्षिणात्वमुपपन्नं, तत्र गोलिङ्गेन धेनुत्वेन गवां निर्देश[1]न्निर्णीयते, तस्माद्गवामेव निर्दे[2]शिका धेनुर्नाश्वादीनामिति प्राप्ते ऽभिधीयते "गवादीनां प्रधानत्वे दृष्टं नास्ति प्रयोजनम्। ऋत्विगानमनार्था तु दक्षिणा सप्रयोजना" ॥ यदि च द्रव्योपसर्जनत्वेन दक्षिणोच्येत ततो गुणवचनत्वादाश्रयभूतगवादिद्रव्यगतवचनप्राप्तेर्गवादीनां बहुत्वाद्दक्षिणा-शब्दो बहुवचनान्तः स्यात्, गुणवचनशब्दस्य ह्याश्रयतो परोपसर्जनार्थत्वात्स्वप्राधान्ये तु नैव दोषो भवति, तथा हि यदाऽऽनतिकरत्वाद्दक्षिणेत्युच्यते एका चानतिरिति तदुपाधिको दक्षिणाशब्द एकवचनं लभते, गवादीनि तु तत्र विशेषणानि, न च विशेषणवशेन विशेष्ये सङ्ख्या सम्भवति यथाऽग्नीषोमौ देवतेति तेनानेकगवाद्यात्मिकैका दक्षिणा विधीयते, गवादिरूपया च भूत्वा दृष्टं प्रयोजनमृत्विगानमनभूतिरूपमस्त्येतैर्गवादिभिर्नास्ति दृष्टं, तस्मादेका दक्षिणा गवाद्यात्मिका प्रकृतौ विकृतौ धेन्वात्मिका चेति समस्तगवादिनिवृत्तिः ॥

यस्य सोममपहरेयुः इत्यादेः एका गाम् इत्यादिना गोगतसङ्ख्याबाधाधिकरणम्।

सू० एका पञ्चेति धेनुवत् ॥ १५ ॥

"यदि सोममपहरेयुरेकां गां दक्षिणां दद्यादभिदग्धे सोमे पञ्च वा दद्या"दिति श्रुतम्, तत्र संशयः किमेका पञ्च वा निर्वर्तिका किं वा सर्वस्य दाक्षिण्यस्येति, तदर्थमिदं विचार्यते किमेका दद्यादिति सम्बन्धः? उतैका गौः? इति तत्र 'द्वितीयाश्रुतिसामर्थ्याद्ददाति क्रियया ऽन्वयः। एकया पञ्चभिश्चातः सर्वं देयं निवर्तते ॥ उच्यते ददातिसङ्गतौ सत्यां गोशब्दे लक्षणा भवेत्। पाक्षिको वा ऽनुवादः स्याद्विधौ वाक्यं तु भिद्यते' ॥ बहुषु गवादिषु चोदकप्राप्तेषु एका दद्यादिति विहितं किं तदेकमित्यनिर्दिष्टं गा-

१ निर्देशनिर्णीयते इति पा०।
२ निर्देशिका इति पा०।

श्चोदकप्राप्तेषु यत्किंचिदिति गम्यते तत्र गामित्यश्वादीनामप्युपलक्ष-णार्थं स्यात्, गोरपि वा पूर्वं प्राप्तेः पाक्षिकोऽनुवादः स्यात्, न चैतदुभय-मपि न्याय्यम्। अथ त्वेकां दद्यात्तां च गामिति विधीयते ततः प्राप्तक्रिया-ऽनुवादेनानेकार्थविधानाद्वाक्यं भिद्येत, यदि तु गां दद्यादिति गोरेव दक्षिणा दाने विधीयते ततस्तस्याश्चोदकप्राप्तैव द्वादशशतसङ्ख्या परि-च्छेदिका प्राप्नोति पञ्चैकशब्दश्चानर्थकौ स्यातां विधाने वाक्यभेदः, अथ धेनुवद्विवक्षितैकसङ्ख्यगोविधानादेकशब्दोऽनुवादः तथाऽप्यानर्थक्यं पञ्च-शब्दस्यानुवाद एव, तस्मादेकशब्दानर्थक्यपरिजिहीर्षया श्रुतिलक्षणमपि क्रियासम्बन्धमविधाय वाक्यलक्षणो गोसङ्ख्यासम्बन्ध एव विधीयते। यद्वा भवतु सङ्ख्ययोर्दानेनैवान्वयः तथाऽपि ते प्रातिपदिकाभिहितसङ्ख्यात्व-साम्याद्द्वादशशतसंख्यास्थाने निविशेते, सा च यतो गोपरिच्छेदनेनोप-क्षयतीति तस्यानपतिते एकपञ्चसंख्ये गामेव परिच्छिन्द्यातामित्यश्वा-दीनामनिवृत्तिः॥

साद्यस्के त्रिवत्सेन सर्वेषां क्रयार्थानां बाधाधिकरणम्।

**सू॰ त्रिवत्सश्च॥ १९॥**

त्रिवत्सः साण्डः सोमक्रयण इत्यत्र तु साण्डानुवादेन त्रिवत्स-विधौ सत्यग्नीषोमीयादिष्वपि प्रसङ्गात्सोमक्रयण एव त्रिवत्सो विधीयत इति सर्वाणि क्रयद्रव्याणि निवर्तन्ते इति विशेषः॥

अश्वमेधे प्राकाशाविध्यनेनाध्वर्युभागबाधाधिकरणम्।

**सू॰ प्राकाशौ तथेति चेत्॥ १०॥**

अश्वमेधे श्रूयते "प्राकाशावध्वर्यवे ददाती"ति, तत्र संशयः किं प्रा-काशौ कृत्स्नस्य क्रतुदानविषयस्य निवर्तकौ? उताध्वर्युभागस्य निवर्तका-विति, यदि प्राकाशौ ददातीति सम्बन्धः ततः कृत्स्नस्य, अथ प्राकाशाव-ध्वर्यव इति ततस्तद्भागस्यैव तत्र "तद्दानन्तर्येसमाप्तं बाधित्वाऽध्वर्युल-क्षणम्। द्वितीयाश्रुतिसामर्थ्याद्ददातीति क्रियान्वयः॥ दानस्य चोदकप्राप्त-मुद्दिश्यते न चोद्दिश्यमध्वर्युणा शक्यं विशेष्टुं, तस्माद्धारं युङ्क्ते इत्येवम-ध्वर्यु-शब्दं कथंचिदृत्विङ्मात्रे व्याख्याय दानमात्रे प्राकाशविधिरिति

भावाद् ब्रह्मभागस्यैव निवृत्तिरिति विशेषाशङ्का, यद्यप्येकं वाक्यं तथाऽपि दक्षिणासंयोगात्सर्वनिवृत्तिरिति केचिदेवं वर्णयन्ति न त्वेतद्युक्तम् यत्रापि द्वे एव वाक्ये सोमचमसो दक्षिणेत्येकं स ब्रह्मणो देय इत्यपरं स्पष्टमेवातो नायं विशेषः, सिद्धान्तोऽप्ययुक्तः सति ह्येकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः स्यादिति वदामः, तस्मादेवं वक्तव्यम् यत्र हि केषां चिद्दक्षिणाद्रव्याणां प्रतिषेधः श्रूयते यथा सत्यां प्राप्तौ वडवे तस्माद्यूनं सोमचमसः सर्वस्यानिवर्त्तक इति विशेषाशङ्का सोमचमसस्तुल्यार्थोऽयमर्थवादो यस्यपू-न्द्यात्सोऽनृतं कुर्यादित्यादिने प्रतिषेधः तस्मात्पूर्ववत्सर्वनिवृत्तिः ॥

सोमचमसेन कृत्स्नदक्षिणा पुरुषान्तरापनयाधिकरणम् ।

**सू० यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ २० ॥**

मू० "सर्वे वा पुरुषापनयात्तासां क्रतुप्रधानत्वात्" इदं सूत्रद्वयं पूर्वोत्तरपक्षयोर्ज्ञानकथनार्थत्वेन व्याख्याय पुनरन्यथा व्याख्यातं सोमचमसो ब्रह्मणो दक्षिणा देय इत्येकमिदं वाक्यमिति कृत्वा चिन्त्यते यद्येकं वाक्यं तथाऽपि किं कृत्स्नस्य क्रतुदक्षिणस्य निवृत्तिः? उत ब्रह्मभागस्यैवेति दक्षिणासंयोगात् दक्षिणायाश्च चोदकेनैकत्वावाप्तत्वात्तत्संयुक्तचमसः सत्यपि ब्रह्मसंयोगे कृत्स्नां दक्षिणां निवर्तयेत्, इतरथा हि ब्रह्मभागे दक्षिणावचने दक्षिणा-शब्दो लक्षणया स्यात्, तस्माद्दक्षिणासंयोगात्कृत्स्ननिवृत्तिः, ब्रह्मसंयोगाच्च पुरुषान्तरापनय इत्येवमुत्सूत्रं पूर्वपक्षं कृत्वा यदि तु ब्रह्मण इति सिद्धान्ते वर्णयितव्यम् एकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः ब्रह्मणे दक्षिणात्वेन सोमचमसो देय इति न ह्येकं वाक्यं सोमचमसः क्रतोर्दक्षिणा नान्यस्मैऽपि तु ब्रह्मणे देयो नान्येभ्य इत्यर्थद्वयं शक्नोति विधातुं भिद्येत हि तथा वाक्यन्तस्माद्दक्षिणाश्रवणे ब्रह्मभागे दक्षिणा-शब्दमङ्गीकृत्य तत्रैव सोमचमसो विधातव्यः । किं च दक्षिणा-शब्दो भृतिवचनः स कर्मापेक्षयाऽपि प्रवर्तते यस्मिन् कर्मणीयं भृतिरिति, कर्त्रपेक्षयाऽपि प्रवर्तते यस्य पुरुषस्य कुर्वाणस्येयं भृतिरिति, तदिह यदि द्वे वाक्ये ततो यत्पुरुषविशेषासंयुक्तं तत्प्रकरणात् क्रतुना सम्बध्यमानं कर्त्रपेक्षयैव दक्षिणात्वं

चमसस्य विदधत् क्रतुगतं कृत्स्नं दाक्षिण्यं निवर्तयेद्, यदा पुरुषविशेष-संयुक्तमेतद् वाक्यं तदा तदपेक्षयैव दक्षिणात्वं चमसस्य विदधत्तद्भागमेव निवर्तयति, तद्भागश्च यद्यपि कृत्स्नापेक्षया दक्षिणावयवस्तथाऽपि प्रस्नापेक्षया भूतिस्त्वान्मुख्यैव दक्षिणेति न लक्षणाप्रसङ्गः तस्मादेकवाक्यत्वे प्रस्न-भागस्यैव निवृत्तिः सत्रे वा पुरुषाप्रयोगादिति कृत्वा चिन्तोद्घाटनम् ॥

वाजपेये रथस्य भागनियामकताधिकरणम् ।

सू॰ यजुर्युक्ते त्वध्वर्योर्दक्षिणाविकारः स्यात् ॥ २१ ॥

वाजपेये "सप्तदश रथा सप्तदश दास्य" इति दक्षिणा विधाय श्रूयते "यजुर्युक्तं रथमध्वर्यवे ददाती" ति तत्र संशय किं यजुर्युक्तो रथो ऽध्वर्युभागं निवर्तयेदि ? ति तत्र 'प्राकृतस्य चतुर्युक्तः स्यात्तद्भागस्य बाधकः । न चाय बाधकस्तस्य प्राकृतस्य नियमो ह्यसौ ॥ प्राकृतो ह्यपूर्वोऽध्वर्य्वैतन्-निकरत्वेन विधीयमानो युक्तः तत्र यत्तद्भागं प्राकृतं बाधेत इति, इह तु सप्तदशरथा द्रव्यान्तराणि च वाजपेयस्य दक्षिणात्वेन विहितानि इति तत्र यजुर्युक्तस्यापि रथस्य प्राप्तमेव दानं सत्यध्वर्यवे ऽन्यस्मै वा कस्मैचिदनुपातव्य मध्वर्योर्नियम्यते, ततश्च नायमर्थः यदध्वर्यवे ददाति तद्यजुर्युक्तं रथमिति किं तर्हि यजुर्युक्तं यद्ददाति तदध्वर्यवे इति तस्य च द्रव्यान्तरसहितस्यैव दानं प्राप्तमिति तादृशस्यैव नियमाच्च द्रव्यान्तरनिवृत्तिः, अध्वर्युभागे तु यथा प्राप्ते यजुर्युक्तो नियम्यते ॥

इति शास्त्रदीपिकायां दशमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## अथ चतुर्थः पाद आरभ्यते ॥

आग्न्यादेः नारिष्टहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् ।

सू॰ प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

नक्षत्रेष्टौ श्रूयते "सोऽ[1]नुजुहोती" ति तत्र मन्त्रा आम्नाता "अग्नये स्वाहा कृत्तिकाभ्य स्वाहा" इत्येवमादयः सन्ति च प्रकृतौ नारिष्टहोमा-

१ सोऽत्र जुहोतीति पा० ।

तत्र संशयः, किं वैकृतैरुपहोमैः प्राकृता नारिष्टहोमा बाध्यन्ते ? किं वा समुच्चय ? इति, तदर्थं च किं वैकृताः प्राकृतानां कार्यं वर्त्तन्ते ने[1]ति तत्रोपहोमाः कार्यमपेक्षमाणाः होमत्वसामान्यात्प्राकृतहोमकार्यं उपस्थिते तत्रैव विधीयन्ते, तस्मिंश्च कार्ये प्रत्यक्षश्रुतैरुपहोमैर्निर्वर्तिते तत्कार्यकराः प्राकृता निवर्त्तन्ते शरैरिव कुशा इति प्राप्ते ब्रूमः—'सति प्राकृतकार्यत्वे भवेद्बाधो न चास्ति तत् । साधारणं न होमत्वं तस्योपस्थापनक्षमम्" ॥ सर्वसाधारणं हि होमत्वं न नारिष्टकार्यमुपस्थापयितुमर्हति, विधीयमानस्य तु होमविशेषस्य दूरापास्तमेव तदुपस्थापकत्वमदृष्टार्थत्वाच्च होमानां प्रमाणान्तरमपि तत्कार्यकरत्वे नास्ति, न च प्रत्यक्षश्रुतैरुपहोमैर्निराकाङ्क्षा विकृतिः प्राकृतमित्यभावं नापेक्षत इति वाच्यं संनिपातिनां द्रव्यदेवतासंस्कारादीनामलाभे कथंभावस्यापरिपूर्णत्वात्, तस्मादुभयेषामभ्युच्चयः स्यादतिदेशोपदेशाभ्यामवगतत्वात्, यदुक्तमाद्येऽभ्युच्चयं वक्ष्याम इति तदिदं शरास्तु बर्हिःशब्दलक्षिते कुशकार्ये विहिता युक्तं यत्कुशान्बाधन्ते तदिदमुक्तं "चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधाना"दिति । यद्वाऽधिकरणान्तरमिदम् उभयोः कुशशरयोः प्रमाणावगतत्वात्समुच्चयः प्राकृतकार्यत्वाच्च निवृत्तिः, एवं वा वाजपेये श्रूयते "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोमी"ति प्रकृतावुपावर्तध्वमिति मन्त्रेण दर्भाभ्यां स्तोत्रोपाकरणं तदिह किं रथो दर्भयोर्निवर्तकः घोषश्च मन्त्रस्य ? उत रथस्य घोष उभयोर्निवर्तकः ? इति संशय, तदर्थं च किमयं समाहारद्वन्द्वो रथेन घोषेण चे?ति किं वा षष्ठीतत्पुरुषः ? तत्र षष्ठीसमासपक्षे पूर्वपदस्य लक्षणा स्यात्, अतः समाहारद्वन्द्वः तेन रथः घोषश्च द्वयमुपाकरणसाधनं तत्र रथो द्रव्यत्वसामान्यात् दर्भयोर्निवर्तकः, घोषस्तु मन्त्रस्य शब्दत्वसामान्यात् एवं च नावश्यं रथस्यैव घोष आदर्तव्यः घोषस्याविशेषणात्, येन केन चिदपि घोषेण कार्यसिद्धिरिति प्राप्ते ब्रूमः—इतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिरसं स्यात्तया तु रथघोषाभ्यामिति द्विवचनं स्यात्, समाहाराश्रयणे तु द्वे अपि पदे लक्षणार्थे

---

१ निर्वर्तिते इति पा० ।

महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम् ।

सू० उपगे[1]येषु शरवत्स्यात्प्रकृतिलि-ङ्गसंयोगात् ॥ ५ ॥

गवामयने महाव्रतं नामैकाहः, तत्र दिक्षु दुन्दुभयो वदन्तीत्यादि विधाय श्रूयते पत्न्य उपगायन्तीति प्राकृतं च सामगानमृत्विजश्चोपगातारः प्राप्ताः तेन पत्न्य उपगायन्त्यः किं सामगानस्योपगातॄणामृत्विजां निवर्तिकाः? किं वा दुन्दुभ्यादिवादित्रवादनानुपगायन्त्यो भिन्नविषयत्वादृत्विजामनिवर्तिकाः? इदमपरं सन्दिह्यते किं गानस्योपचय उपगानम्? उतोपचयात्मकं गानमुपगानम्? इति, तत्र गानस्योपचय उपगानं गान-शब्दश्च शारीरोऽङ्गतो प्रसिद्धः, तस्माद्गानस्योपचयदुन्दुभ्यादिभिः कुर्वन्त्य ऋत्विजां निवर्तिकाः? भवतु वोपचयात्मकं गानमुपगानं तथाऽपि गायतेः शारीरगीतिवचनत्वाच्छारीरमेवेदमुपगानं तच्छारीरस्योपचयो भवति समानजातीयत्वात्, अतः सामगानस्यैवोपगाने पत्न्यो वर्तेरन्निति ऋत्विजां निवृत्तिः–उच्यते नायमेकान्तः शारीर एव गायतिरिति तन्त्रीगतेऽपि प्रयोगात्, ततश्च यद्यपि गानस्येदमुपगानं तथाऽपि दुन्दुभ्यादीनां गाना-नामनन्तरविहितानां विपरिवर्तमानानामिदमुपगानं पत्नीभिः कर्तव्यम् अपि चोपचयात्मकं गानमुपगानं सामानाधिकरण्यलाभात्, तच्च काण्ड-वीणादिभिः क्रियमाणं न कथंचिच्छारीरं सम्भवति तेन वादित्रादि-कमिदमुपगानं तस्यैवोपचय इति दुन्दुभ्यादीनां गानानां समान-जातीयत्वात्प्रत्यासन्नत्वाच्च तेषामेवेदमुपगानं पत्न्यः कुर्वन्तीति न साम-विषयाणामृत्विजां निवृत्तिः ॥

अञ्जनाभ्यञ्जने नवनीता-भ्यञ्जनस्य गौग्गुलवाभ्यञ्जना-दिभिः समुच्चयाधिकरणम् ।

सू० संस्कारे चान्यसंयोगात् ॥ ६ ॥

अस्त्यञ्जनाभ्यञ्जनं नाम सत्रं तत्र श्रूयते गौग्गुलवेन प्रातः सवने ऽभ्यञ्जत इत्यादि तत्किं प्राकृतस्य नवनीताभ्यञ्जनस्य निवर्तकं नेति संशये दृष्टार्थत्वात् अञ्जनाभ्यञ्जनयोः प्राकृतस्य वैकृतेन निवृत्तिः, प्राप्ते,

---

१ उपगे इति ।

दृष्टार्थमभ्यञ्जनं तथाऽपि नैकार्थ्ये नवनीताभ्यञ्जनस्य स्नेहनार्थत्वाद्गौगुलवादेस्तु चन्दनानुलेपनवत्सुरभीकरणार्थत्वात्, न च प्राकृतेऽभ्यञ्जने गुणविधिः प्रातःसवन इति च गौगुलवेनेति चानेकगुणश्रवणात् ॥

महाव्रते यजमानवाससः तार्प्यादिभिः समुच्चयाधिकरणम् ।

सू० आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् ॥ ७ ॥

महाव्रते श्रूयते "तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी"ति तत्र संशयः किं तार्प्यं दर्भमयञ्च चोदकप्राप्तस्याहतस्य वाससो निवर्तकं ने? ति तत्र कौपीनाच्छादने परिदधातीति प्रयुज्यते तस्मिंश्च तार्प्येण कृते तत्कार्यस्याहतस्य निवृत्तिः, नैवं काम्यतं परिधत्त इत्युपरिवासस्यापि दर्शनात् तार्प्यदर्भमययोश्च कौपीनाच्छादने ऽनीवायेत्यस्यातत्राप्याहारप्राप्तस्योत्तरीयस्य स्थाने विधीयते । किं चाधिकमिदं तार्प्यादिपरिधानं वासांसि विध्वंसयतीति वासोवत्त्वानुवाददर्शनात्, तस्मादुपरिधारणे तार्प्यादिविधिरित्याहतस्यानिवृत्तिः ॥

महाव्रते रथन्तरादिषु साम्सु श्लोकादिसामभिः समुच्चयाधिकरणम् ।

सू० सामस्वर्थान्तरश्रुतेरविकारः प्रतीयते[1] ॥ ८ ॥

तत्रैव श्रूयते 'श्लोकेन पुरस्तात्सदसः स्तुवीतेति अनुश्लोकेन पश्चादि"त्यादि तत्र श्लोकादिभिः सामभिः प्राकृतानां गायत्र्यादिसाम्नां निवृत्तिर्नवे' ति सन्देहे स्तुत्यर्थत्वान्निवृत्तिः स्यादेवं यदि प्राकृतस्तुत्यनुवादेन सामान्तरं विधीयेत न त्वेवमस्ति, न हि प्राप्तस्तुत्यनुवादेन सामान्तरं पुरस्तात्सदस इति च देशान्तरं शक्यं विधातुम्, अतः स्तुतिरेवात्र विधेया, सा चादृष्टार्था न प्राकृतीनां निवर्तिका भवितुमर्हति एककार्यत्वानवगमात् तदेतद्गतप्रायं विस्पष्टीकरणार्थम् उत्तरविवक्षया वा अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् क्वचिच्छ्रूयते कौत्सं भवति काण्वं भवति वसिष्ठस्य जनित्रे भवतः क्रोशानि भवन्तीति किं कौत्सादीनि सामानि प्राकृताना

1 प्रतीयेतेति पा० ।

प्राकृतीषु ऋच्चावापप्राप्तिः असत्याश्च प्राप्तौ कथं परिसंख्या तस्मा द्विधिरेव गायत्र्यादिष्वाश्रापस्य नैतदेव कौत्सं भवतीत्यादिषु साम-मात्रमुपदिश्यते तद्योनिभूतायास्तृचो नोपदेशेन नातिदेशेन प्राप्तिः, यदि परमक्लृप्तकल्पनाभयादध्ययनसिद्धरूपान्यथाभावभयाच्च स्वयोनावेव गीयते तच्चायुक्तं प्राकृत्यो हि ऋच प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारिता: सामानि च प्रतिसंस्कार्यत्वात्प्रधानभूता इहापि स्तोत्राङ्गत्वेनातिदेशतः प्राप्ता न शक्यन्ते बाधितुम्, यत प्राकृतीष्वेव ऋक्षु प्रत्यक्षश्रुताऽन्यान्यप्यमानानि च सर्वाण्यपूर्वाणि सामानि गेयानीति प्राप्ते आवापे परिसंख्यार्थमेव वचनम् एवमेवकारः समर्थितो भवति यत्प्रयत्नस्य तु यथा स्वयोनावेव स्वयं नैतत्तयोरेव गानं तथा वक्ष्याम तस्मात्प्रथमानेत्या वापोद्वापौ ॥

यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् ।

सू॰ विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ १९ ॥

दर्शपूर्णमासयोः श्रूयते आग्नेयोऽष्टाकपाल इति बहूनि चाग्नेरभिधानानि वह्निः शुचिः पावक इत्यादीनि तत्र तद्वाक्येषु निगमेषु येन केनचिच्छब्देनाग्नेरभिधानं कर्तव्यम्? उत विधिगतेनैवाग्निशब्देन? इति 'तत्र देवताया विधायाग्नेश्चोदना विनिवर्तते । प्रयोगकाले उद्देशो येन केनापि सिध्यति । आग्नेयी देवताकर्तव्य इत्यस्यार्थश्चोदनार्थं तस्य शब्देनोद्दिश्यमानस्य देवतात्वमिति प्रयोगावस्थायां शब्दोच्चारणमापततीति तथा पक्षे तु नास्ति प्रमाणं पावक-शब्देनापि बुद्धिस्थमाने चोदनाभिहितम् निदेवतास्य सम्पादितमेव भवति, तस्मादनियम इति प्राप्ते कोविदाय दाहु - प्रत्ययमर्थस्यैव देवतात्वं चोदनयोच्यते तस्य त्विदमेव देवतात्वं यच्छब्देनोद्देश्यः तेन तच्छब्दोच्चारणमेव पुरुषस्य व्यापारः सम्प्रदाने यासौ नियोक्तव्य तेनार्थस्यापि देवतात्वमुक्त्वा तस्याविज्ञाय पर्यवस्यन्ती चोदना शब्दोच्चारणं यावद्विधान पर्यवस्यति तथा चावस्थाया विधिगतस्य शब्दस्य संनिहितस्य परित्यागे कारणाभावात्तदुच्चारणमेव विधौ

